व
२९६२

महाभूतबिबेक = पान = ५७ स्लोक
८८

देवो = कलपित भेद =

ॐ
१९१

॥ ॐ ॥

उतपत्ति = प्रलयचैव = भूतानामगती =
अवगति = वेती बिद्यां = अबी द्याच =
सभगवान उच्यते ।

॥ ॐ ॥

नौमी इयते भ्रवपुषेतडिदंबराय =
गुंजावतंसपरिपिच्छलसन्
मुखाय वन्येस्त्रजे = कवललवेत्र
बिषाण वेएतलक्ष्मी श्रीयै =
मृदुपते = रूपशुपांगजाया = १

ॐ॥ श्री गणेशजी ॐ
गुरु जी की जनमतीथी
फागन सुदी ४ वार सुकर
ॐ॥ हरी ॐ =
गुरु जी की मुरतीस्थापन = चत
बदी २ बृसपत वार

ॐ श्रीगणेसायनमः ॐ

वीसयग्रंथका प्रतिपाद्य=प्रतीपा
द्यकसंबंद्यछ=१=

पातनकाईघ कारीका प्राप्यप्रप्यक
भावसंबंद्यछ=२=ईघ कारीकावीचा
रका क्रती क्रतव्यभावसंबंघछ=३=
सानाका ग्रंथका जन्यजन्यकभव
संबंघछ=४=

दोः=जीतनांपात्रस्पासहोवाउतना आवनीर=१
ज्यासिहोवप्रबंघ तैसा मीतनसरीर=
जोजाकसरणरवताकूं ताकोंलाज=
उलटजात मछली चाल बहुतजात गजराज=२

सुरिय=चंद्रग्रहणसुत
कानिरणय=सुरियकोच्यार
पहर=४=चंद्रमाका=३=पहर
पातिलगताहै=

(ॐ सानिश्चरदा नबिचार
चोथ= नोमी= चतुरदसी=
४= ९= =१४=
तीथि= बार सनी= नक्षत्र=
असनि= भ्रणि= पूर्व्य= जैति
नु= उतरामन= तो सनी जि
मांड= मुख= मध्या मदेना=

प्रमेगतसंसय=

जीवप्रमातमाको भेद सत्य है वा
अभेद सत्य छः नीचय अभेसत्य छै
सुध्याचेतन को हीप्रमेय मांनाई=
अद्वितीय आतमारूप= साक्षीचे
तन्यहीप्रमेय है= प्रापता देवेतो
तत्वानुसंधानाईतावप्रछेद=
[illegible]४२

नमन्ति फलिनो वृक्षा नमन्ति गुणिनो जना
शुष्क काष्ठानि मूर्खं च न नमन्ति कदाचन

केसरीचंद जोसी

डाकखानेके सामने

मु: सीकर



# वेदान्तसमुच्चयः।

संग्रहकर्ता

ब्रह्मर्षि हरेराम शर्मा.



# वेदान्तसमुच्चयः ।



## श्रीमच्छङ्कराचार्यैर्विरचित-

### वेदान्तस्तोत्राणां सञ्चयरूपः ।

अयं

ीगुर्जरदेशान्तर्गतसाबरमतीगङ्गातटे अहमदाबादस्थेन
औदीच्यटोळकज्ञातीयशाण्डिल्यगोत्रोत्पन्नब्रह्मर्षि-
सुन्नरामतनुजनुषा
ब्रह्मर्षिहरेरामशर्मणा

मुंबय्यां
निर्णयसागरमुद्रणालये मुद्रयित्वा प्रकाशितः ।



---

शकाब्दाः १८३७, संवत् १९७१, सन १९१५.

---

मूल्यम् रु. २-८-०

॥ श्रीः ॥

# ॐ विचारो वरीवर्ति ।

## प्रस्तावना

विदांकुर्वंतु विद्वांसः यत्प्रभूततत्त्वविद्यात्मभूते भारते वर्षे प्राचीनसमयादेवारभ्य तत्त्वविद्याविवादो वरीवर्ति। उपनिषत्सु तत्समयनिबद्धान्यग्रंथेषु च आत्मानात्मविचारस्योहापोहादिकं यत्प्रादुर्भूतं तदद्यावधि न्यूनाधिकत्वेनालोक्यते। तदेतत् बौद्धोदयावसरे क्रमेणापचीयमानं प्रायो नामशेषतामुपगतमभूत्। बौद्धानां प्रचारातिशयं तत्त्वविद्यां च नामशेषामवलोक्य श्रीकुमारिलभट्टस्य प्रयत्नेन वेदानां वेदान्तस्य च पुनरुद्धारोऽजायत । श्रीशंकरभगवत्पूज्यपादशंकराचार्येण च साकल्येन पुनरुज्जीवितम्। तदारभ्य वेदांतशास्त्रस्यैवोच्चपदं प्राप्तम् । श्रीशंकरभगवतः जन्मसमयादिनिर्णयार्थं बहुभिरत्रत्यैः पाश्चात्यैश्च विद्वद्भिर्महान् प्रयासो विहितः। यद्यपि कियान् मतभेदस्तदपि प्रायः षट्शतसंख्याककलिगतवर्षासन्नसमये श्रीशंकरभगवतः प्रादुर्भाव इति ग्रन्थकर्तृणां मतम्॥ श्रीभगवतो जनकः शिवगुरुः सर्वशास्त्रपारंगम आसीत्, जननी च सती नाम्नी। ताभ्यां श्रीमहेश्वरं [illegible]ासनया पुत्ररत्नं लब्धमतः श्रीशंकर इति नाम्नालमकुरुताम्। [illegible] द्वात्रिंशद्वर्षवयोवधि नानादेशेषु पण्डितैर्भिन्नमतावलंबिभिर्वादं विरच्य तान् पराजित्य स्वमतमङ्गीकारितम्। साक्षात् शंकरस्यावतार इति आर्यावर्ते प्रायः सर्वत्र सर्वैरपि प्रमाण्यते। प्रायः सर्वेषु

श्रीशंकराचार्यप्रणीतेषु स्तोत्रेष्वलौकिकशक्त्यतिशय उत्साहश्च समेधमानौ संलक्ष्येते । कवेर्वाचि प्रसादातिशयः दिव्यपुरुषवाचि श्रद्धोत्पादकः प्रभावः द्वयमप्येतत् ब्रह्मात्मैक्यदशापरमानंदसंदोहसंयुक्तं स्तोत्रेषु परिभासते। निष्कैवल्यं ब्रह्म अवर्ण्यमगम्यं च, किंतु सगुणब्रह्मणि सच्चिदानन्दगुणान् वेदान्तप्रतिपादितान् स्तोत्राण्येतानि स्वयं उद्भासयंते । श्रीशंकरभगवद्वाचि नित्यत्वं चिदात्मता परमानंदश्च समेताः संदृश्यन्ते ॥ श्रीशंकरभगवतः ब्रह्मदशानुभवस्थितौ सहजोद्भूतानीव प्रायशो बहूनि स्तोत्राणि प्रतिभान्ति । श्रीशंकरभगवतः स्तोत्रेषु प्रायो निम्नलिखितानि तत्वानि संलक्ष्यन्ते—

१ परमेश्वरकृपयैव मोक्षप्राप्तिः सुसाध्या ।

२ ज्ञानमेव मोक्षप्राप्तेरेकं साधनम् । "ज्ञानविहीने सर्वमनेन मुक्तिर्न भवति जन्मशतेन" ॥ चर्पटपंजरिका ॥

३ "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ।" इति जीवब्रह्मणोरैक्यम् ।

चर्पटपंजरिकास्तोत्रं तु सरलभाषया सर्वमेव वेदान्ततत्त्वं हृदि प्रबोधयति । संक्षेपतः वक्ष्यमाणे श्रीशंकरभगवन्निर्मितानि स्तोत्राणि पाठमात्रेण श्रवणेनापि मनसि शुद्धिं मननेन च मनःशुद्धिदार्ढ्यं निदिध्यासनेन च ब्रह्मीभावं शाश्वतं जनयन्ति, इति शिवम् ।

विद्वत्कृपाभिलाषी

ब्रह्मर्षिः श्रीहरेरामशर्मा ।

# स्तोत्रानुक्रमणिका.



स्तो. सं. पृष्ठम्.



श्रीमच्छंकरभगवत्पादाचार्याः ।

नौमीड्य तेऽभ्रवपुषे तडिदम्बराय=
गुञ्जावतंसपरिपिच्छलसन्मुखाय:
वन्यस्रजे कवलवेत्रविषाणवेणु=ल
क्ष्मश्रिये मृदुपदे पशुपाङ्गजाय=



ब्रम्हर्षि श्री हरेराम शर्मा.

The Bombay Art Printing Works Fort.





# वेदान्तसमुच्चयः ।

## प्रातःस्मरणस्तोत्रम् ॥ १ ॥

ॐ परमात्मने नमः ॥ प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं सच्चित्सुखं परमहंसगतिं तुरीयम् । यत्स्वप्नजागरसुषुप्तमवैति नित्यं तद्ब्रह्म निष्कलमहं न च भूतसंघः ॥ १ ॥ प्रातर्भजामि मनसो वचसामगम्यं वाचो विभान्ति निखिला यदनुग्रहेण । यन्नेति नेति वचनैर्निगमा अवोचुस्तं देवदेवमजमच्युतमाहुरग्र्यम् ॥ २ ॥ प्रातर्नमामि तमसः परमर्कवर्णं पूर्णं सनातनपदं पुरुषोत्तमाख्यम् । यस्मिन्निदं जगदशेषमशेषमूर्तौ रज्ज्वां भुजङ्गम इव प्रतिभासितं वै ॥ ३ ॥ श्लोकत्रयमिदं पुण्यं लोकत्रयविभूषणम् । प्रातःकाले पठेद्यस्तु स गच्छेत्परमं पदम् ॥ ४ ॥ इति श्रीभगवत्पादाचार्यविरचितं प्रातःस्मरणस्तोत्रं संपूर्णम् ॥ १ ॥

## मुमुक्षुपञ्चकम् ॥ २ ॥

ॐ परमात्मने नमः । विहायैनः कृत्वा क्रतुविधुरकर्मादिविहितं धियं संशोध्याऽऽस्वा चिदचिदवलोकादिनिकरम् । समाराध्याऽऽचार्यं नतिविमतिशुश्रूषणमुखैः प्रपन्नः सन् पृच्छेद् विविदिषितमात्मीयमखिलम् ॥ १ ॥ विचार्याऽऽत्मानं स्वं

श्रुतिगदितसच्चित्सुखमयं परंब्रह्मासीति श्रवणमननध्यानकरणैः । अहं ब्रह्मासीति दृढमवगतिं गम्य परमां विनाध्येदं दृश्यं सकलमलमज्ञानसहितम् ॥ २ ॥ विदित्वेत्थं तत्त्वं निखिलनिगमान्तैर्निगदितं निहत्वाऽनर्थं वै सकलमपि जीवातु सहितम् । परानन्दो भूत्वा भवति भुवि भव्यो भुपति भो विधेयं कर्त्तव्यं विविधमपि हेयं हृदिगतम् ॥ ३ ॥ मुदो जीवन्मुक्तेर्यदि हृदि मनीषा स्वविदुपस्तदा वृत्तिं वृत्तेरनिशमभिकुर्वन् बहुतिथम् । विनाश्यैव स्थौल्यं मलिनतरसत्त्वस्य मनसः सुसत्त्वाविर्भावात् परमसुखसिंधौ हि सुरमेत् ॥ ४ ॥ सुभूमिं प्राप्येमां परमसुखदां पञ्चमसुखां सुखं भुक्त्वा प्राह्णं दृढतरनिजारब्धमपि च । विलाप्येदं विश्वं जगदगमयं हेतुसहितं चिदानन्दे शुद्धे भजति च विदेहामृतमयम् ॥ ५ ॥ इति मुमुक्षुपञ्चकं समाप्तम् ॥ २ ॥

---

## वैराग्यपञ्चकम् ॥ ३ ॥

ॐ परमात्मने नमः ॥ शिलं किमनलं भवेदनलमौदरं वाधितुं पयः प्रसृतिपूरकं किमु न धारकं सारसम् । अयत्नमलमल्पकं पथि पटच्चरं कच्चरं भजन्ति विबुधा मुधा अहह कुक्षितः कुक्षितः ॥ १ ॥ दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकायै रचितोऽयमञ्जलिः । यदञ्जनाभं निरपायमस्ति नो धनञ्जयस्यन्दनभूषणं धनम् ॥ २ ॥ काचाय नीचं कमनीयवाचा मोचाफलस्वादमुचा न याचे । दयाकुचेले धनदत्कुचेले स्थितेऽकुचेले श्रितमाकुचेले ॥ ३ ॥ क्षोणीकोणशतांशपालनखलदुर्वारवर्गानलक्षुभ्यत्क्षुद्रनरेन्द्रचाटुरचनां धन्यां न मन्यामहे । देवं

सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा धानामुष्टिमुचे कुचेलमुनये धत्ते स वित्तेशताम् ॥ ४ ॥ शरीरपतनावधि प्रभु-निषेवणापादनादबिन्धनधनंजयप्रशमदं धनं दन्धनम् । धनंज-यविवर्धनं धनमुदूढगोवर्धनं सुसाधनमबाधनं सुमनसां समा-राधनम् ॥ ५ ॥ इति श्रीसर्वतन्त्रस्वतन्त्रवेदान्ताचार्यकृतं वैरा-ग्यपञ्चकं संपूर्णम् ॥ ३ ॥

---

## साधनपञ्चकम् ॥ ४ ॥

ॐ परमात्मने नमः ॥ वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् । पापौघः परिधूयतां भवसुखे दोषोऽनुसंधीयतामात्मे-च्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥ १ ॥ सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढा धीयतां शान्त्यादिः परि-चीयतां दृढतरं कर्माशु संत्यज्यताम् । सद्विद्वानुपसर्प्यतां प्रति-दिनं तत्पादुके सेव्यतां ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥ वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसंधीयताम् । ब्रह्मैवास्मि विभाव्यतामहरहर्गर्वः परित्यज्यतां देहेऽहंमतिरु-ज्झ्यतां बुधजनैर्वादः परित्यज्यताम् ॥ ३ ॥ क्षुद्व्याधिश्च चिकि-त्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन संतुष्यताम् । शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यतामौदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्य-मुत्सृज्यताम् ॥ ४ ॥ एकान्ते सुखमास्यतां परतरे चेतः समा-

धीयतां पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् । प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम् ॥ ५ ॥ यः श्लोकपञ्चकमिदं पठते मनुष्यः संचिन्तयत्यनुदिनं स्थिरतामुपेत्य । तस्याशु संसृतिदवानलतीव्रघोरतापः प्रशान्तिमुपयाति चितिप्रसादात् ॥ ६ ॥ इति श्रीमच्छंकराचार्यविरचितं साधनपञ्चकं संपूर्णम् ॥ ४ ॥

## काशीपञ्चकम् ॥ ५ ॥

ॐ परमात्मने नमः ॥ मनोनिवृत्तिः परमोपशान्तिः सा तीर्थवर्या मणिकर्णिका च । ज्ञानप्रवाहा विमलादिगङ्गा सा काशिकाहं निजबोधरूपा ॥ १ ॥ यस्यामिदं कल्पितमिन्द्रजालं चराचरं भाति मनोविलासम् । सच्चित्सुखैका परमात्मरूपा सा का० ॥ २ ॥ कोशेषु पञ्चस्वधिराजमाना बुद्धिर्भवानी प्रतिदेहगेहम् । साक्षी शिवः सर्वगणोन्तरात्मा सा का० ॥३॥ काश्यां हि काश्यते काशी काशी सर्वप्रकाशिका । सा काशी विदिता येन तेन प्राप्ता हि काशिका ॥ ४ ॥ काशीक्षेत्रं शरीरं त्रिभुवनजननी व्यापिनी ज्ञानगङ्गा भक्तिः श्रद्धा गयेयं निजगुरुचरणध्यानयोगः प्रयागः । विश्वेशोऽयं तुरीयः सकलजनमनःसाक्षिभूतोऽन्तरात्मा देहे सर्वं मदीये यदि वसति पुनस्तीर्थमन्यत्किमस्ति ॥ ५ ॥ इति श्रीमच्छंकराचार्यविरचितं काशीपञ्चकं संपूर्णम् ॥ ५ ॥

---

## मनीषापञ्चकम् ॥ ६ ॥

ॐ परमात्मने नमः ॥ सत्याचार्यस्य गमने कदाचिन्मुक्तिदायकम् । काशीक्षेत्रं प्रति सह गौर्या मार्गे तु शंकरम् ॥ १ ॥ अन्त्यवेषधरं दृष्ट्वा गच्छ गच्छेति चाब्रवीत् । शंकरः सोऽपि चाण्डालस्तं पुनः प्राह शंकरम् ॥ २ ॥ अन्नमयादन्नमयमथवा चैतन्यमेव चैतन्यात् । द्विजवर दूरीकर्तुं वाञ्छसि किं ब्रूहि गच्छ गच्छेति ॥ ३ ॥ किं गङ्गाम्बुनि बिम्बितेऽम्बरमणौ चाण्डालवाटीपयःपूरे चान्तरमस्ति काञ्चनघटीमृत्कुम्भयोर्वाम्बरे । प्रत्यग्वस्तुनि निस्तरङ्गसहजानन्दावबोधाम्बुधौ विप्रोऽयं श्वपचोऽयमित्यपि महान् कोयं विभेदभ्रमः ॥ ४ ॥ जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी । सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञापि यस्यास्ति चेच्चाण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥ ५ ॥ ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं सर्वं चैतदविद्यया त्रिगुणयाशेषं मया कल्पितम् । इत्थं यस्य दृढा मतिः सुखतरे नित्ये परे निर्मले चाण्डलोऽस्तु० ॥ ६ ॥ शश्वन्नश्वरमेव विश्वमखिलं निश्चित्य वाचा गुरोर्नित्यं ब्रह्म निरन्तरं विमृशता निर्व्याजशान्तात्मना । भूतं भावि च दुष्कृतं प्रदहता संविन्मये पावके प्रारब्धाय समर्पितं स्ववपुरित्येषा० ॥ ७ ॥ या तिर्यङ्नरदेवताभिरहमित्यन्तः स्फुटा गृह्यते यद्भासा हृदयाक्षदेहविषया भान्ति स्वतोऽचेतनाः । तां भास्यैः पिहितार्कमण्डलनिभां स्फूर्तिं सदा भावयन्योगी निर्वृतमानसो हि गुरुरित्येषा० ॥ ८ ॥ यत्सौख्याम्बुधिलेशलेशत इमे शक्रादयो निर्वृता यच्चित्ते नितरां प्रशान्तकलने लब्ध्वा

मुनिर्निर्वृतः । यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मविद्यः कश्चित्स सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥ ९ ॥
इति श्रीमच्छंकराचार्यविरचितं मनीषापञ्चकं संपूर्णम् ॥ ६ ॥

---

## आत्मपञ्चकम् ॥ ७ ॥

ॐ परमात्मने नमः ॥ नाहं देहो नेन्द्रियाण्यन्तरङ्गं नाहंकारः प्राणवर्गो न बुद्धिः । दारापत्यक्षेत्रवित्तादिदूरः साक्षी नित्यः प्रत्यगात्मा शिवोऽहम् ॥ १ ॥ रज्ज्वज्ञानाद्भाति रज्जुर्यथाहिः स्वात्माज्ञानादात्मनो जीवभावः । आप्तोक्त्या हि भ्रान्तिनाशे स रज्जुर्जीवो नाहं देशिकोक्त्या शिवोऽहम् ॥२॥ आभातीदं विश्वमात्मन्यसत्यं सत्यज्ञानानन्दरूपे विमोहात् । निद्रामोहात्स्वप्नवत्तन्न सत्यं शुद्धः पूर्णो नित्य एकः शिवोऽहम् ॥ ३ ॥ मत्तो नान्यत्किंचिदत्रास्ति विश्वं सत्यं बाह्यं वस्तु मायोपक्लृप्तम् । आदर्शान्तर्भासमानस्य तुल्यं मय्यद्वैते भाति तस्माच्छिवोऽहम् ॥ ४ ॥ नाहं जातो न प्रवृद्धो न नष्टो देहस्योक्ताः प्राकृताः सर्वधर्माः । कर्तृत्वादिश्चिन्मयस्यास्ति नाहंकारस्यैव ह्यात्मनो मे शिवोऽहम् ॥ ५ ॥ नाहं जातो जन्ममृत्यू कुतो मे नाहं प्राणः क्षुत्पिपासे कुतो मे । नाहं चित्तं शोकमोहौ कुतो मे नाहं कर्ता बन्धमोक्षौ कुतो मे ॥ ६ ॥
इति श्रीमच्छंकराचार्यविरचितमात्मपञ्चकस्तोत्रं संपूर्णम् ॥७॥

---

## आत्मषट्कम् ॥ ८ ॥

ॐ परमात्मने नमः ॥ मनोबुद्ध्यहंकारचित्तानि नाहं न च श्रोत्रजिह्वे न च घ्राणनेत्रे । न च व्योम भूमिर्न तेजो न

वायुश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ १ ॥ न च प्राण-
संज्ञो न वै पञ्चवायुर्न वा सप्तधातुर्न वा पञ्चकोशः । न
वाक्पाणिपादं न चोपस्थपायुश्चिदानन्द० ॥ २ ॥ न मे द्वेष-
रागौ न मे लोभमोहौ मदो नैव मे नैव मात्सर्यभावः । न
धर्मो न चार्थो न कामो न मोक्षश्चिदानन्द० ॥ ३ ॥ न पुण्यं
न पापं न सौख्यं न दुःखं न मन्त्रो न तीर्थं न वेदा न यज्ञाः ।
अहं भोजनं नैव भोज्यं न भोक्ता चिदानन्द० ॥ ४ ॥ न
मृत्युर्न शङ्का न मे जातिभेदः पिता नैव मे नैव माता च
जन्म । न बन्धुर्न मित्रं गुरुर्नैव शिष्यश्चिदानन्द० ॥ ५ ॥
अहं निर्विकल्पो निराकाररूपो विभुत्वाच्च सर्वत्र सर्वेन्द्रिया-
णाम् । न चासंगतं नैव मुक्तिर्न मेयश्चिदानन्दरूपः शिवोऽहं
शिवोऽहम् ॥ ६ ॥ इति श्रीमच्छंकराचार्यविरचितमात्म-
षट्कस्तोत्रं संपूर्णम् ॥ ८ ॥

---

## निर्वाणाष्टकम् ॥ ९ ॥

ॐ परमात्मने नमः ॥ भेदाभेदौ सपदि गलितौ पुण्यपापे
विशीर्णे मायामोहौ क्षयमुपगतौ नष्टसन्देहवृत्तेः । शब्दातीतं
त्रिगुणरहितं प्राप्य तत्त्वावबोधं निस्त्रैगुण्ये पथि विचरतः को
विधिः को निषेधः ॥ १ ॥ यद्वात्मानं सकलवपुषामेकमन्त-
र्बहिस्थं दृष्ट्वा पूर्णं खमिव सततं सर्वभाण्डस्थमेकम् । नान्य-
त्कार्यं किमपि च ततः कारणाद्भिन्नरूपं निस्त्रैगुण्ये पथि विच-
रतः को विधिः को निषेधः ॥ २ ॥ हेम्नः कार्यं हुतवहगतं
हेममेवेति यद्वत्क्षीरे क्षीरं समरसतया तोयमेवाम्बुमध्ये । एवं
सर्वं समरसतया त्वंपदं तत्पदार्थे निस्त्रैगुण्ये पथि विचरतः

को विधिः को निषेधः ॥ ३ ॥ यस्मिन्विश्वं सकलभुवनं सामरस्यैकभूतमुर्वी ह्यापोऽनलमनिलखं जीवमेवं क्रमेण । यत्क्षाराब्धौ समरसतया सैन्धवैकत्वभूतं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ४ ॥ यद्वन्नद्यौ दधिसमरसौ सागरत्वं ह्यवाप्तौ तद्वज्जीवालयपरिगतौ सामरस्यैकभूताः । भेदातीतं परिलयगतं सच्चिदानन्दरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ५ ॥ दृष्ट्वा वेद्यं परमथपदं स्वात्मबोधस्वरूपं बुद्ध्वात्मानं सकलवपुषामेकमन्तर्बहिस्थम् । भूत्वा नित्यं सदुदिततया स्वप्रकाशस्वरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ६ ॥ कार्याकार्ये किमपि सततं नैव कर्तव्यमस्ति जीवन्मुक्तस्थितिरवगतो दग्धवस्त्रावभासः । एवं देहे प्रविलयगते तिष्ठमानो विमुक्तो निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७ ॥ कस्मात्कोऽहं किमपि च भवान्कोऽयमत्र प्रपञ्चः स्वं स्वं वेद्यं गगनसदृशं पूर्णतत्त्वप्रकाशम् । आनन्दाख्ये समरसघने बाह्यमन्तर्विहीने निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ८ ॥ सत्यं सत्यं परमममृतं सर्वकल्याणरूपं मायारण्ये दहनममलं शान्तिनिर्वाणदीपम् । तेजोरूपं निगमसदनं व्यासपुत्राष्टकं यः प्रातःकाले पठति मनसा याति निर्वाणमार्गे ॥ ९ ॥ इति श्रीमहर्षिशुकदेवमुनिविरचितं निर्वाणाष्टकं संपूर्णम् ॥ ९ ॥

---

हरि ॐ॥ ॐ॥

## निर्वाणदशकम् ॥ १० ॥

ॐ परमात्मने नमः ॥ न भूमिर्न तोयं न तेजो न वायुर्न खं नेन्द्रियं वा न तेषां समूहः । अनैकान्तिकत्वात्सुषुप्त्येकसि-

द्रूस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १ ॥ न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणा ध्यानयोगादयोऽपि । अनात्माश्रयोऽहं ममाध्यासहीनात्तदेको० ॥ २ ॥ न माता पिता वा न देवा न लोका न वेदा न यज्ञा न तीर्थं ब्रुवन्ति । सुषुप्तौ निरस्तातिशून्यात्मकत्वात्तदेको० ॥ ३ ॥ न सांख्यं न शैवं न तत्पाञ्चरात्रं न जैनं न मीमांसकादेर्मतं वा । विशिष्टानुभूत्या विशुद्धात्मकत्वात्तदेको० ॥ ४ ॥ न शुक्लं न कृष्णं न रक्तं न पीतं न पीनं न कुब्जं न ह्रस्वं न दीर्घम् । अरूपं तथा ज्योतिराकारकत्वात्तदेको० ॥ ५ ॥ न जाग्रन्न मे स्वप्नको वा सुषुप्तिर्न विश्वो न वा तैजसः प्राज्ञको वा । अविद्यात्मकत्वात्त्रयाणां तुरीयं तदेको० ॥ ६ ॥ न शास्ता न शास्त्रं न शिष्यो न शिक्षा न च त्वं न चाहं न चायं प्रपञ्चः । स्वरूपावबोधाद्विकल्पासहिष्णुस्तदेको० ॥ ७ ॥ न चोर्ध्वं न चाधो न चान्तर्न बाह्यं न मध्यं न तिर्यङ् न पूर्वा परा दिक् । वियद्व्यापकत्वादखण्डैकरूपस्तदेको० ॥ ८ ॥ अपि व्यापकत्वादितत्वात्प्रयोगात् स्वतःसिद्धभावादनन्याश्रयत्वात् । जगत्तुच्छमेतत्समस्तं तदन्यस्तदेको० ॥ ९ ॥ न चैकं तदन्यद्द्वितीयं कुतः स्यान्न चाकेवलत्वं न वा केवलत्वात् । न शून्यं न चाशून्यमद्वैतकत्वात्कथं सर्ववेदान्तसिद्धं ब्रवीमि ॥ १० ॥ इति श्रीमच्छंकराचार्यविरचितं निर्वाणदशकस्तोत्रं संपूर्णम् ॥ १० ॥

---

## आचार्यकृतषट्पदी ॥ ११ ॥

ॐ परमात्मने नमः ॥ अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम् । भूतदयां विस्तारय तारय संसार-

सागरतः ॥ १ ॥ दिव्यधुनीमकरन्दे परिमलपरिभोगसच्चिदानन्दे । श्रीपतिपदारविन्दे भवभयखेदच्छिदे वन्दे ॥ २ ॥ सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् । सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥ ३ ॥ उद्धृतनग नगभिदनुज दनुजकुलामित्र मित्रशशिदृष्टे । दृष्टे भवति प्रभवति न भवति किं भवतिरस्कारः ॥ ४ ॥ मत्स्यादिभिरवतारैरवतारवताऽवता वसुधाम् । परमेश्वर परिपाल्यो भवता भवतापभीतोऽहम् ॥ ५ ॥ दामोदर गुणमन्दिर सुन्दरवदनारविन्द गोविन्द । भवजलधिमथनमन्दर परमं दरमपनय त्वं मे ॥ ६ ॥ नारायण करुणामय शरणं करवाणि तावकौ चरणौ । इति षट्पदी मदीये वदनसरोजे सदा वसतु ॥ ७ ॥ इति श्रीमच्छंकराचार्यविरचितं षट्पदीस्तोत्रं संपूर्णम् ॥ ११ ॥

---

## धन्याष्टकम् ॥ १२ ॥

ॐ परमात्मने नमः ॥ तज्ज्ञानं प्रशमकरं यदिन्द्रियाणां तज्ज्ञेयं यदुपनिषत्सु निश्चितार्थम् । ते धन्या भुवि परमार्थनिश्चितेहाः शेषास्तु भ्रमनिलये परिभ्रमन्ति ॥ १ ॥ आदौ विजित्य विषयान्मदमोहरागद्वेषादिशत्रुगणमाहृतयोगराज्याः । ज्ञात्वाऽमतं समनुभूय परात्मविद्याकान्तासुखा वत गृहे विचरन्ति धन्याः ॥ २ ॥ त्यक्त्वा गृहे रतिमतो गतिहेतुभूतामात्मेच्छयोपनिषदर्थरसं पिबन्तः । वीतस्पृहा विषयभोगपदे विरक्ता धन्याश्चरन्ति विजनेषु विरक्तसङ्गाः ॥ ३ ॥ त्यक्त्वा ममाहमिति बन्धकरे पदे द्वे मानावमानसदृशाः समदर्शिनश्च । कर्तारमन्यमवगम्य तदर्पितानि कुर्वन्ति कर्मपरिपाकफलानि

धन्याः ॥ ४ ॥ त्यक्त्वैपणात्रयमवेक्षितमोक्षमार्गा भैक्ष्यामृतेन परिकल्पितदेहयात्राः । ज्योतिः परात्परतरं परमात्मसंज्ञं धन्या द्विजा रहसि हृद्यवलोकयन्ति ॥ ५ ॥ नासन्न सन्न सदसन्न महन्न चाणु न स्त्री पुमान्न च नपुंसकमेकबीजम् । यैर्ब्रह्म तत्समनुपासितमेकचित्ता धन्या विरेजुरितरे भवपाशबद्धाः॥६॥ अज्ञानपङ्कपरिमग्नमपेतसारं दुःखालयं मरणजन्मजरावसक्तम् । संसारबन्धनमनित्यमवेक्ष्य धन्या ज्ञानासिना तदवशीर्य विनिश्चयन्ति ॥ ७ ॥ शान्तैरनन्यमतिभिर्मधुरस्वभावैरेकत्वनिश्चितमनोभिरपेतमोहैः । साकं वनेषु विजितात्मपदस्वरूपं शास्त्रेषु सम्यगनिशं विमृशन्ति धन्याः ॥ ८ ॥ अहिरिव जनयोगं सर्वदा वर्जयेद्यः कुणपमिव सुनारीं त्यक्तुकामो विरागी । विषमिव विषयान्यो मन्यमानो दुरन्तान् जयति परमहंसो मुक्तिभावं समेति ॥ ९ ॥ संपूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमा गाङ्गं वारि समस्तवारिनिवहः पुण्याः समस्ताः क्रियाः । वाचः प्राकृतसंस्कृताः श्रुतिशिरो वाराणसी मेदिनी सर्वावस्थितिरस्य वस्तुविषया दृष्टे परब्रह्मणि ॥ १० ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं धन्याष्टकस्तोत्रं समाप्तम् ॥ १२ ॥

---

## विज्ञाननौका ॥ १३ ॥

ॐ परमात्मने नमः ॥ तपोयज्ञदानादिभिः शुद्धबुद्धिर्विरक्तो नृपादौ पदे तुच्छबुद्ध्या । परित्यज्य सर्वं यदाप्नोति तत्त्वं परं ब्रह्म नित्यं तदेवाहमस्मि ॥ १ ॥ दयालुं गुरुं ब्रह्मनिष्ठं प्रशान्तं समाराध्य मत्या विचार्य स्वरूपम् । यदाप्नोति

तत्त्वं निदिध्यास्य विद्वान्परं ब्रह्म० ॥ २ ॥ यदानन्दरूपं प्रकाशस्वरूपं निरस्तप्रपञ्चं परिच्छेदशून्यम् । अहंब्रह्मवृत्त्यैकगम्यं तुरीयं परं ब्रह्म० ॥ ३ ॥ यदज्ञानतो भाति विश्वं समस्तं विनष्टं च सद्यो यदात्मप्रबोधे । मनोवागतीतं विशुद्धं विमुक्तं परं ब्रह्म० ॥ ४ ॥ निषेधे कृते नेति नेतीति वाक्यैः समाधिस्थितानां यदाभाति पूर्णम् । अवस्थात्रयातीतमेकं तुरीयं परं ब्रह्म० ॥ ५ ॥ यदानन्दलेशैः समानन्दि विश्वं यदाभाति सत्त्वे तदाभाति सर्वम् । यदालोचने रूपमन्यत्समस्तं परं ब्रह्म०॥६॥ अनन्तं विभुं सर्वयोनिं निरीहं शिवं सङ्गहीनं यदोङ्कारगम्यम् । निराकारमत्युज्ज्वलं मृत्युहीनं परं ब्रह्म० ॥ ७ ॥ यदानन्दसिन्धौ निमग्नः पुमान्स्यादविद्याविलासः समस्तप्रपञ्चः । यदा न स्फुरत्यद्भुतं यन्निमित्तं परं ब्रह्म० ॥ ८ ॥ स्वरूपानुसंधानरूपां स्तुतिं यः पठेदादराद्भक्तिभावो मनुष्यः । शृणोतीह वा नित्यमुद्युक्तचित्तो भवेद्विष्णुरत्रैव वेदप्रमाणात् ॥ ९ ॥ विज्ञाननावं परिगृह्य कश्चित्तरेद्यदज्ञानमयं भवाब्धिम् । ज्ञानासिना यो हि विच्छिद्य तृष्णां विष्णोः पदं याति स एव धन्यः ॥ १० ॥ इति श्रीमच्छंकराचार्यविरचिता विज्ञाननौका संपूर्णा ॥ १३ ॥

---

## द्वादशपञ्जरिका ( मोहमुद्गर ) स्तोत्रम् ॥ १४ ॥

ॐ परमात्मने नमः ॥ मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम् । यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम् ॥ १ ॥ अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् । पुत्रादपि धनभाजां भीतिः सर्वत्रैषा

विहिता नीतिः ॥ २ ॥ का ते कान्ता कस्ते पुत्रः संसारोऽय-
मतीव विचित्रः । कस्य त्वं कः कुत आयातस्तत्त्वं चिन्तय
यदिदं भ्रातः ॥ ३ ॥ मा कुरु जनधनयौवनगर्वं हरति निमे-
षात्कालः सर्वम् । मायामयमिदमखिलं हित्वा ब्रह्मपदं त्वं
प्रविश विदित्वा ॥ ४ ॥ कामं क्रोधं मोहं लोभं त्यक्त्वात्मानं
भावय कोऽहम् । आत्मज्ञानविहीना मूढास्ते पच्यन्ते नरकनि-
गूढाः ॥ ५ ॥ सुरमन्दिरतरुमूलनिवासः शय्या भूतलमजिनं
वासः । सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः
॥ ६ ॥ शत्रौ मित्रे पुत्रे बन्धौ मा कुरु यत्नं निग्रहसंधौ । भव
समचित्तः सर्वत्र त्वं वाञ्छस्यचिराद्यदि विष्णुत्वम् ॥ ७ ॥
त्वयि मयि चान्यत्रैको विष्णुर्व्यर्थं कुप्यसि सर्वसहिष्णुः। सर्व-
स्मिन्नपि पश्यात्मानं सर्वत्रोत्सृज भेदज्ञानम् ॥ ८ ॥ प्राणा-
यामं प्रत्याहारं नित्यानित्यविवेकविचारम् । जाप्यसमेतसमा-
धिविधानं कुर्ववधानं महदवधानम् ॥ ९ ॥ नलिनीदलगतस-
लिलं तरलं तद्वज्जीवितमतिशयचपलम् । विद्धि व्याध्यभिमान-
ग्रस्तं लोकं शोकहतं च समस्तम् ॥ १० ॥ का तेऽष्टादशदेशे
चिन्ता वातुल तव किं नास्ति नियन्ता । यस्त्वां हस्ते सुदृढ-
निबद्धं बोधयति प्रभवादिविरुद्धम् ॥ ११ ॥ गुरुचरणाम्बुज-
निर्भरभक्तः संसारादचिराद्भव मुक्तः । सेन्द्रियमानसनियमा-
देवं द्रक्ष्यसि निजहृदयस्थं देवम् ॥ १२ ॥ द्वादशपञ्जरिकामय
एषः शिष्याणां कथितो ह्युपदेशः । येषां चित्ते नैव विवेकस्ते
पच्यन्ते नरकमनेकम् ॥ १३ ॥ इति श्रीमच्छंकराचार्यविर-
चितं द्वादशपञ्जरिकास्तोत्रं संपूर्णम् ॥ १४ ॥

---

## चर्पटपञ्जरिकास्तोत्रम् ॥ १५ ॥

ॐ परमात्मने नमः ॥ दिनमपि रजनी सायं प्रातः शिशिरवसन्तौ पुनरायातः । कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः ॥ १ ॥ भज गोविन्दं भज गोविन्दं भज गोविन्दं मूढमते । प्राप्ते सन्निहिते मरणे नहि नहि रक्षति डुकृञ्करणे । ( ध्रुवपदम् ) । अग्रे वह्निः पृष्ठे भानू रात्रौ चुबुकसमर्पितजानुः । करतलभिक्षा तरुतलवासस्तदपि न मुञ्चत्याशापाशः । भज गो० ॥ २ ॥ यावद्वित्तोपार्जनसक्तस्तावन्निजपरिवारो रक्तः । पश्चाद्धावति जर्जरदेहे वार्तां पृच्छति कोऽपि न गेहे । भज गो० ॥ ३ ॥ जटिलो मुण्डी लुञ्चितकेशः काषायाम्बरबहुकृतवेषः । पश्यन्नपि च न पश्यति मूढ उदरनिमित्तं बहुकृतवेषः । भज गो० ॥ ४ ॥ भगवद्गीता किंचिदधीता गङ्गाजललवकणिका पीता । सकृदपि यस्य मुरारिसमर्चा तस्य यमः किं कुरुते चर्चाम् । भज गो० ॥ ५ ॥ अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम् । वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशापिण्डम् । भज गो० ॥ ६ ॥ बालस्तावत्क्रीडासक्तस्तरुणस्तावत्तरुणीरक्तः । वृद्धस्तावच्चिन्तामग्नः परे ब्रह्मणि कोऽपि न लग्नः । भज गो० ॥ ७ ॥ पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम् । इह संसारे भवदुस्तारे कृपयाऽपारे पाहि मुरारे । भज गो० ॥ ८ ॥ पुनरपि रजनी पुनरपि दिवसः पुनरपि पक्षः पुनरपि मासः । पुनरप्ययनं पुनरपि वर्षं तदपि न मुञ्चत्याशामर्षम् । भज गो० ॥ ९ ॥ वयसि गते कः कामविकारः शुष्के नीरे कः कासारः । नष्टे द्रव्ये कः परिवारो ज्ञाते तत्त्वे कः संसारः । भज गो०

॥ १० ॥ नारीस्तनभरनाभिनिवेशं मिथ्यामायामोहावेशम्। एतन्मांसवसादिविकारं मनसि विचारय वारंवारम् । भज गो० ॥ ११ ॥ कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः। इति परिभावय सर्वमसारं विश्वं त्यक्त्वा स्वप्नविचारम् । भज गो० ॥ १२ ॥ गेयं गीता नामसहस्रं ध्येयं श्रीपतिरूपमजस्रम्। नेयं सज्जनसङ्गे चित्तं देयं दीनजनाय च वित्तम्। भज गो० ॥ १३ ॥ यावज्जीवो निवसति देहे कुशलं तावत्पृच्छति गेहे। गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन्काये। भज गो० ॥ १४ ॥ सुखतः क्रियते रामाभोगः पश्चाद्धन्त शरीरे रोगः। यद्यपि लोके मरणं शरणं तदपि न मुञ्चति पापाचरणम्। भज गो० ॥ १५ ॥ रथ्याचर्पटविरचितकन्थः पुण्यापुण्यविवर्जितपन्थः। नाहं न त्वं नायं लोकस्तदपि किमर्थं क्रियते शोकः । भज गो० ॥ १६ ॥ कुरुते गङ्गासागरगमनं व्रतपरिपालनमथवा दानम् । ज्ञानविहीने सर्वमनेन मुक्तिर्न भवति जन्मशतेन। भज गो० ॥ १७॥ इति श्रीमच्छंकराचार्यविरचितं चर्पटपञ्जरिकास्तोत्रं संपूर्णम् ॥१५॥

---

## सदाचारस्तोत्रम् ॥ १६ ॥

ॐ परमात्मने नमः ॥ सच्चिदानन्दरूपाय जगदङ्कुरहेतवे। सदोदिताय पूर्णाय नमोऽनन्ताय विष्णवे ॥ १ ॥ सर्ववेदान्तसिद्धान्तैर्ग्रथितं निर्मलं शिवम्। सदाचारं प्रवक्ष्यामि योगिनां ज्ञानसिद्धये ॥ २ ॥ प्रातः स्मरामि देवस्य सवितुर्भर्ग आत्मनः। वरेण्यं तद्धियो यो नश्चिदानन्दः प्रचोदयात् ॥ ३ ॥ अन्वयव्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तिषु। यदेकं केवलं ज्ञानं तदेवाहं

परं बृहत् ॥ ४ ॥ ज्ञानाज्ञानविलासोऽयं ज्ञानाज्ञानेन शाम्यति । ज्ञानाज्ञाने परित्यज्य ज्ञानमेवावशिष्यते ॥ ५ ॥ अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः । असङ्गोऽहमिति ज्ञात्वा शौचमेतत्प्रचक्षते ॥ ६ ॥ मन्मनो मीनवन्नित्यं क्रीडत्यानन्दवारिधौ । सुस्नातस्तेन पूतात्मा सम्यग्विज्ञानवारिणा ॥ ७ ॥ अथाघमर्षणं कुर्यात् प्राणापाननिरोधतः । मनः पूर्णे समाधाय मग्नकुम्भो यथार्णवे ॥ ८ ॥ लयविक्षेपयोः संधौ मनस्तत्र निरामिषम् । स संधिः साधितो येन स मुक्तो नात्र संशयः ॥ ९ ॥ सर्वत्र प्राणिनां देहे जपो भवति सर्वदा । हंसः सोहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ १० ॥ तर्पणं स्वसुखेनैव स्वेन्द्रियाणां प्रतर्पणम् । मनसा मन आलोक्य स्वयमात्मा प्रकाशते ॥ ११ ॥ आत्मनि स्वप्रकाशेऽग्नौ चित्तमेकाहुतिं क्षिपेत् । अग्निहोत्री स विज्ञेय इतरे नामधारकाः ॥ १२ ॥ देहो देवालयः प्रोक्तो देही देवो निरञ्जनः । अर्चितः सर्वभावेन स्वानुभूत्या विराजते ॥ १३ ॥ मौनं स्वाध्यायश्च ध्यानं ध्येयब्रह्मानुचिंतनम् । ज्ञानेनेति तयोः सम्यग्निषेधान्तप्रदर्शनम् ॥ १४ ॥ अतीतानागतं किंचिन्न स्मरामि न चिन्तये । रागद्वेषं विना प्राप्तं भुञ्जाम्यत्र शुभाशुभम् ॥ १५ ॥ हठाभ्यासो हि संन्यासो नैव काषायवाससा । नाहं देहोऽहमात्मेति निश्चयो न्यासलक्षणम् ॥ १६ ॥ अभयं सर्वभूतानां दानमाहुर्मनीषिणः । निजानन्दे स्पृहा नान्यद्वैराग्यस्यावधिर्मतः ॥ १७ ॥ वेदान्तश्रवणं कुर्यात् मननं चोपपत्तिभिः । योगेनाभ्यसनं नित्यं ततो दर्शनमात्मनः ॥ १८ ॥ शब्दशक्तेरचिन्त्यत्वाच्छब्दादेवापरोक्षधीः । प्रसुप्तपुरुषो यद्वच्छब्दे नैवा-

नुबुध्यते ॥ १९ ॥ आत्मानात्मविवेकेन ज्ञानं भवति निर्मलम् । गुरुणा बोधितः शिष्यः शब्दब्रह्मातिवर्तते ॥ २० ॥ न त्वं देहो नेन्द्रियाणि न प्राणो न मनो न धीः । विकारित्वाद्विनाशित्वाद् दृश्यत्वाच्च घटो यथा ॥ २१ ॥ विशुद्धं केवलं ज्ञानं निर्विशेषं निरंजनम् । यदेकं परमानंदं तत्त्वमस्यद्वयं परम् ॥ २२ ॥ शब्दस्याद्यन्तयोः सिद्धं मनसोऽपि तथैव च । मध्ये साक्षितया नित्यं तदेव त्वं भ्रमं जहि ॥ २३ ॥ स्थूलवैराजयोरैक्यं सूक्ष्महैरण्यगर्भयोः । अज्ञानमाययोरैक्यं प्रत्यग्विज्ञानपूर्णयोः ॥ २४ ॥ चिन्मात्रैकरसे विष्णौ ब्रह्मात्मैक्यस्वरूपके । भ्रमेणैव जगज्जातं रज्ज्वां सर्पभ्रमो यथा ॥ २५ ॥ तार्किकाणां च जीवेशौ वाच्यावेतौ विदुर्बुधाः । लक्ष्यौ च सांख्ययोगाभ्यां वेदान्तैरैकता तयोः ॥ २६ ॥ कार्यकारणवाच्यांशौ जीवेशौ योजहच्च तौ । अजहच्च तयोर्लक्ष्यौ चिदंशावेकरूपिणौ ॥ २७ ॥ कर्मशास्त्रे कुतो ज्ञानं तर्के नैवास्ति निश्चयः । सांख्ययोगौ भिदापन्नौ शाब्दिकाः शब्दतत्पराः ॥ २८ ॥ अन्ये पाषण्डिनः सर्वे ज्ञानवार्तासु दुर्बलाः । एकं वेदान्तविज्ञानं स्वानुभूत्या विराजते ॥ २९ ॥ अहं ममेत्ययं बन्धो ममाहं नेति मुक्तता । बन्धमोक्षौ गुणैर्भाति गुणाः प्रकृतिसंभवाः ॥ ३० ॥ ज्ञानमेकं सदा भाति सर्वावस्थासु निर्मलम् । मन्दभाग्या न जानन्ति स्वरूपं केवलं बृहत् ॥३१॥ संकल्पसाक्षिणं ज्ञानं सर्वलोकैकजीवनम् । तदस्मीति च यो वेद स मुक्तो नात्र संशयः ॥ ३२ ॥ प्रमाता च प्रमाणं च प्रमेयप्रमितिस्तथा । यस्य भासावभासेत मानं ज्ञानाय तस्य किम् ॥ ३३ ॥ अर्थाकारा भवेद्वृत्तिः फलेनार्थः प्रकाश्यते ।

अर्थज्ञानं विजानाति स एवार्थः पर स्मृतः ॥ ३४ ॥ वृत्ति-
व्याप्यत्वमेवास्तु फलव्याप्तिः कथं भवेत् । स्वप्रकाशस्वरूप-
त्वात्सिद्धत्वाच्च चिदात्मनः ॥ ३५ ॥ अर्थादर्थे यदा वृत्तिर्गन्तुं
चलति चान्तरे । निराधारा निर्विकारा या दशा सोन्मनी
स्मृता ॥ ३६ ॥ चित्तं चिच्च विजानीयात् तकाररहितं यदा ।
तकारविपयाध्यासं जपारागो यथा मणौ ॥ ३७ ॥ ज्ञेयवस्तु-
परित्यागाज्ज्ञानं तिष्ठति केवलम् । त्रिपुटी क्षीणतामेति ब्रह्म-
निर्वाणमृच्छति ॥ ३८ ॥ मनोमात्रमिदं सर्वं तन्मनोऽज्ञानमा-
त्रकम् । अज्ञानं भ्रम इत्याहुर्विज्ञानं परमं पदम् ॥ ३९ ॥
अज्ञानं चान्यथाज्ञानं मायामेतां वदंति ते । ईश्वरं मायिनं
विद्यान्मायातीतं निरंजनम् ॥ ४० ॥ सदानन्दे चिदाकाशे
माया मेघस्तडिन्मनः । अहंता गर्जनं तत्र धारासारो हि वृत्तयः
॥ ४१ ॥ महामोहान्धकारेऽस्मिन् देवो वर्पति लीलया । अस्या
वृष्टेर्विरामाय प्रबोधैकसमीरणः ॥ ४२ ॥ ज्ञानं दृग्दृश्ययो-
र्भावं विज्ञानं दृश्यशून्यता । एकमेवाद्वयं ब्रह्म नेह नानास्ति
किंचन ॥ ४३ ॥ क्षेत्रक्षेत्रज्ञयोर्ज्ञानं तज्ज्ञानं ज्ञानमुच्यते ।
विज्ञानं चोभयोरैक्यं क्षेत्रज्ञपरमात्मनोः ॥ ४४ ॥ परोक्षं शास्त्र-
जं ज्ञानं विज्ञानं चात्मदर्शनम् । आत्मनो ब्रह्मणः सम्यगुपा-
धिद्वयवर्जितम् ॥ ४५ ॥ त्वमर्थविपयं ज्ञानं विज्ञानं तत्पदाश्र-
यम् । पदयोरैक्यबोधस्तु ज्ञानविज्ञानसंज्ञकम् ॥ ४६ ॥ आत्मा-
नात्मविवेकस्य ज्ञानमाहुर्मनीपिणः । अज्ञानं चान्यथा लोके
विज्ञानं तन्मयं जगत् ॥ ४७ ॥ अन्वयव्यतिरेकाभ्यां सर्वत्रैकं
प्रपश्यति । यत्तु वृत्तिजं ज्ञानं विज्ञानं ज्ञानमात्रकम् ॥४८॥
अज्ञानध्वंसकं ज्ञानं विज्ञानं चोभयात्मकम् । ज्ञानविज्ञाननिष्ठे

तत्सद्ब्रह्मणि चार्पितम् ॥ ४९ ॥ भोक्ता सत्त्वगुणः शुद्धो भोगानां साधनं रजः । भोग्यं तमोगुणं प्राहुरात्मा चैषां प्रकाशकः ॥ ५० ॥ ब्रह्माध्ययनसंयुक्तो ब्रह्मचर्यरतः सदा । सर्वं ब्रह्मेति यो वेद ब्रह्मचारी स उच्यते ॥ ५१ ॥ गृहस्थो गुणमध्यस्थः शरीरं गृहमुच्यते । गुणाः कुर्वंति कर्माणि नाहं कर्तेति बुद्धिमान् ॥ ५२ ॥ किमुग्रैश्च तपोभिश्च यस्य ज्ञानमयं तपः । हर्षामर्षविनिर्मुक्तो वानप्रस्थः स उच्यते ॥ ५३ ॥ सदाचारमिमं नित्यं ये च संदधते बुधाः । संसारसागराच्छीघ्रं मुच्यंते नात्र संशयः ॥ ५४ ॥ इति श्रीमच्छंकराचार्यविरचितं सदाचारस्तोत्रं संपूर्णम् ॥ १६ ॥

---

## ब्रह्मज्ञानावली ॥

ॐपरमात्मने नम। ॐतत्सद्ब्रह्मणे नमः ॥ सकृच्छ्रवणमात्रेण ब्रह्मज्ञानं यतो भवेत् । ब्रह्मज्ञानावली माला सर्वेषां मोक्षसिद्धये ॥१॥ असंगोऽहमसंगोऽहमसंगोऽहं पुनः पुनः । सच्चिदानंदरूपोऽहमहमेवाहमव्ययः॥२॥ नित्यशुद्धविमुक्तोऽहं निराकारोऽहमव्ययः । भूमानंदस्वरूपोऽहमहमेवाहमव्ययः॥ ३ ॥ नित्योऽहं निरवद्योऽहं निराकारोऽहमच्युतः । परमानंदरूपोऽहमहमेवाहमव्ययः ॥ ४ ॥ शुद्धचैतन्यरूपोऽहमात्मारामोऽहमेव च । अखंडानंदरूपोऽहमहमे० ॥ ५ ॥ प्रत्यक्चैतन्यरूपोऽहं शांतोऽहं प्रकृतेः परः । शाश्वतानंदरूपोऽहमहमे० ॥ ६ ॥ तत्त्वातीतः परात्माहं मध्यातीतः परः शिवः । मायातीतः परं ज्योतिरहमे० ॥ ७ ॥ नामरूपव्यतीतोऽहं चिदाकारोऽहमच्युतः । सुखरूपस्वरूपोऽहमहमे० ॥ ८ ॥ मायातत्कार्यदेहादि मम

नास्त्येव सर्वदा । स्वप्रकाशैकरूपोऽहमहमे० ॥ ९ ॥ गुणत्रयव्यतीतोऽहं ब्रह्मादीनां च साक्ष्यहम् । अनंतानंदरूपोऽहमहमे० ॥ १० ॥ अंतर्यामिस्वरूपोऽहं कूटस्थः सर्वगोऽस्म्यहम् । परमात्मस्वरूपोऽहमहमे० ॥ ११ ॥ निष्कलोऽहं निष्क्रियोऽहं सर्वात्माद्यः सनातनः । अपरोक्षस्वरूपोऽहमहमे० ॥ १२ ॥ द्वंद्वादिसाक्षिरूपोऽहमचलोऽहं सनातनः । सर्वसाक्षिस्वरूपोऽहमहमे० ॥ १३ ॥ प्रज्ञानघन एवाहं विज्ञानघन एव च । अकर्ताहमभोक्ताऽहमहमे० ॥ १४ ॥ निराधारस्वरूपोऽहं सर्वाधारोऽहमेव च । आप्तकामस्वरूपोऽहमहमे० ॥ १५ ॥ तापत्रयविनिर्मुक्तो देहत्रयविलक्षणः । अवस्थात्रयसाक्ष्यस्मि चाहमेवा० ॥ १६ ॥ दृग्दृश्यौ द्वौ पदार्थौ स्तः परस्परविलक्षणौ । दृग् ब्रह्म दृश्यं मायेति सर्ववेदांतडिंडिमः ॥ १७ ॥ अहं साक्षीति यो विद्याद्विविच्यैवं पुनः पुनः । स एव मुक्तः सो विद्वानिति वेदांतडिंडिमः ॥ १८ ॥ घटकुड्यादिकं सर्वं मृत्तिकामात्रमेव च । तद्वद्ब्रह्म जगत्सर्वमिति वेदांतडिंडिमः ॥१९॥ ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः । अनेन वेद्यं सच्छास्त्रमिति वेदांतडिंडिमः ॥ २० ॥ अंतर्ज्योतिर्बहिर्ज्योतिः प्रत्यग्ज्योतिः परात्परः । ज्योतिर्ज्योतिः स्वयंज्योतिरात्मज्योतिः शिवोऽस्म्यहम् ॥ २१ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचिता ब्रह्मज्ञानावली समाप्ता ॥ १७ ॥

---

## प्रश्नोत्तरमालिका ॥ १८ ॥ १ ॥

ॐ परमात्मने नमः ॥ कः खलु नालंक्रियते दृष्टादृष्टार्थसा-

धनपटीयान् । अनया कण्ठस्थितया प्रश्नोत्तररत्नमालिकया॥१॥ भगवन्किमुपादेयं गुरुवचनं हेयमपि च किमकार्यम् । को गुरुरधिगततत्त्वः सत्त्वहितायोद्यतः सततम् ॥ २ ॥ त्वरितं किं कर्तव्यं सुधिया संसारसंततिच्छेदः । किं मोक्षतरोर्बीजं सम्यग्ज्ञानं क्रियासहितम् ॥ ३ ॥ कः पथ्यतरो धर्मः कः शुचिरिह यस्य मानसं शुद्धम् । कः पण्डितो विवेकी किं विषमवधीरणा गुरुषु ॥ ४ ॥ किं संसारे सारं बहुशो विचिन्त्यमानमिदमेव । मनुजेषु दृष्टतत्त्वं स्वपरहितायोद्यतं जन्म ॥ ५ ॥ मदिरेव जनमोहकः कः स्नेहः के च दस्यवो विषयाः । का भववल्ली तृष्णा को वैरी यस्त्वनुद्योगः ॥ ६ ॥ कस्माद्भयमिह मरणादन्धादपि को विशिष्यते रोगी । कः शूरो यो ललनालोचनबाणैर्न च व्यथितः ॥ ७ ॥ पातुं कर्णाञ्जलिभिः किममृतमिव युज्यते सदुपदेशः । किं गुरुताया मूलं यदेतदप्रार्थनं नाम ॥ ८ ॥ किं गहनं स्त्रीचरितं कश्चतुरो यो न खण्डितस्तेन । किं दारिद्र्यमसंतोषः किं लाघवं परधनादिपरियाञ्चा ॥ ९ ॥ किं जीवितमनवद्यं किं जाड्यं पाटवेऽप्यनभ्यासः । को जागर्ति विवेकी का निद्रा मूढता जन्तोः ॥ १० ॥ नलिनीदलगतजलवत्तरलं किं यौवनं धनं चायुः । के शशधरकरनिकरानुकारिणः सज्जना एव ॥ ११ ॥ को नरकः परवशता किं सौख्यं सर्वसङ्गविरतिर्या । किं साध्यं भूतहितं किमु प्रियं प्राणिनामसवः ॥ १२ ॥ किं दानमनाकाङ्क्षं किं मित्रं यन्निवर्तयति पापात् ॥ १३ ॥ कोऽलंकारः शीलं किं वाचां मण्डनं सत्यम् । किमनर्थफलं मानः सुसंगतिः का सुखावहा मैत्री ॥ १४ ॥ सर्वव्यसनविनाशे को दक्षः सर्वथापरित्यागी ।

कोऽन्धो योऽकार्यरतः को बधिरो यः शृणोति न हितानि ॥ १५ ॥ को मूको यः काले प्रियाणि वक्तुं न जानाति । किं मरणं मूर्खत्वं किमनर्घ्यं दत्तमवसरे यच्च ॥ १६ ॥ आमरणा-त्किं शल्यं प्रच्छन्नं यत्कृतं पापम् । कुत्र विधेयो यत्नो विद्या-भ्यासे सदौषधे दाने ॥ १७ ॥ अवधीरणा क्व कार्या खलपर-योषित्परधनेषु । काऽहर्निशमनुचिन्त्या संसारासारता न तु प्रमदा ॥ १८ ॥ का प्रेयसी विधेया करुणा दीनेषु सज्जने मैत्री । कण्ठगतैरप्यसुभिः कस्यात्मा न वश्यमुपयाति ॥१९॥ मूर्खस्य विषादवतो गर्ववतोऽपि च कृतघ्नस्य । कः पूज्यः सद्वृत्तः कमधममाचक्षते चलितवृत्तम् ॥ २० ॥ केन जितं जगदेतत्सत्यतितिक्षावता पुंसा । कुत्र विधेयो वासः सज्जननिकटेऽथवा काश्याम् ॥२१॥ कस्मै नमस्क्रिया स्याद्देवानामपि दया-प्रधानस्य । कस्मादुद्वेजितव्यं संसारारण्यतः सुधिया ॥ २२ ॥ कस्य वशे प्राणिगणः सत्यप्रियभाषिणो विनीतस्य । क्व स्थात-व्यं न्याय्ये पथि दृष्टार्थलाभाय ॥ २३ ॥ विद्युद्विलसितचपलं किं दुर्जनसंगतिर्युवतयश्च । कुलशीलनिष्प्रकम्पाः के कलिका-लेऽपि सत्पुरुषाः ॥ २४ ॥ किं शोच्यं कार्पण्यं सति विभवे किं प्रशस्यमौदार्यम् । तनुतरविभवस्य प्रभविष्णोर्वा किंच यत्सहिष्णुत्वम् ॥ २५ ॥ चिन्तामणिरिव दुर्लभमिह किं कथ-यामि चतुर्भद्रम् । किं तद्वदेति भूयो विधूततमसो विशेषेण ॥ २६ ॥ दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् । वित्तं त्यागसमेतं दुर्लभमेतच्चतुर्भद्रम् ॥ २७ ॥ इति कण्ठगता विमला प्रश्नोत्तररत्नमालिका येषाम् । तेऽमुक्ताभरणा अपि

विभान्ति विद्वत्समाजेषु ॥ २८ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचिता प्रश्नोत्तरमालिका संपूर्णा १८

---

## प्रश्नोत्तरमालिका ॥ १८ ॥ २ ॥

ॐपरमात्मने नमः ॥ किं साध्यं मनुजानां बुद्धेः शुद्धत्वमेव बहुयत्नैः । किं त्याज्यं खलसङ्गो देहाहंकारममते च ॥१॥ किं तीर्थं वेदशिरः किं देयं पात्र आत्मसंबोधः । किं भोग्यं सहजसुखं किं वाऽभोग्यं परेच्छया लब्धम् ॥ २ ॥ किं कष्टं यत्सत्यं किं वा सहजं परं ब्रह्म । कर्तव्यं किं सर्वैरात्माऽकर्तेति बुद्धिरेव सदा ॥ ३ ॥ आदातुं संत्यक्तुं किमशक्यं ब्रह्म निजरूपम् । किं वा दुःखमबोधः किं सुखमात्मावबोधतः शान्तिः ॥ ४ ॥ विषमं विषं तु किं वा यत्किंचित्कस्यचिच्च या चिन्ता । परमामृतं तु किं वा श्रीगुरुवाक्यं कृपानिविडम् ॥ ५ ॥ को गुरुरधिगन्तव्यो देशिकशिष्यत्वबाधबोधयिता । अध्येतव्यं किं खलु यावद्वेदार्थदर्शकः प्रणवः ॥ ६ ॥ कोऽनध्यायोऽध्ययने यावत्सद्गुरुमलब्धवांस्तावत् । कः प्रणवार्थस्तूष्णीं किं ध्येयं ध्येयमात्रसंत्यागः ॥ ७ ॥ कः शूरो दृश्यात्रान्मायाभेत्ता स्वयंप्रकाशज्ञः । किं चिन्त्यं मनुजैरिह चिन्ताबीजं विचित्रजगत इति ॥ ८ ॥ किं पेशलं हि लोके विद्वच्चरितं विरुद्धशास्त्रमपि । सद्भक्त्या किं कार्यं सज्जनपदरजसि भूयसः स्नानम् ॥ ९ ॥ आबाल्यात्किं कार्यं निरहंकारेण साधुपदसेवा । भाग्योदयस्तु को वा गुरुवचनादद्वितीयपदलाभः ॥ १० ॥ मुक्तैः किं कर्तव्यं प्रारब्धाधीनसदसताभोगः । पुंसां किं सर्वस्वं सचित्सुखनामिका गुरोर्मूर्तिः ॥ ११ ॥ का कामधेनुरनघा वेदे देवे

तथा गुरौ श्रद्धा । को वैद्यो रोगहरो ब्रह्मिष्ठः सदयहृदयगुरुराजः ॥ १२ ॥ कः पुत्रः स्वोद्धर्ता ज्ञातस्वात्मैव चिन्मयः पुरुषः। कः सुखशायी लोके संसृतिमिथ्यात्वपक्वमतितृप्तः॥१३॥ किं त्याज्यं साधुकृते चरिते कुत्सितमतिस्तु साधुजनैः । कः शत्रुर्दुःखकरो गुरुवचने संशयो महाशत्रुः ॥ १४ ॥ कः शोभते नितान्तं निस्पृहताशालिनिजबोधः । किं याच्यं सद्गुरुषु स्वोद्धारः सर्वदैन्यपरिहारः ॥ १५ ॥ को वा मान्यः सिद्धो बालोऽपि ब्रह्मभावमतिमान्यः । का वा दरिद्रसीमा मूढप्रियसिद्ध्यहंकृतिः प्रोक्ता ॥ १६ ॥ किं सोढव्यं विदुषा खलवचनं विषविनिर्मितं कठिनम् । स्थेयं कथं खलेषु स्वीयां निष्ठां दृढं समाच्छाद्य ॥ १७ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दसरस्वतीविरचिता प्रश्नोत्तरमालिका संपूर्णा ॥ १८ ॥ २ ॥

---

## मणिरत्नमाला ॥ १९ ॥

ॐपरमात्मने नम ॥ अपारसंसारसमुद्रमध्ये निमज्जतो मे शरणं किमस्ति । गुरो कृपालो कृपया वदैतद्विश्वेशपादांबुजदीर्घनौका ॥ १ ॥ बद्धो हि को यो विषयानुरागी को वा विमुक्तो विषये विरक्तः। कोवाऽस्ति घोरो नरकः स्वदेहस्तृष्णाक्षयः स्वर्गपदं किमस्ति॥२॥संसारहृत्कस्तु निजात्मबोधः को मोक्षहेतुः प्रथितः स एव । द्वारं किमेकं नरकस्य नारी का स्वर्गदा प्राणभृतामहिंसा ॥ ३ ॥ शेते सुखं कस्तु समाधिनिष्ठो जागर्ति को वा सदसद्विवेकी । के शत्रवः सन्ति निजेन्द्रियाणि तान्येव मित्राणि जितानि कानि ॥ ४ ॥ को वा दरिद्रो हि विशालतृष्णः श्रीमांश्च को यस्य समस्ति तोषः । जीवन्मृतो कस्तु निरुद्यमो

यः को वाऽमृता स्यात्सुखदा निराशा ॥ ५ ॥ पाशो हि को यो ममताभिधानः संमोहयत्येव सुरेव का स्त्री । को वा महांधो मदनातुरो यो मृत्युश्च को वापयशः स्वकीयम् ॥ ६ ॥ को वा गुरुर्यो हि हितोपदेष्टा शिष्यस्तु को यो गुरुभक्त एव। को दीर्घरोगो भव एव साधो किमौषधं तस्य विचार एव ॥७॥ किं भूषणाद्भूषणमस्ति शीलं तीर्थं परं किं स्वमनो विशुद्धम् । किमत्र हेयं कनकं च कान्ता श्राव्यं सदा किं गुरुवेदवाक्यम् ॥ ८ ॥ के हेतवो ब्रह्मगतेस्तु सन्ति सत्संगतिर्दानविचारतोपाः । के सन्ति सन्तोऽखिलवीतरागा अपास्तमोहाः शिवतत्त्वनिष्ठाः ॥ ९ ॥ को वा ज्वरः प्राणभृतां हि चिन्ता मूर्खोस्ति को यस्तु विवेकहीनः। कार्या मया का शिवविष्णुभक्तिः किं जीवनं दोषविवर्जितं यत् ॥ १० ॥ विद्या हि का ब्रह्मगतिप्रदा या बोधो हि को यस्तु विमुक्तिहेतुः । को लाभ आत्मावगमो हि यो वै जितं जगत् केन मनो हि येन ॥ ११ ॥ शूरान्महाशूरतमोस्ति को वा मनोजबाणैर्व्यथितो न यस्तु । प्राज्ञोतिधीरश्च समोस्ति को वा प्राप्तो न मोहं ललनाकटाक्षैः ॥१२॥ विषाद्विषं किं विषयाः समस्ता दुःखी सदा को विषयानुरागी । धन्योस्ति को यस्तु परोपकारी कः पूजनीयो ननु तत्त्वनिष्ठः ॥ १३ ॥ सर्वास्ववस्थास्वपि किं न कार्यं किं वा विधेयं विदुषां प्रयत्नात् । स्नेहश्च पापं पठनं च धर्मः संसारमूलं हि किमस्ति चिन्ता ॥ १४ ॥ विज्ञान्महाविज्ञतमोस्ति को वा नार्या पिशाच्या न च वंचितो यः । का शृंखला प्राणभृतां च नारी दिव्यं व्रतं किं च निरस्तदैन्यम् ॥ १५ ॥ ज्ञातुं न शक्यं हि किमस्ति सर्वैर्योषिन्मनो यच्चरितं तदीयम् । का दुस्त्यजा सर्वजनैर्दुराशा

विद्याविहीनः पशुरस्ति को वा ॥ १६ ॥ वासो न संगः सह
कैर्विधेयो मूर्खैश्च पापैश्च खलैश्च नीचैः । मुमुक्षुणा किं चरितं
विधेयं सत्संगतिर्निर्ममतेशभक्तिः ॥ १७ ॥ लघुत्वमूलं च
किमर्थितैव गुरुत्वबीजं यदयाचनं किम् । जातोस्ति को यस्य
पुनर्न जन्म को वा मृतो यस्य पुनर्नमृत्युः ॥ १८ ॥ मूकोस्ति
को वा बधिरश्च को वा युक्तं न वक्तुं समये समर्थः । तथ्यं
सुपथ्यं न शृणोति वाक्यं विश्वासपात्रं न किमस्ति नारी ॥१९॥
तत्त्वं किमेकं शिवमद्वितीयं किमुत्तमं सच्चरितं यदस्ति । किं
कर्म कृत्वा न च शोचनीयः कामारिकंसारिसमर्चनाख्यम्
॥ २० ॥ शत्रोर्महाशत्रुतरोऽस्ति को वा कामः स कोपानृत
लोभतृष्णः । न पूर्यते को विषयैः स एव किं दुःखमूलं ममता
भिधानम् ॥ २१ ॥ किं मण्डनं साक्षरता मुखस्य सत्यं च किं
भूतहितं तदेव । त्यक्त्वा सुखं किं स्त्रियमेव सम्यक् देयं परं
किं त्वभयं सदैव ॥ २२ ॥ कस्यास्ति नाशे मनसो हि मोक्षः
क सर्वथा नास्ति भयं विमुक्तौ । शल्यं परं किं निजमूर्खतैव
के के उपास्या गुरवश्च वृद्धाः ॥ २३ ॥ उपस्थिते प्राणहरे
कृतान्ते किमाशु कार्यं सुधिया प्रयत्नात् । वाक्कायचित्तैः सुखदं
यमघ्नमुरारिपादांबुजमेव चिन्त्यम् ॥ २४ ॥ के दस्यवः सन्ति
कुवासनाख्याः कः शोभते यः सदसि प्रविद्यः । शान्त्येव का
या सुखदा सुविद्या किमेधते दानवशात् सुविद्या ॥ २५ ॥
कुतो हि भीतिः सततं विधेया लोकापवादाद्भवकाननाच्च । को
वास्ति बंधुः पितरौ च कौ वा विपत्सहायः परिपालकौ यौ ॥२६॥
बुद्ध्या न बुद्धं परिशिष्यते किं शिवं प्रशांतं सुखबोधरूपम् ।
ज्ञाते तु कस्मिन्विदितं जगत्स्यात् सर्वात्मके ब्रह्मणि पूर्णरूपे

॥ २७ ॥ किं दुर्लभं सद्गुरुरस्ति लोके सत्संगतिर्ब्रह्मविचारणा च । त्यागो हि सर्वस्य निजात्मबोधः किं दुर्जयं सर्वजनैर्मनोजः ॥ २८ ॥ पशोः पशुः को न करोति धर्मं प्राधीतशास्त्रोपि न चात्मबोधः । किं तद्विषं भाति सुधोपमं स्त्री के शत्रवो मित्रवदात्मजाद्याः ॥ २९ ॥ विद्युच्चलं किं धनयौवनायुर्दानं परं किं च सुपात्रदत्तम् । कण्ठं गतैरप्यसुभिर्नकार्यं किं वा विधेयं मलिनं शिवार्चा ॥ ३० ॥ किं कर्म यत्प्रीतिकरं मुरारेः क्वास्था न कार्या सततं भवाब्धौ । अहर्निशं किं परिचिन्तनीयं संसारमिथ्यात्वशिवात्मतत्वम् ॥ ३१ ॥ कण्ठं गता वा श्रवणं गता वा प्रश्नोत्तराख्या मणिरत्नमाला । तनोतु मोदं विदुषां प्रयत्नात् रमेश गौरीशपदौ सुसेव्यौ ॥३२॥ इति श्रीमणिरत्नमाला संपूर्णा ॥ १९ ॥

---

## कौपीनपञ्चकस्तोत्रम् ॥ २० ॥

ॐपरमात्मने नमः ॥ वेदान्तवाक्येषु सदा रमन्तो भिक्षान्नमात्रेण च तुष्टिमन्तः । अशोकवन्तः करुणैकवन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥ १ ॥ मूलं तरोः केवलमाश्रयन्तः पाणिद्वये भोक्तुममत्रयन्तः । कन्थामपि स्त्रीमिव कुत्सयन्तः कौपीनवन्तः ख० ॥ २ ॥ देहाभिमानं परिहृत्य दूरादात्मानमात्मन्यवलोकयन्तः । अहर्निशं ब्रह्मणि ये रमन्तः कौपीनवन्तः ख० ॥ ३ ॥ स्वानन्दभावे परितुष्टिमन्तः स्वशान्तसर्वेन्द्रियवृत्तिमन्तः । नान्तं न मध्यं न बहिः स्मरन्तः कौपीनवन्तः ख० ॥ ४ ॥ पञ्चाक्षरं पावनमुच्चरन्तः पतिं पशूनां हृदि भावयन्तः । भिक्षाशना दिक्षु परिभ्रमन्तः कौपीनवन्तः खलु भाग्य-

वन्तः ॥ ५ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं कौपीनपञ्चकस्तोत्रं संपूर्णम् ॥ २० ॥

---

## हस्तामलकस्तोत्रम् ॥ २१ ॥

ॐपरमात्मने नमः ॥ कस्त्वं शिशो कस्य कुतोऽसि गन्ता किं नाम ते त्वं कुत आगतोऽसि । एतन्मयोक्तं वद चार्भक त्वं मत्प्रीतये प्रीतिविवर्धनोऽसि ॥ १ ॥ हस्तामलक उवाच ॥ नाहं मनुष्यो न च देवयक्षौ न ब्राह्मणक्षत्रियवैश्यशूद्राः । न ब्रह्मचारी न गृही वनस्थो भिक्षुर्न चाहं निजबोधरूपः ॥ २ ॥ निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधिराकाशकल्पः । रविर्लोकचेष्टानिमित्तं यथा यः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ३ ॥ यमग्न्युष्णवन्नित्यबोधस्वरूपं मनश्चक्षुरादीन्यबोधात्मकानि । प्रवर्तन्त आश्रित्य निष्कम्पमेकं स नित्यो० ॥ ४ ॥ मुखाभासको दर्पणे दृश्यमानो मुखत्वात्पृथक्त्वेन नैवास्ति वस्तु चिदाभासको धीषु जीवोऽपि तद्वत्स नित्यो० ॥ ५ ॥ यथा दर्पणाभाव आभासहानौ मुखं विद्यते कल्पनाहीनमेकम् । तथा धीवियोगे निराभासको यः स नित्यो० ॥ ६ ॥ मनश्चक्षुरादेर्वियुक्तः स्वयं यो मनश्चक्षुरादेर्मनश्चक्षुरादिः । मनश्चक्षुरादेरगम्यस्वरूपः स नित्यो० ॥ ७ ॥ य एको विभाति स्वतः शुद्धचेताः प्रकाशस्वरूपोऽपि नानेव धीषु । शरावोदकस्थो यथा भानुरेकः स नित्यो० ॥ ८ ॥ यथाऽनेकचक्षुः प्रकाशो रविर्न क्रमेण प्रकाशीकरोति प्रकाश्यम् । अनेका धियो यस्तथैकः प्रबोधः स नित्यो० ॥ ९ ॥ विवस्वत्प्रभातं यथारूपमक्षं प्रगृह्णाति नाभातमेवं विवस्वान् । यदाभात आभासयत्यक्षमेकः स

नित्यो० ॥ १० ॥ यथा सूर्य एकोऽप्स्वनेकश्चलासु स्थिरास्वप्यनन्तद्विभाव्यस्वरूपः । चलासु प्रभिन्नाः सुधीष्वेक एव स नित्यो० ॥ ११ ॥ घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा निष्प्रभं मन्यते चातिमूढः । तथा बद्धवद्भाति यो मूढदृष्टेः स नित्यो० ॥ १२ ॥ समस्तेषु वस्तुष्वनुस्यूतमेकं समस्तानि वस्तूनि यन्न स्पृशन्ति । वियद्वत्सदा शुद्धमच्छस्वरूपं स नित्यो० ॥ १३ ॥ उपाधौ यथा भेदता सन्मणीनां तथा भेदता बुद्धिभेदेषु तेऽपि । यथा चन्द्रिकाणां जले चञ्चलत्वं तथा चञ्चलत्वं तवापीह विष्णो ॥ १४ ॥ इति श्रीमच्छंकराचार्यविरचितं हस्तामलकसंवादस्तोत्रं संपूर्णम् ॥ २१ ॥

---

## वाक्यवृत्तिः ॥ २२ ॥

ॐ परमात्मने नमः ॥ सर्गस्थितिप्रलयहेतुमचिन्त्यशक्तिं विश्वेश्वरं विदितविश्वमनन्तमूर्तिम् । निर्मुक्तबन्धनमपारसुखाम्बुराशिं श्रीवल्लभं विमलबोधघनं नमामि ॥१॥ यस्य प्रसादादहमेव विष्णुर्मय्येव सर्वं परिकल्पितं च । इत्थं विजानामि सदात्मरूपस्तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥ २ ॥ तापत्रयार्कसंतप्तः कश्चिदुद्विग्नमानसः । शमादिसाधनैर्युक्तः सद्गुरुं परिपृच्छति ॥ ३ ॥ अनायासेन येनास्मान्मुच्येयं भवबन्धनात् । तन्मे संक्षिप्य भगवन्कैवल्यं कृपया वद ॥ ४ ॥ साध्वी ते वचनव्यक्तिः प्रतिभाति वदामि ते । इदं तदिति विस्पष्टं सावधानमनाः शृणु ॥ ५ ॥ तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः । तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनम् ॥ ६ ॥ को

जीवः कः परश्चात्मा तादात्म्यं वा कथं तयोः । तत्त्वमस्यादि
वाक्यं वा कथं तत्प्रतिपादयेत् ॥ ७ ॥ अत्र ब्रूमः समाधानं
कोऽन्यो जीवस्त्वमेव हि । यस्त्वं पृच्छसि मां कोऽहं ब्रह्मैवासि
न संशयः ॥ ८ ॥ पदार्थमेव जानामि नाद्यापि भगवन् स्फुट
म् । अहं ब्रह्मेति वाक्यार्थं प्रतिपद्ये कथं वद ॥ ९ ॥ सत्य
माह भवानत्र विज्ञानं नैव विद्यते । हेतुः पदार्थबोधो हि वा
क्यार्थावगतेरिह ॥ १० ॥ अन्तःकरणतद्वृत्तिसाक्षी चैतन्यवि
ग्रहः । आनन्दरूपः सत्यः सन् किं नात्मानं प्रपद्यसे ॥ ११ ॥
सत्यानन्दस्वरूपं धीसाक्षिणं बोधविग्रहम् । चिन्तयात्मतया
नित्यं त्यक्त्वा देहादिगां धियम् ॥ १२ ॥ रूपादिमान्यतः
पिण्डस्ततो नात्मा घटादिवत् । वियदादिमहाभूतविकारत्वाच्च
कुम्भवत् ॥ १३ ॥ अनात्मा यदि पिण्डोऽयमुक्तहेतुबलान्मतः
करामलकवत्साक्षादात्मानं प्रतिपादय ॥ १४ ॥ घटद्रष्टा घटा
द्भिन्नः सर्वथा न घटो यथा । देहद्रष्टा तथा देहो नाहमित्य
वधारय ॥ १५ ॥ एवमिन्द्रियदृङ्नाहमिन्द्रियाणीति निश्चिनु ।
मनो बुद्धिस्तथा प्राणो नाहमित्यवधारय ॥ १६ ॥ संघातोऽपि
तथा नाहमिति दृश्यविलक्षणम् । द्रष्टारमनुमानेन निपुणं संप्र
धारय ॥ १७ ॥ देहेन्द्रियादयो भावा हानादिव्यापृतिक्षमाः ।
यस्य सन्निधिमात्रेण सोऽहमित्यवधारय ॥ १८ ॥ अनापन्न
विकारः सन्नयस्कान्तवदेव यः । बुद्ध्यादींश्चालयेत्प्रत्यक् सोऽ
हमित्यवधारय ॥ १९ ॥ अजडात्मवदाभान्ति यत्सान्निध्या
ज्जडा अपि । देहेन्द्रियमनःप्राणाः सोऽहमित्यवधारय ॥ २० ॥
अगमन्मे मनोऽन्यत्र सांप्रतं च स्थिरीकृतम् । एवं यो वेत्ति
धीवृत्तिं सोऽहमित्यवधारय ॥ २१ ॥ स्वप्नजागरिते सुप्तिं भावा

भावौ धियां तथा । यो वेत्त्यविक्रियः साक्षात्सोऽहमित्यवधा-
रय ॥ २२ ॥ घटावभासको दीपो घटादन्यो यथेष्यते । देहा-
वभासको देही तथाहं बोधविग्रहः ॥ २३ ॥ पुत्रवित्तादयो
भावा यस्य शेषतया प्रियाः । द्रष्टा सर्वप्रियतमः सोऽहमित्यव-
धारय ॥ २४ ॥ परप्रेमास्पदतया मा न भूवमहं सदा । भूया-
समिति यो द्रष्टा सोऽहमित्यवधारय ॥ २५ ॥ यः साक्षिल-
क्षणो बोधस्त्वंपदार्थः स उच्यते । साक्षित्वमपि बोद्धृत्वमवि-
कारितयाऽऽत्मनः ॥ २६ ॥ देहेन्द्रियमनःप्राणाहंकृतिभ्यो
विलक्षणः । प्रोज्झिताशेषषड्भावविकारस्त्वंपदाभिधः ॥ २७ ॥
त्वमर्थमेवं निश्चित्य तदर्थं चिन्तयेत्पुनः । अतद्व्यावृत्तिरूपेण
साक्षाद्विधिमुखेन च ॥ २८ ॥ निरस्ताशेषसंसारदोषोऽस्थूला-
दिलक्षणः । अदृश्यत्वादिगुणकः पराकृततमोमलः ॥ २९ ॥
निरस्तातिशयानन्दः सत्यप्रज्ञानविग्रहः । सत्तास्वलक्षणः पूर्णः
परमात्मेति गीयते ॥ ३० ॥ सर्वज्ञत्वं परेशत्वं तथा संपूर्णश-
क्तिता । वेदैः समर्थ्यते यस्य तद्ब्रह्मेत्यवधारय ॥ ३१ ॥
यज्ज्ञानात्सर्वविज्ञानं श्रुतिषु प्रतिपादितम् । मृदाद्यनेकदृष्टान्तै-
स्तद्ब्रह्मेत्यवधारय ॥ ३२ ॥ यदानन्त्यं प्रतिज्ञाय श्रुतिस्तत्सिद्धये
जगौ । तत्कार्यत्वं प्रपञ्चस्य तद्ब्रह्मेत्यवधारय ॥ ३३ ॥ विजि-
ज्ञास्यतया यच्च वेदान्तेषु मुमुक्षुभिः । समर्थ्यतेऽतियत्नेन तद्ब्र-
ह्मेत्यवधारय ॥ ३४ ॥ जीवात्मना प्रवेशश्च नियन्तृत्वं च तान्
प्रति । श्रूयते यस्य वेदेषु तद्ब्रह्मेत्यवधारय ॥ ३५ ॥ कर्मणां
फलदातृत्वं यस्यैव श्रूयते श्रुतौ । जीवानां हेतुकर्तृत्वं तद्ब्रह्मेत्य-
वधारय ॥ ३६ ॥ तत्त्वंपदार्थौ निर्णीतौ वाक्यार्थश्चिन्त्यतेऽधु-
ना । तादात्म्यमत्र वाक्यार्थस्तयोरेव पदार्थयोः ॥ ३७ ॥

संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः । अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः ॥ ३८ ॥ प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः । अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥ ३९ ॥ इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् । अब्रह्मत्वमर्थस्य व्यावर्तेत तदैव हि ॥ ४० ॥ तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु । पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ४१ ॥ तत्त्वमस्यादिवाक्यं च तादात्म्यप्रतिपादने । लक्ष्यौ तत्त्वंपदार्थौ द्वावुपादाय प्रवर्तते ॥ ४२ ॥ हित्वा द्वौ शबलौ वाच्यौ वाक्यं वाक्यार्थबोधने । यथा प्रवर्ततेऽस्माभिस्तथा व्याख्यातमादरात् ॥ ४३ ॥ आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः । अन्तःकरणसंभिन्नबोधः स त्वंपदाभिधः ॥ ४४ ॥ मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः । पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ ४५ ॥ प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता । विरुध्यते यतस्तस्माल्लक्षणा संप्रवर्तते ॥ ४६ ॥ मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे । मुख्यार्थेनाविनाभूते प्रतीतिर्लक्षणोच्यते ॥ ४७ ॥ तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा । सोऽहमित्यादिवाक्यस्थपदयोरिव नापरा ॥ ४८ ॥ अहंब्रह्मेतिवाक्यार्थबोधो यावद्दृढीभवेत् । शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥ ४९ ॥ श्रुत्याचार्यप्रसादेन दृढो बोधो यदा भवेत् । निरस्ताशेषसंसारनिदानः पुरुषस्तदा ॥ ५० ॥ विशीर्णकार्यकरणो भूतसूक्ष्मैरनावृतः । विमुक्तकर्मनिगडः सद्य एव विमुच्यते ॥ ५१ ॥ प्रारब्धकर्मवेगेन जीवन्मुक्तो यदा भवेत् । किंचित्कालमनारब्धकर्मबन्धस्य संक्षये ॥ ५२ ॥ निरस्तातिशयानन्दं वैष्णवं परमं पदम् । पुनरावृत्तिरहितं कैवल्यं

प्रतिपद्यते ॥ ५३ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचिता वाक्यवृत्तिः समाप्ता ॥ २२ ॥

---

## परापूजा ॥ २३ ॥

ॐ परमात्मने नमः ॥ पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनम् । स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः ॥ १ ॥ निर्मलस्य कुतः स्नानं वस्त्रं विश्वोदरस्य च । निरालम्बस्योपवीतं पुष्पं निर्वासनस्य च ॥ २ ॥ निर्लेपस्य कुतो गन्धो रम्यस्याभरणं कुतः । नित्यतृप्तस्य नैवेद्यस्ताम्बूलं च कुतो विभोः ॥ ३ ॥ प्रदक्षिणा ह्यनन्तस्य ह्यद्वयस्य कुतो नतिः । वेदवाक्यैरवेद्यस्य कुतः स्तोत्रं विधीयते ॥ ४ ॥ स्वयंप्रकाशमानस्य कुतो नीराजनं विभोः । अन्तर्बहिश्च पूर्णस्य कथमुद्वासनं भवेत् ॥५॥ एवमेव परा पूजा सर्वावस्थासु सर्वदा । एकबुद्ध्या तु देवेशे विधेया ब्रह्मवित्तमैः ॥ ६ ॥ इति परापूजा समाप्ता ॥ २३ ॥

---

## हरिमीडेस्तोत्रम् ॥ २४ ॥

ॐ परमात्मने नमः ॥ स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम् । यस्मिन् दृष्टे नश्यति तत्संसृतिचक्रं तं संसारध्वान्तविनाशं हरिमीडे ॥ १ ॥ यस्यैकांशादित्थमशेषं जगदेतत्प्रादुर्भूतं येन पिनद्धं पुनरित्थम् । येन व्याप्तं येन विबुद्धं सुखदुःखैस्तं संसार० ॥ २ ॥ सर्वज्ञो यो यश्च हि सर्वः सकलो यो यश्चानन्दोऽनन्तगुणो यो गुणधामा । यश्चाव्यक्तो व्यस्तसमस्तः सदसद्यस्तं संसार० ॥ ३ ॥ यस्मा-

दन्यन्नास्त्यपि नैनं परमार्थं दृश्यादन्यो निर्विषयज्ञानमयत्वात् ज्ञातृज्ञानज्ञेयविहीनोऽपि सदा ज्ञस्तं संसार० ॥ ४ ॥ आचार्येभ्यो लब्धसुसूक्ष्माच्युततत्त्वा वैराग्येणाभ्यासबलाच्चैव द्रढिम्ना भक्त्यैकाग्र्यध्यानपरा यं विदुरीशं तं संसार० ॥ ५ ॥ प्राणानायम्योमिति चित्तं हृदि रुद्ध्वा नान्यत्स्मृत्वा तत्पुनरत्रैव विलाप्य । क्षीणे चित्ते भादृशिरस्मीति विदुर्यं तं संसार० ॥ ६ ॥ ब्रह्माख्यं देवमनन्यं परिपूर्णं हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममतर्क्यम् । ध्यात्वाऽऽत्मस्थं ब्रह्मविदो यं विदुरीशं तं संसार०॥७॥ मात्रातीतं स्वात्मविकाशात्मविबोधं ज्ञेयातीतं ज्ञानमयं हृद्युपलभ्यम् । भावग्राह्यानन्दमनन्यं च विदुर्यं तं संसार० ॥ ८ ॥ यद्यद्वेद्यं वस्तु सतत्त्वं विषयाख्यं तत्तद्ब्रह्मैवेति विदित्वा तदहं च । ध्यायन्त्येवं यं सनकाद्या मुनयोऽजं तं संसार० ॥ ९ ॥ यद्यद्वेद्यं तत्तदहं नेति विहाय स्वात्मज्योतिर्ज्ञानमयानन्दमवाप्य । तस्मिन्नस्मीत्यात्मविदो यं विदुरीशं तं संसार० ॥ १० ॥ हित्वा हित्वा दृश्यमशेषं सविकल्पं मत्वा शिष्टं भादृशिमात्रं गगनाभम् । त्यक्त्वा देहं यं प्रविशन्त्यच्युतभक्तास्तं संसार० ॥ ११ ॥ सर्वत्रास्ते सर्वशरीरी न च सर्वः सर्वं वेत्त्येवेह न यं वेत्ति च सर्वः । सर्वत्रान्तर्यामितयेत्थं यमनन्यस्तं संसार० ॥ १२ ॥ सर्वं दृष्ट्वा स्वात्मनि युक्त्या जगदेतद्दृष्ट्वात्मानं चैवमजं सर्वजनेषु । सर्वात्मैकोऽस्मीति विदुर्यं जनहृत्स्थं तं संसार० ॥ १३ ॥ सर्वत्रैकः पश्यति जिघ्रत्यथ भुङ्क्ते प्रष्टा श्रोता बुद्ध्यति चेत्याहुरिमं यम् । साक्षी चास्ते कर्तृषु पश्यन्निति चान्ये तं संसार० ॥ १४ ॥ पश्यन् शृण्वन्नत्र विजानन्रसयन् सन् जिघ्रन्बिभ्रद्देहमिमं जीवतयेत्थम् । इत्यात्मानं यं विदुरीशं विषय

तं संसार० ॥१५॥ जाग्रद्दृष्ट्वा स्थूलपदार्थानथ मायां दृष्ट्वा स्वप्नेऽथापि सुषुप्तौ सुखनिद्राम्। इत्यात्मानं वीक्ष्य मुदास्ते च तुरीये तं संसार० ॥ १६ ॥ पश्यन् शुद्धोऽप्यक्षर एको गुणभेदान्नानाकारान् स्फाटिकवद्भाति विचित्रः। भिन्नश्छिन्नश्चायमजः कर्मफलैर्यस्तं संसार० ॥ १७ ॥ ब्रह्मा विष्णू रुद्रहुताशौ रविचन्द्राविन्द्रो वायुर्यज्ञ इतीत्थं परिकल्प्य। एकं सन्तं यं बहुधा दुर्मतिभेदात्तं संसार० ॥ १८ ॥ सत्यं ज्ञानं शुद्धमनन्तं व्यतिरिक्तं शान्तं गूढं निष्कलमानन्दमनन्यम्। इत्याहादौ यं वरुणोऽसौ भृगवेऽजं तं संसार०॥ १९ ॥ कोशानेतान्पञ्चरसादीनतिहाय ब्रह्मासीति स्वात्मनि निश्चित्य दृशिस्थः। पित्रादिष्टो वेद भृगुर्यं यजुरन्ते तं संसार० ॥२०॥ येनाविष्टो यस्य च शक्त्या यदधीनः क्षेत्रज्ञोऽयं कारयिता जन्तुषु कर्तुः। कर्ता भोक्ताऽऽत्माऽत्र हि चिच्छक्त्यधिरूढस्तं संसार० ॥ २१ ॥ सृष्ट्वा सर्वं स्वात्मतयैवेत्थमतर्क्यं व्याप्याथान्तः कृत्स्नमिदं सृष्टमशेषम्। सच्च त्यच्चाभूत्परमात्मा स य एकस्तं संसार० ॥ २२ ॥ वेदान्तैश्चाध्यात्मिकशास्त्रैश्च पुराणैः शास्त्रैश्चान्यैः सात्वततन्त्रैश्च यमीशम्। दृष्ट्वाथान्तश्चेतसि बुद्ध्या विविशुर्यं तं संसार० ॥२३॥ श्रद्धाभक्तिध्यानशमाद्यैर्यतमानैर्ज्ञातुं शक्यो देव इहैवाशु य ईशः। दुर्विज्ञेयो जन्मशतैश्चापि विना तैस्तं संसार० ॥२४॥ यस्यातर्क्यं स्वात्मविभूतेः परमार्थं सर्वं खल्वित्यत्र निरुक्तं श्रुतिविद्भिः। तज्जातित्वादब्धितरङ्गाभमभिन्नं तं संसार० ॥ २५ ॥ दृष्ट्वा गीतास्वक्षरतत्त्वं विधिनाजं भक्त्या गुर्व्यालभ्य हृदिस्थं दृशिमात्रम्। ध्यात्वा तस्मिन्नस्म्यहमित्यत्र विदुर्यं तं संसार० ॥ २६ ॥ क्षेत्रज्ञत्वं प्राप्य

विभुः पञ्चमुखैर्यो भुङ्क्तेऽजस्रं भोग्यपदार्थान्प्रकृतिस्थः । धे
क्षेत्रेष्विन्दुवदेको बहुधाऽऽस्ते तं संसार० ॥ २७ ॥ युक्त्याल
च्य व्यासवचांस्यत्र हि लभ्यः क्षेत्रक्षेत्रज्ञान्तरविद्भिः पुरु
ष्यः । योऽहं सोऽसौ सोऽस्म्यहमेवेति विदुर्यं तं संसा
॥ २८ ॥ एकीकृत्यानेकशरीरस्थमिमं ज्ञं यं विज्ञायेहैव स ए
शु भवन्ति । यस्मिँल्लीना नेह पुनर्जन्म लभन्ते तं संसा
॥ २९ ॥ द्वन्द्वैकत्वं सच्च मधुब्राह्मणवाक्यैः कृत्वा शक्रोपास
मासाद्य विभूत्या । योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्य
संसार० ॥३०॥ योऽयं देहे चेष्टयितान्तःकरणस्थः सूर्ये चा
तापयिता सोऽस्म्यहमेव । इत्यात्मैक्योपासनया यं विदु
तं संसार० ॥ ३१ ॥ विज्ञानांशो यस्य सतः शक्त्यधि
बुद्धिर्बुद्ध्यत्यत्र बहिर्बोध्यपदार्थान् । नैवान्तस्थं बुद्ध्यति
बोधयितारं तं संसार० ॥ ३२ ॥ कोऽयं देहे देव इतीत्थं सु
चार्य ज्ञाता श्रोताऽऽनन्दयिता चैष हि देवः । इत्याल
ज्ञांशमिहासीति विदुर्यं तं संसार० ॥ ३३ ॥ को ह्येवान्या
त्मनि न स्यादयमेष ह्येवानन्दः प्राणिति चापानिति चेति । इ
स्तित्वं वक्त्युपपत्त्या श्रुतिरेषा तं संसार० ॥ ३४ ॥ प्राणो
वाक्श्रवणादीनि मनो वा बुद्धिर्वाहं व्यस्त उताहोपि समस्त
इत्यालोच्य ज्ञप्तिरिहासीति विदुर्यं तं संसार० ॥ ३५ ॥
प्राणो नैव शरीरं न मनोऽहं नाहं बुद्धिर्नाहमहंकारधियौ
योऽत्र ज्ञांशः सोऽस्म्यहमेवेति विदुर्यं तं संसार० ॥ ३६
सत्तामात्रं केवलविज्ञानमजं सत् सूक्ष्मं नित्यं तत्त्वमसीत्या
सुताय । नाम्नामन्ते प्राह पिता यं विभुमाद्यं तं संसार०॥३
मूर्तामूर्ते पूर्वमपोह्याथ समाधौ दृश्यं सर्वं नेति च नेति

विहाय । चैतन्यांशे स्वात्मनि सन्तं च विदुर्यं तं संसार०॥३८॥ ओतं प्रोतं यत्र च सर्गं गगनान्तं यो स्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञः । ज्ञाताऽतोऽन्यो नेत्युपलभ्यो न च वेद्यस्तं संसार० ॥ ३९ ॥ तावत्सर्वं सत्यमिवाभाति यदेतद्यावत्सोऽस्मीत्यात्मनि यो ज्ञो नहि दृष्टः। दृष्टे तस्मिन् सर्वमसत्यं भवतीदं तं संसार० ॥ ४० ॥ रागामुक्तं लोहयुतं हेम यथाऽग्नौ योगाष्टाङ्गैरुज्वलितज्ञानमयाग्नौ । दग्ध्वात्मानं ज्ञं परिशिष्टं च विदुर्यं तं संसार० ॥ ४१ ॥ यं विज्ञानज्योतिषमाद्यं सुविभागं हृद्यर्केन्द्वग्न्योकसमीड्यं तडिदाभम् । भक्त्याराध्येहैव विशन्त्यात्मनि सन्तं तं संसार० ॥ ४२ ॥ पायाद्भक्तं स्वात्मनि सन्तं पुरुषं यो भक्त्या स्तौतीत्याङ्गिरसं विष्णुरिमं माम् । इत्यात्मानं स्वात्मनि संहृत्य सदैकस्तं संसार० ॥ ४३ ॥ इत्थं स्तोत्रं भक्तजनेड्यं भवभीतिध्वान्तार्काभं भगवत्पादीयमिदं यः । विष्णोर्लोकं पठति शृणोति व्रजति ज्ञो ज्ञानं ज्ञेयं स्वात्मनि चाप्नोति मनुष्यः ॥ ४४ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं हरिमीडेस्तोत्रं समाप्तम् ॥ २४ ॥

---

## तत्त्वबोधः ॥ २५ ॥

ॐ परमात्मने नमः ॥ वासुदेवेन्द्रयोगीन्द्रं नत्वा ज्ञानप्रदं गुरुम् ॥ मुमुक्षूणां हितार्थाय तत्त्वबोधोभिधीयते ॥ १ ॥ साधनचतुष्टयसंपन्नाऽधिकारिणां मोक्षसाधनभूतं तत्त्वविवेकप्रकारं वक्ष्यामः ॥ २ ॥ साधनचतुष्टयं किम् ॥ नित्यानित्यवस्तुविवेकः ( १ ) इहामुत्रार्थफलभोगविरागः ( २ ) शमादिषट्संपत्तिः ( ३ ) मुमुक्षुत्वं चेति ( ४ ) ॥ ३ ॥ नित्यानित्य-

वस्तुविवेकः कः । नित्यवस्त्वेकं ब्रह्म तद्व्यतिरिक्तं सर्वमनित्यं । अयमेव नित्यानित्यवस्तुविवेकः ॥ ४ ॥ विरागः कः । इह स्वर्गभोगेषु इच्छाराहित्यम् ॥ ५ ॥ शमादिसाधनसंपत्तिः का । शमो दम उपरमस्तितिक्षा श्रद्धा समाधानं चेति ॥ ६ ॥ शमः कः । मनोनिग्रहः । दमः कः । चक्षुरादिबाह्येन्द्रियनिग्रहः । उपरमः कः । स्वधर्मानुष्ठानमेव । तितिक्षा का । शीतोष्णसुखदुःखादिसहिष्णुत्वम् । श्रद्धा कीदृशी । गुरुवेदान्तवाक्यादिषु विश्वासः श्रद्धा । समाधानं किम् । चित्तैकाग्रता ॥ मुमुक्षुत्वं किम् । मोक्षो मे भूयादितीच्छा ॥ ७ ॥ एतत्साधनचतुष्टयं ॥ ततस्तत्त्वविवेकस्याधिकारिणो भवंति । तत्त्वविवेकः कः । आत्मा सत्यस्तदन्यत् सर्वं मिथ्येति ॥ ८ ॥ आत्मा कः स्थूलसूक्ष्मकारणशरीराद्व्यतिरिक्तः पंचकोशातीतः सन् अवस्थात्रयसाक्षी सच्चिदानंदस्वरूपः सन् यस्तिष्ठति स आत्मा ॥ ९ ॥ स्थूलशरीरं किम् । पंचीकृतपंचमहाभूतैः कृतं सत्कर्मजन्यं सुखदुःखादिभोगायतनं शरीरं अस्ति जायते वर्धते विपरिणमते अपक्षीयते विनश्यतीति षड्विकारवदेतत्स्थूलशरीरम् ॥ १० ॥ सूक्ष्मशरीरं किम् । अपंचीकृतपंचमहाभूतैः कृतं सत्कर्मजन्यं सुखदुःखादिभोगसाधनं पंचज्ञानेन्द्रियाणि पंच कर्मेन्द्रियाणि पंचप्राणादयः मनश्चैकं बुद्धिश्चैका एवं सप्तदशकलाभिः सह यत्तिष्ठति तत्सूक्ष्मशरीरम् ॥ ११ ॥ श्रोत्रं त्वक् चक्षुः रसना घ्राणं इति पंच ज्ञानेन्द्रियाणि । श्रोत्रस्य दिग्देवता । त्वचो वायुः । चक्षुषः सूर्यः । रसनाया वरुणः । घ्राणस्य अश्विनौ इति ज्ञानेन्द्रियदेवताः । श्रोत्रस्य विषयः शब्दग्रहणम् । त्वचो विषयः स्पर्शग्रहणम् । चक्षुषो विषयः रूपग्रहणम् । रसनाया

विषयः रसग्रहणम्। घ्राणस्य विषयो गंधग्रहणम् इति ॥१२॥ वाक्पाणिपादपायूपस्थानीति पंचकर्मेंद्रियाणि ॥ वाचो देवता वह्निः। हस्तयोरिंद्रः। पादयोर्विष्णुः। पायोर्मृत्युः। उपस्थस्य प्रजापतिः इति कर्मेन्द्रियदेवताः ॥ वाचो विषयः भाषणम्। पाण्योर्विषयः वस्तुग्रहणम्। पादयोर्विषयः गमनम्। पायोर्विषयः मलत्यागः। उपस्थस्य विषयः आनंद इति ॥ कारणशरीरं किम्। अनिर्वाच्यानाद्यविद्यारूपं शरीरद्वयस्य कारणमात्रं सत् स्वस्वरूपाऽज्ञानं निर्विकल्पकरूपं यदस्ति तत्कारणशरीरम् ॥ १३ ॥ अवस्थात्रयं किम्। जाग्रत्स्वप्नसुषुप्त्यवस्थाः ॥ १४ ॥ जाग्रदवस्था का। श्रोत्रादिज्ञानेंद्रियैः शब्दादिविषयैश्च ज्ञायते इति यत् सा जाग्रदवस्था। स्थूलशरीराभिमानी आत्मा विश्व इत्युच्यते ॥ १५ ॥ स्वप्नावस्था केति चेत्। जाग्रदवस्थायां यत् दृष्टं यच्छ्रुतं तज्जनितवासनया निद्रासमये यः प्रपंचः प्रतीयते सा स्वप्नावस्था। सूक्ष्मशरीराभिमानी आत्मा तैजस इत्युच्यते ॥ १६ ॥ अतः सुषुप्त्यवस्था का। अहं किमपि न जानामि सुखेन मया निद्रानुभूयत इति सुषुप्त्यवस्था। कारणशरीराभिमानी आत्मा प्राज्ञ इत्युच्यते ॥ १७ ॥ पंच कोशाः के। अन्नमयः प्राणमयः मनोमयः विज्ञानमयः आनंदमयश्चेति ॥ १८ ॥ अन्नमयः कः। अन्नरसेनैव भूत्वा अन्नरसेनैव वृद्धिं प्राप्य अन्नरूपपृथिव्यां यद्विलीयते तदन्नमयः कोशः। स्थूलशरीरम् ॥ १९ ॥ प्राणमयः कः। प्राणादिपंचवायवः ॥ वागादींद्रियपंचकं प्राणमयः ॥ २० ॥ मनोमयः कोशः कः। मनश्च ज्ञानेंद्रियपंचकं मिलित्वा भवति स मनोमयः कोशः ॥ २१ ॥ विज्ञानमयः कः। बुद्धिर्ज्ञानेन्द्रियपंचकं

मिलित्वा यो भवति स विज्ञानमयः कोशः ॥ २२ ॥ आनंद-
मयः कः । एवमेवं कारणशरीरभूताविद्यास्थमलिनसत्त्वं प्रिया-
दिवृत्तिसहितं सत् आनंदमयः कोशः । एतत्कोशपंचकम् ।
मदीयं शरीरं मदीयाः प्राणाः मदीयं मनश्च मदीया बुद्धिर्म-
दीयं ज्ञानमिति स्वेनैव ज्ञायते । तद्यथा मदीयत्वेन ज्ञातं कट-
ककुंडलगृहादिकं स्वस्माद्भिन्नं तथा पंचकोशादिकं मदीयत्वेन
ज्ञातमात्मा न भवति ॥ २३ ॥ आत्मा तर्हि कः । सच्चिदानं-
दस्वरूपः ॥ २४ ॥ सत्किं । कालत्रयेऽपि तिष्ठतीति सत् ॥
चित्किं । ज्ञानस्वरूपः ॥ आनंदः कः । सुखस्वरूपः ॥ एवं
सच्चिदानंदस्वरूपं स्वात्मानं विजानीयात् ॥ २५ ॥ अथ चतु-
र्विंशतितत्त्वोत्पत्तिप्रकारं वक्ष्यामः ॥ २६ ॥ ब्रह्माश्रया सत्त्वर-
जस्तमोगुणात्मिका माया अस्ति । तस्य आकाशः संभूतः ।
आकाशाद्वायुः । वायोस्तेजः । तेजस आपः । अद्भ्यः पृथिवी
॥ २७ ॥ एतेषां पंचतत्त्वानां मध्ये आकाशस्य सात्त्विकांशात्
श्रोत्रेंद्रियं संभूतम् । वायोः सात्त्विकांशात् त्वगिंद्रियं संभूतम् ।
अग्नेः सात्त्विकांशात् चक्षुरिंद्रियं संभूतम् । जलस्य सात्त्विकां-
शात् रसनेंद्रियं संभूतम् । पृथिव्याः सात्त्विकांशात् घ्राणेंद्रियं
संभूतम् । एतेषां पंचतत्त्वानां समष्टिसात्त्विकांशात् मनोबुद्ध्य-
हंकारचित्तांतःकरणानि संभूतानि ॥ २८ ॥ संकल्पविकल्पा-
त्मकं मनः । निश्चयात्मिका बुद्धिः । अहंकर्ता अहंकारः ।
चिंतनकर्तृ चित्तम् । मनसो देवता चंद्रमा । बुद्धेर्ब्रह्मा । अहं-
कारस्य रुद्रः । चित्तस्य वासुदेवः ॥ २९ ॥ एतेषां पंचतत्त्वानां
मध्ये आकाशस्य राजसांशात् वागिंद्रियं संभूतम् । वायो राज-
सांशात् पाणींद्रियं संभूतम् । वह्नेः राजसांशात् पादेंद्रियं संभू-

तम् । जलस्य राजसांशात् उपस्थेंद्रियं संभूतम् । पृथिव्या राजसांशात् गुदेंद्रियं संभूतम् । एतेषां समष्टिराजसांशात् पंचप्राणाः संभूताः ॥ ३० ॥ एतेषां पंचतत्त्वानां तामसांशात् पंचीकृतपंचतत्त्वानि भवंति । पंचीकरणं कथं इति चेत् । एतेषां पंचमहाभूतानां तामसांशस्वरूपं एकं एकं भूतं द्विधा विभज्य एकं एकमर्धं पृथक् तूष्णीं व्यवस्थाप्य अपरं अपरं अर्धं चतुर्धा विभज्य स्वार्धमन्येषु अर्धेषु स्वभागचतुष्टयसंयोजनं कार्यं । तदा पंचीकरणं भवति । एतेभ्यः पंचीकृतपंचमहाभूतेभ्यः स्थूलशरीरं भवति । एवं पिंडब्रह्मांडयोरैक्यं संभूतम् ॥ ३१ ॥ स्थूलशरीराभिमानी जीवनामकं ब्रह्मप्रतिबिंबं भवति । स एव जीवः प्रकृत्या स्वस्मात् ईश्वरं भिन्नत्वेन जानाति । अविद्योपाधिः सन् आत्मा जीव इत्युच्यते ॥ ३२ ॥ मायोपाधिः सन् ईश्वर इत्युच्यते । एवं उपाधिभेदाज्जीवेश्वरभेददृष्टिर्यावत्पर्यंतं तिष्ठति तावत्पर्यंतं जन्ममरणादिरूपसंसारो न निवर्तते तस्मात्कारणान्न जीवेश्वरयोर्भेदबुद्धिः स्वीकार्या ॥३३॥ ननु साहंकारस्य किंचिज्ज्ञस्य जीवस्य निरहंकारस्य सर्वज्ञस्येश्वरस्य तत्त्वमसीति महावाक्यात् कथमभेदबुद्धिः स्यादुभयोः विरुद्धधर्माक्रान्तत्वात् ॥ ३४ ॥ इति चेन्न स्थूलसूक्ष्मशरीराभिमानी त्वंपदवाच्यार्थः । उपाधिविनिर्मुक्तं समाधिदशासंपन्नं शुद्धं चैतन्यं त्वंपदलक्ष्यार्थः ॥ ३५ ॥ एवं सर्वज्ञत्वादिविशिष्ट ईश्वरः तत्पदवाच्यार्थः ॥ उपाधिशून्यं शुद्धचैतन्यं तत्पदलक्ष्यार्थः ॥ एवं च जीवेश्वरयोः चैतन्यरूपेणाऽभेदे बाधकाभावः ॥ ३६ ॥ एवं च वेदान्तवाक्यैः सद्गुरूपदेशेन च सर्वेष्वपि भूतेषु येषां ब्रह्मबुद्धिरुत्पन्ना ते जीवन्मुक्ता इत्यर्थः ॥ ३७ ॥

ननु जीवन्मुक्तः कः ? यथा देहोऽहं पुरुषोऽहं ब्राह्मणोऽहं शूद्रोऽहमस्मीति दृढनिश्चयस्तथा नाहं ब्राह्मणः न शूद्रः न पुरुषः किंतु असंगः सच्चिदानंदस्वरूपः प्रकाशरूपः सर्वांतर्यामी चिदाकाशरूपोऽस्मीति दृढनिश्चयरूपाऽपरोक्षज्ञानवान् जीवन्मुक्तः ॥ ३८ ॥ ब्रह्मैवाहमस्मीत्यपरोक्षज्ञानेन निखिलकर्मबंधविनिर्मुक्तः स्यात् ॥ कर्माणि कतिविधानि संतीति चेत् आगामिसंचितप्रारब्धभेदेन त्रिविधानि संति ॥ ३९ ॥ ज्ञानोत्पत्त्यनंतरं ज्ञानिदेहकृतं पुण्यपापरूपं कर्म यदस्ति तदागामीत्यभिधीयते ॥ ४० ॥ संचितं कर्म किम् । अनंतकोटिजन्मनां बीजभूतं सत् यत्कर्मजातं पूर्वार्जितं तिष्ठति तत्संचितं ज्ञेयम् ॥ ४१ ॥ प्रारब्धकर्म किमिति चेत् । इदं शरीरमुत्पाद्य इह लोके एवं सुखदुःखादिप्रदं यत्कर्म तत्प्रारब्धं भोगेन नष्टं भवति प्रारब्धकर्मणां भोगादेव क्षय इति ॥ ४२ ॥ संचितं कर्म ब्रह्मैवाहमिति निश्चयात्मकज्ञानेन नश्यति । आगामि कर्म अपि ज्ञानेन नश्यति । किंच आगामिकर्मणां नलिनीदलगतजलवत् ज्ञानिनां संबंधो नास्ति ॥ ४३ ॥ किंच ये ज्ञानिनं स्तुवंति भजंति अर्चयंति तान्प्रति ज्ञानिकृतम् आगामि पुण्यं गच्छति। ये ज्ञानिनं निंदंति द्विषंति दुःखप्रदानं कुर्वंति तान्प्रति ज्ञानिकृतं सर्वं आगामि क्रियमाणं यदवाच्यं कर्म पापात्मकं तद्गच्छति ॥ ४४ ॥ तथा चात्मवित्संसारं तीर्त्वा ब्रह्मानंदं इहैव आप्नोति । तरति शोकमात्मविदिति श्रुतेः ॥ ४५ ॥ तनुं त्यजतु वा काश्यां श्वपचस्य गृहेऽथवा ॥ ज्ञानसंप्राप्तिसमये मुक्तोऽसौ विगताशयः ॥ इति स्मृतेश्च ॥ ४७ ॥ इति श्रीमच्छंकराचार्यविरचितस्तत्त्वबोधः समाप्तः ॥ २५ ॥

---

## आत्मबोधः ॥ २६ ॥

ॐ परमात्मने नमः ॥ तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम् । मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् । पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिध्यति ॥ २ ॥ अविरोधितया कर्म नाविद्यां विनिवर्तयेत् । विद्याऽविद्यां निहन्त्येव तेजस्तिमिरसंघवत् ॥ ३ ॥ परिच्छिन्नमिवाज्ञानात्तन्नाशे सति केवलः । स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ॥ ४ ॥ अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्धि निर्मलम् । कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥५॥ संसारः स्वप्नतुल्यो हि रागद्वेषादिसंकुलः । स्वकाले सत्यवद्भाति प्रबोधे सत्यसद्भवेत् ॥ ६ ॥ तावत्सत्यं जगद्भाति शुक्तिकारजतं यथा । यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम् ॥ ७ ॥ सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः । व्यक्तयो विविधाः सर्वा हाटके कटकादिवत् ॥ ८ ॥ यथाकाशो हृषीकेशो नानोपाधिगतो विभुः । तद्भेदाद्भिन्नवद्भाति तन्नाशे सति केवलः ॥ ९ ॥ नानोपाधिवशादेव जातिवर्णाश्रमादयः । आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥ १० ॥ पञ्चीकृतमहाभूतसंभवं कर्मसंचितम् । शरीरं सुखदुःखानां भोगायतनमुच्यते ॥ ११ ॥ पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ १२ ॥ अनाद्यविद्याऽनिर्वाच्या कारणोपाधिरुच्यते । उपाधित्रितयादन्यमात्मानमवधारयेत् ॥ १३ ॥ पञ्चकोशादियोगेन तत्तन्मय इव स्थितः । शुद्धात्मा नीलवस्त्रादियोगेन स्फ-

टिको यथा ॥ १४ ॥ वपुस्तुपादिभिः कोशैर्युक्तं युक्त्यावघा-
ततः । आत्मानमन्तरं शुद्धं विविच्यात्तन्दुलं यथा ॥ १५ ॥
सदा सर्वगतोप्यात्मा न सर्वत्रावभासते । बुद्धावेवावभासेत
स्वच्छेषु प्रतिबिम्बवत् ॥ १६ ॥ देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो
विलक्षणम् । तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा ॥ १७ ॥
व्यापृतेष्विन्द्रियेष्वात्मा व्यापारीवाविवेकिनाम् । दृश्यतेऽभ्रेषु
धावत्सु धावन्निव यथा शशी ॥ १८ ॥ आत्मचैतन्यमाश्रित्य
देहेन्द्रियमनोधियः । स्वकीयार्थेषु वर्तन्ते सूर्यालोकं यथा जनाः
॥ १९ ॥ देहेन्द्रियगुणान्कर्माण्यमले सच्चिदात्मनि । अध्यस्य-
न्त्यविवेकेन गगने नीलतादिवत् ॥ २० ॥ अज्ञानान्मानसो-
पाधेः कर्तृत्वादीनि चात्मनि । कल्प्यन्तेऽम्बुगते चन्द्रे चलना-
दि यथाम्भसः ॥ २१ ॥ रागेच्छासुखदुःखादि बुद्धौ सत्यां
प्रवर्तते । सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः ॥ २२ ॥
प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता । स्वभावः सच्चिदान-
न्दनित्यनिर्मलतात्मनः ॥ २३ ॥ आत्मनः सच्चिदंशश्च बुद्धेर्वृ-
त्तिरिति द्वयम् । संयोज्य चाविवेकेन जानामीति प्रवर्तते॥२४॥
आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति । जीवः सर्व-
मलं ज्ञात्वा कर्ता द्रष्टेति मुह्यति ॥ २५ ॥ रज्जुसर्पवदात्मानं
जीवं ज्ञात्वा भयं वहेत् । नाहं जीवः परात्मेति ज्ञातं चेन्निर्भयो
भवेत् ॥ २६ ॥ आत्मावभासयत्येको बुद्ध्यादीनीन्द्रियाणि
हि । दीपो घटादिवत्स्वात्मा जडैस्तैर्नावभास्यते ॥ २७ ॥
स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः । न दीपस्यान्यदी-
पेच्छा यथा स्वात्मा प्रकाशते ॥ २८ ॥ निषिध्य निखिलोपा-
धीन्नेति नेतीति वाक्यतः । विद्यादैक्यं महावाक्यैर्जीवात्मपर-

मात्मनोः ॥ २९ ॥ आविद्यकं शरीरादि दृश्यं बुद्बुदवत्क्षरम् । एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्मलम् ॥ ३० ॥ देहान्यत्वान्न मे जन्म जराकार्श्यलयादयः । शब्दादिविषयैः सङ्गो निरिन्द्रियतया न च ॥ ३१ ॥ अमनस्त्वान्न मे दुःखरागद्वेषभयादयः । अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतिशासनात् ॥ ३२ ॥ निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः । निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥ ३३ ॥ अहमाकाशवत्सर्वं बहिरन्तर्गतोऽच्युतः । सदा सर्वसमः शुद्धो निःसङ्गो निर्मलोऽचलः ॥ ३४ ॥ नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् । सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥ ३५ ॥ एवं निरन्तराभ्यस्ता ब्रह्मैवास्मीति वासना । हरत्यविद्याविक्षेपान् रोगानिव रसायनम् ॥ ३६ ॥ विविक्तदेश आसीनो विरागो विजितेन्द्रियः । भावयेदेकमात्मानं तमनन्तमनन्यधीः ॥ ३७ ॥ आत्मन्येवाखिलं दृश्यं प्रविलाप्य धियः सुधीः । भावयेदेकमात्मानं निर्मलाकाशवत्सदा ॥ ३८ ॥ रूपवर्णादिकं सर्वं विहाय परमार्थवित् । परिपूर्णचिदानन्दस्वरूपेणावतिष्ठते ॥ ३९ ॥ ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते । चिदानन्दैकरूपत्वाद्दीप्यते स्वयमेव हि ॥ ४० ॥ एवमात्मारणौ ध्यानमन्थने सततं कृते । उदितावगतिर्ज्वाला सर्वाज्ञानेन्धनं दहेत् ॥ ४१ ॥ अरुणेनेव बोधेन पूर्वसन्तमसे हृते तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥ ४२ ॥ आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया । तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा ॥ ४३ ॥ स्थाणौ पुरुषवद्भ्रान्त्या कृता ब्रह्मणि जीवता । जीवस्य तात्त्विके रूपे तस्मिन् दृष्टे निवर्तते ॥ ४४ ॥ तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञान-

मञ्जसा । अहं ममेति चाज्ञानं बाधते दिग्भ्रमादिवत् ॥ ४५ ।
सम्यग्विज्ञानवान्योगी स्वात्मन्येवाखिलं स्थितम् । एवं च सर्वमा
त्मानमीक्षते ज्ञानचक्षुषा ॥ ४६ ॥ आत्मैवेदं जगत्सर्वमात्म
नोऽन्यन्न विद्यते । मृदो यद्वद्घटादीनि स्वात्मानं सर्वमीक्ष
॥ ४७ ॥ जीवन्मुक्तस्तु तद्विद्वान्पूर्वोपाधिगुणाँस्त्यजेत् । सचि
दानन्दरूपत्वाद्भवेद्भ्रमरकीटवत् ॥ ४८ ॥ तीर्त्वा मोहार्णवं हत्
रागद्वेषादिराक्षसान् । योगी शान्तिसमायुक्तो ह्यात्मारा
विराजते ॥ ४९ ॥ उपाधिस्थोऽपि तद्धर्मैर्न लिप्तो व्योमवन्मु
निः । सर्वविन्मूढवत्तिष्ठेदसक्तो वायुवच्चरेत् ॥ ५० ॥ बाह्य
नित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः । घटस्थदीपवत् स्वच्छ
स्वान्तरेव प्रकाशते ॥ ५१ ॥ उपाधिविलयाद्विष्णौ निर्विशे
विशेन्मुनिः । जले जलं वियद्व्योम्नि तेजस्तेजसि वा यथा॥५२
यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम् । यज्ज्ञानान्नाप
ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥ ५३ ॥ यद्दृष्ट्वा न परं दृश्यं यद्भूत्
न पुनर्भवः । यज्ज्ञात्वा न परं ज्ञेयं तद्ब्रह्मेत्यवधारयेत् ॥ ५४ ।
तिर्यगूर्ध्वमधः पूर्णं सच्चिदानन्दमव्ययम् । अनन्तं नित्यमे
यत्तद्ब्रह्मेत्यवधारयेत् ॥ ५५ ॥ अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्य
तेऽव्ययम् । अखण्डानन्दमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥ ५६ ।
अखण्डानन्दरूपस्य तस्यानन्दलवाश्रिताः । ब्रह्माद्यास्तारतम्ये
भवन्त्यानन्दिनोऽखिलाः ॥ ५७ ॥ तद्युक्तमखिलं वस्तु व्यव
हारस्तदन्वितः । तस्मात्सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले॥५८
अनण्वस्थूलमह्रस्वमदीर्घमजमव्ययम् । अरूपगुणवर्णाख्यं तद्ब्र
ह्मेत्यवधारयेत् ॥ ५९ ॥ यद्भासा भासतेऽर्कादि भास्यैर्यत्तु न
भास्यते । येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत् ॥ ६० ।

स्वयमन्तर्बहिर्व्याप्य भासयन्नखिलं जगत् । ब्रह्म प्रकाशते वह्नि-
प्रतप्तायसपिण्डवत् ॥ ६१ ॥ जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न
किंचन । ब्रह्मान्यद्भाति चेन्मिथ्या यथा मरुमरीचिका ॥ ६२॥
दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत् । तत्त्वज्ञानाच्च तद्ब्रह्म
सच्चिदानन्दमद्वयम् ॥ ६३ ॥ सर्वगं सच्चिदात्मानं ज्ञानचक्षु-
र्निरीक्षते । अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥ ६४ ॥
श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरितापितः । जीवः सर्वमलान्मुक्तः
स्वर्णवद्द्योतते स्वयम् ॥ ६५ ॥ हृदाकाशोदितो ह्यात्मा बोध-
भानुस्तमोपहृत् । सर्वव्यापी सर्वधारी भाति सर्वं प्रकाशते
॥ ६६ ॥ दिग्देशकालाद्यनपेक्ष्यः सर्वगं शीतादिहृन्नित्यसुखं
निरञ्जनम् । यः स्वात्मतीर्थं भजते विनिष्क्रियः स सर्ववित्स-
र्वगतोऽमृतो भवेत् ॥ ६७ ॥ इति श्रीमत्परमहंसपरिव्राजका-
चार्यश्रीमच्छंकराचार्यकृत आत्मबोधः समाप्तः ॥ २६ ॥

---

## वाक्यसुधा ॥ २७ ॥

ॐ परमात्मने नमः ॥ रूपं दृश्यं लोचनं दृक् तद्दृश्यं दृक्तु
मानसं । दृश्या धीवृत्तयः साक्षी दृगेव न तु दृश्यते ॥ १ ॥
नीलपीतस्थूलसूक्ष्मह्रस्वदीर्घादिभेदतः । नानाविधानि रूपाणि
पश्यल्लोचनमेकधा ॥ २ ॥ आन्ध्यमान्द्यपटुत्वेषु नेत्रधर्मेष्वने-
कधा । संकल्पयन्मनः श्रोत्रत्वगादौ योज्यतामिति ॥ ३ ॥
कामः संकल्पसंदेहौ श्रद्धाश्रद्धे धृतीतरे । ह्रीर्धीर्भीरित्येवमादी-
न्भासयत्येकधा चितिः ॥ ४ ॥ नोदेति नास्तमेत्येषा न वृद्धिं
याति न क्षयं । स्वयं तथाविधान्यानि भासयेत्साधनं विना
॥ ५ ॥ चिच्छायावेशतो बुद्धौ भानं धीस्तु द्विधा स्थिता ।

एकाहंकृतिरन्या स्यादन्तःकरणरूपिणी ॥ ६ ॥ छायाहंका
योरैक्यं तप्तायःपिंडवन्मतम् । तदहंकारतादात्म्याद्देहश्चेतनता
मियात् ॥ ७ ॥ अहंकारस्य तादात्म्यं चिच्छायादेहसाक्षिभिः
सहजं कर्मजं भ्रान्तिजन्यं च त्रिविधं क्रमात् ॥ ८ ॥ संबन्धि
नोः सतोर्नास्ति निवृत्तिः सहजस्य तु । कर्मक्षयात्प्रबोधा
निवर्तेते क्रमादुभे ॥ ९ ॥ अहंकारलये सुप्तौ भवेद्देहोप्यचेतनः
अहंकृतिविकारोत्थः स्वप्नः सर्वस्तु जागरः ॥ १० ॥ अंतःक
णवृत्तिस्तु चितिच्छायैक्यमागता । वासनाः कल्पयत्येव बो
ऽक्षैर्विषयान्न हि ॥ ११ ॥ मनोहंकृत्युपादानं लिंगमेकं जड
त्मकं । अवस्थात्रयमन्वेति जायते म्रियतेऽपिवा ॥ १२ ॥ शक्ति
द्वयं हि मायाया विक्षेपावृत्तिरूपकम् । विक्षेपशक्तिर्लिङ्गादि
ह्माण्डान्तं जगत्सृजेत् ॥ १३ ॥ अन्तर्दृग्दृश्ययोर्भेदं बहि
ब्रह्मसर्गयोः । या वृणोत्यपरा शक्तिः सा संसारस्य कार
॥ १४ ॥ सृष्टिर्नाम ब्रह्मरूपे सच्चिदानंदवस्तुनि । अम्बुफे
दिवत्सर्वं नामरूपप्रसारणम् ॥ १५ ॥ साक्षिणः पुरतो भा
लिङ्गदेहेन संयुतः । चितिच्छायासमावेशाज्जीवः स्याद्व्याव
रिकः ॥ १६ ॥ अस्य जीवत्वमारोपात्साक्षिण्यपि च भासते
आवृत्तौ तु विनष्टायां भेदजातं प्रयाति तत् ॥ १७ ॥ सर्ग
ब्रह्मणस्तद्वद्भेदमावृत्य तिष्ठति । या शक्तिस्तद्वशाद्ब्रह्म विकृ
त्वेन भासते ॥ १८ ॥ अत्राप्यावृत्तिनाशेन विभाति ब्रह्म
गयोः । भेदस्ततो विकारः स्यात्सर्गेन ब्रह्मणि क्वचित् ॥ १९
अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरू
जगद्रूपं ततो द्वयम् ॥ २० ॥ खवाय्वग्निजलोर्वीषु देवतिर्यङ्
रादिषु । अभिन्नात्सच्चिदानंदाद्भिद्येते रूपनामनी ॥ २१

उपेक्ष्य नामरूपे द्वे सच्चिदानंदवस्तुनि । समाधिं सर्वदा कुर्या-
द्धृदये वाथवा बहिः ॥ २२ ॥ सविकल्पोऽविकल्पश्च समाधि-
र्द्विविधो हृदि । दृश्यशब्दानुवेधेन सविकल्पः पुनर्द्विधा
॥ २३ ॥ कामाद्याश्चित्तसादृश्यात्तत्साक्षित्वेन चेतनाम् । ध्या-
येद्दृश्यानुविद्धोयं समाधिः सविकल्पकः ॥ २४ ॥ असंगः
सच्चिदानंदस्वप्रभो द्वैतवर्जितः । अस्मीति शब्दविद्धोयं सविकल्पः
समाहितः ॥ २५ ॥ स्वानुभूतिरसावेशाद्दृश्यशब्दाद्युपेक्ष्यतु ।
निर्विकल्पः समाधिः स्यान्निर्वातस्थलदीपवत् ॥ २६ ॥ हृदि
च बाह्यदेशेपि यस्मिन्कस्मिंश्च वस्तुनि । समाधिराद्यः सन्मात्रे
नामरूपे पृथक्स्थितः ॥ २७ ॥ अखण्डैकरसं वस्तु सच्चिदानं-
दलक्षणम् । इत्यविच्छिन्नचित्तेऽयं समाधिर्मध्यमो भवेत् ॥ २८ ॥
स्तब्धभावो रसास्वादात्तृतीयः पूर्ववन्मतः । एतैः समाधिभिः
षड्भिर्नयेत्कालं निरन्तरम् ॥ २९ ॥ देहाभिमाने गलिते विज्ञा-
ते परमात्मनि । यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ ३० ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य
कर्माणि तस्मिन्दृष्टे परावरे ॥ ३१ ॥ अवच्छिन्नश्चिदाभासस्तृ-
तीयः स्वप्नकल्पितः । विज्ञेयस्त्रिविधो जीवस्तत्राद्यः पारमा-
र्थिकः ॥ ३२ ॥ अवच्छेदः कल्पितः स्यादवच्छेद्यं तु वास्तवम् ।
तस्मिञ्जीवत्वमारोपाद्ब्रह्मत्वं तु स्वभावतः ॥ ३३ ॥ अवच्छिन्न-
स्य जीवस्य तादात्म्यं ब्रह्मणा सह । तत्त्वमस्यादिवाक्यानि जगु-
र्नेतरजीवयोः ॥ ३४ ॥ ब्रह्मण्यवस्थिता माया विक्षेपावृतिरू-
पिका । आवृत्याखण्डता तस्मिञ्जगज्जीवौ प्रकल्पयेत् ॥ ३५ ॥
जीवो धीस्थश्चिदाभासो जगत्स्याद्भूतभौतिकम् । अनादिकाल-
मारभ्य मोक्षात्पूर्वमिदं द्वयम् ॥ ३६ ॥ चिदाभासे स्थिता निद्रा

विक्षेपावृतिरूपिणी । आवृत्य जीवजगती पूर्वं नूत्नेन कल्पयेत् पर
॥ ३७ ॥ प्रतीतिकाल एवैते स्थितत्वात्प्रातिभासिके । न हि॥
स्वप्नप्रबुद्धस्य पुनः स्वप्ने स्थितिस्तयोः ॥ ३८ ॥ प्रातिभासिकजीका
वस्तु जगत्तत्प्रातिभासिकम् । वास्तवं मन्यते यस्तु मिथ्येति नि
व्यावहारिकः ॥ ३९ ॥ व्यावहारिकजीवस्तु जगत्तद्व्यावहारिक
कम् । सत्ये प्रत्येति मिथ्येति मन्यते पारमार्थिकः ॥ ४० ॥ ण
पारमार्थिकजीवस्तु ब्रह्मैकं पारमार्थिकम् । प्रत्येति वीक्षते नो
नान्यद्वीक्षेत्त्वनृतात्मना ॥ ४१ ॥ माधुर्यद्रवशैत्यादिजलधर्मा हि
स्तरंगके । अनुगम्याऽपि तन्निष्ठे फेनेप्यनुगता यथा ॥ ४२ ॥ को
प्रातिभासिकजीवस्य लये स्युर्व्यावहारिके । तल्लये सच्चिदानन्द्य
नंदाः पर्यवस्यन्ति साक्षिणि ॥ ४३ ॥ इति श्रीमच्छंकराचार्य
विरचितवाक्यसुधा संपूर्णा ॥ २७ ॥

---

अथाऽपरोक्षानुभूतिप्रारम्भः ॥ २८ ॥

ॐपरमात्मने नमः ॥ श्रीहरिं परमानन्दमुपदेष्टारमीश्व
रम् । व्यापकं सर्वलोकानां कारणं तं नमाम्यहम् ॥ १ ॥
अपरोक्षानुभूतिर्वै प्रोच्यते मोक्षसिद्धये । सद्भिरेव प्रयत्नेन
वीक्षणीया मुहुर्मुहुः ॥ २ ॥ स्ववर्णाश्रमधर्मेण तपसा हरितोष
पणात् । साधनं प्रभवेत्पुंसां वैराग्यादिचतुष्टयम् ॥ ३ ॥ ब्रह्मा
दिस्थावरान्तेषु वैराग्यं विषयेष्वनु । यथैव काकविष्ठायां वैराग्यं
तद्धि निर्मलम् ॥ ४ ॥ नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीत
गम् । एवं यो निश्चयः सम्यग्विवेको वस्तुनः स वै ॥ ५ ॥
सदैव वासनात्यागः शमोऽयमिति शब्दितः । निग्रहो बाह्यवृ
त्तीनां दम इत्यभिधीयते ॥ ६ ॥ विषयेभ्यः परावृत्तिः परमं

परतिर्हि सा । सहनं सर्वदुःखानां तितिक्षा सा शुभा मता
॥ ७ ॥ निगमाचार्यवाक्येषु भक्तिः श्रद्धेति विश्रुता । चित्तै-
काग्र्यं तु सल्लक्ष्ये समाधानमिति स्मृतम् ॥ ८ ॥ संसारबन्ध-
निर्मुक्तिः कथं मे स्यात्कदा विधे । इति या सुदृढा बुद्धिर्व-
क्तव्या सा मुमुक्षुता ॥ ९ ॥ उक्तसाधनयुक्तेन विचारः पुरुषे-
ण हि । कर्तव्यो ज्ञानसिद्ध्यर्थमात्मनः शुभमिच्छता ॥ १० ॥
नोत्पद्यते विना ज्ञानं विचारेणान्यसाधनैः । यथा पदार्थभानं
हि प्रकाशेन विना क्वचित् ॥ ११ ॥ कोऽहं कथमिदं जातं
को वै कर्ताऽस्य विद्यते । उपादानं किमस्तीह विचारः सो-
ऽयमीदृशः ॥१२॥ नाहं भूतगणो देहो नाहं चाक्षगणस्तथा ।
एतद्विलक्षणः कश्चिद्विचारः सोऽयमीदृशः ॥ १३ ॥ अज्ञानप्र-
भवं सर्वं ज्ञानेन प्रविलीयते । संकल्पो विविधः कर्ता विचा-
रः सोऽयमीदृशः ॥ १४ ॥ एतयोर्यदुपादानमेकं सूक्ष्मं सद-
व्ययम् । यथैव मृद्धटादीनां विचारः सोऽयमीदृशः ॥ १५ ॥
अहमेकोऽपि सूक्ष्मश्च ज्ञाता साक्षी सदव्ययः । तदहं नात्र
संदेहो विचारः सोऽयमीदृशः ॥ १६ ॥ आत्मा विनिष्कलो
ह्येको देहो बहुभिरावृतः । तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः
परम् ॥ १७ ॥ आत्मा नियामकश्चान्तर्देहो बाह्यो नियम्यकः ।
तयोरैक्यं० ॥ १८ ॥ आत्मा ज्ञानमयः पुण्यो देहो मांसमयो-
ऽशुचिः । तयोरैक्यं० ॥ १९ ॥ आत्मा प्रकाशकः स्वच्छो
देहस्तामस उच्यते । तयोरैक्यं० ॥ २० ॥ आत्मा नित्यो हि
सद्रूपो देहोऽनित्यो ह्यसन्मयः । तयोरैक्यं० ॥ २१ ॥ आत्म-
नस्तत्प्रकाशत्वं यत्पदार्थावभासनम् । नाग्न्यादिदीप्तिवद्दीप्ति-
र्भवत्यान्ध्यं यतो निशि ॥ २२ ॥ देहोऽहमित्ययं मूढो धृत्वा

तिष्ठत्यहो जनः । ममायमित्यपि ज्ञात्वा घटद्रष्टेव सर्वद
॥ २३ ॥ ब्रह्मैवाहं समः शान्तः सच्चिदानन्दलक्षणः । ना
देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २४ ॥ निर्विका
निराकारो निरवद्योऽहमव्ययः । नाहं देहो ह्यसद्रूपो ज्ञानमि
त्युच्यते बुधैः ॥ २५ ॥ निरामयो निराभासो निर्विकल्पोऽ
माततः । नाहं देहो० ॥ २६ ॥ निर्गुणो निष्क्रियो नि
नित्यमुक्तोऽहमच्युतः । नाहं देहो० ॥ २७ ॥ निर्मलो नि
श्चलोऽनन्तः शुद्धोऽहमजरोऽमरः । नाहं देहो० ॥ २८
स्वदेहे शोभनं सन्तं पुरुषाख्यं च संमतम् । किं मूर्ख शू
मात्मानं देहातीतं करोषि भोः ॥ २९ ॥ स्वात्मानं शृणु मू
त्वं श्रुत्या युक्त्या च पूरुषम् । देहातीतं सदाकारं सुदु
भवादृशैः ॥ ३० ॥ अहंशब्देन विख्यात एक एव स्थितः प
स्थूलस्त्वनेकतां प्राप्तः कथं स्याद्देहकः पुमान् ॥ ३१
अहं द्रष्टृतया सिद्धो देहो दृश्यतया स्थितः । ममायमिति नि
शात्कथं० ॥ ३२ ॥ अहं विकारहीनस्तु देहो नित्यं विका
वान् । इति प्रतीयते साक्षात्कथं० ॥ ३३ ॥ यस्मात्परमि
श्रुत्या तया पुरुषलक्षणम् । विनिर्णीतं विमूढेन कथं० ॥३
सर्वं पुरुष एवेति सूक्ते पुरुषसंज्ञिते । अप्युच्यते यतः श्रु
कथं० ॥ ३५ ॥ असङ्गः पुरुषः प्रोक्तो बृहदारण्यकेऽपि
अनन्तमलसंश्लिष्टः कथं० ॥३६॥ तत्रैव च समाख्यातः स्व
ज्योतिर्हि पूरुषः । जडः परप्रकाश्योऽसौ कथं० ॥ ३
प्रोक्तोऽपि कर्मकाण्डेन ह्यात्मा देहाद्विलक्षणः । नित्यश्च तत्
भुंक्ते देहपातादनन्तरम् ॥३८॥ लिङ्गं चानेकसंयुक्तं चलं
विकारि च । अव्यापकमसद्रूपं तत्कथं स्यात्पुमानयम् ॥३

एवं देहद्वयादन्य आत्मपूरुष ईश्वरः । सर्वात्मा सर्वरूपश्च सर्वातीतोऽहमव्ययः ॥ ४० ॥ इत्यात्मदेहभागेन प्रपञ्चस्यैव सत्यता । यथोक्ता तर्कशास्त्रेण ततः किं पुरुपार्थता ॥ ४१ ॥ इत्यात्मदेहभेदेन देहात्मत्वं निवारितम् । इदानीं देहभेदस्य ह्यसत्त्वं स्फुटमुच्यते ॥ ४२ ॥ चैतन्यस्यैकरूपत्वाद्भेदो युक्तो न कर्हिचित् । जीवत्वं च मृपा ज्ञेयं रज्जौ सर्पग्रहो यथा ॥ ४३ ॥ रज्ज्वज्ञानात् क्षणेनैव यद्वद्रज्जुर्हि सर्पिणी । भाति तद्वच्चितिः साक्षाद्विश्वाकारेण केवला ॥४४॥ उपादानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते । तस्मात्सर्वप्रपञ्चोऽयं ब्रह्मैवास्ति न चेतरत्॥४५॥ व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् । इति ज्ञाते परे तत्त्वे भेदस्यावसरः कुतः ॥ ४६ ॥ श्रुत्या निवारितं नूनं नानात्वं स्वमुखेन हि । कथं भासो भवेदन्यः स्थिते चाद्वयकारणे ॥ ४७ ॥ दोपोऽपि विहितः श्रुत्या मृत्योर्मृत्युं स गच्छति । इह पश्यति नानात्वं मायया वञ्चितो नरः ॥ ४८ ॥ ब्रह्मणः सर्वभूतानि जायन्ते परमात्मनः । तस्मादेतानि ब्रह्मैव भवन्तीत्यवधारयेत् ॥ ४९ ॥ ब्रह्मैव सर्वनामानि रूपाणि विविधानि च । कर्माण्यपि समग्राणि बिभर्तीति श्रुतिर्जगौ ॥ ५० ॥ सुवर्णाज्जायमानस्य सुवर्णत्वं च शाश्वतम् । ब्रह्मणो जायमानस्य ब्रह्मत्वं च तथा भवेत् ॥ ५१ ॥ स्वल्पमप्यन्तरं कृत्वा जीवात्मपरमात्मनोः । यः संतिष्ठति मूढात्मा भयं तस्याभिभापितम् ॥ ५२ ॥ यत्राज्ञानाद्भवेद्द्वैतमितरस्तत्र पश्यति । आत्मत्वेन यदा सर्वं नेतरस्तत्र चाण्वपि ॥ ५३ ॥ यस्मिन्सर्वाणि भूतानि ह्यात्मत्वेन विजानतः । न वै तस्य भवेन्मोहो न च शोकोऽद्वितीयतः ॥ ५४ ॥ अयमात्मा हि

वेदान्तसिद्धान्तअमृतम्



ब्रह्मैव सर्वात्मकतया स्थितः । इति निर्धारितं श्रुत्या बृहदा
ण्यसंस्थया ॥ ५५ ॥ अनुभूतोऽप्ययं लोको व्यवहारक्षमोऽ
ॐ सन् । असद्रूपो यथा स्वप्न उत्तरक्षणबाधतः ॥ ५६ ॥ स्वप्नो
जागरणेऽलीकः स्वप्नेऽपि जागरो न हि । द्वयमेव लये नाि
लयोपि ह्युभयोर्न च ॥ ५७ ॥ त्रयमेवं भवेन्मिथ्या गुणत्र
विनिर्मितम् । अस्य द्रष्टा गुणातीतो नित्यो ह्येकश्चिदात्म
॥ ५८ ॥ यद्वन्मृदि घटभ्रान्ति शुक्तौ वा रजतस्थितिम् । त
ब्रह्मणि जीवत्वं वीक्ष्यमाणे न पश्यति ॥ ५९ ॥ यथा मृ
घटो नाम कनके कुण्डलाभिधा । शुक्तौ हि रजतख्यातिं
वशब्दस्तथा परे ॥६०॥ यथैव व्योम्नि नीलत्वं यथा नीरं म
स्थले । पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥ ६१
यथैव शून्ये वैतालो गन्धर्वाणां पुरं यथा । यथाकाशे द्वि
न्द्रत्वं तद्वत्सत्ये जगत्स्थितिः ॥६२॥ यथा तरङ्गकल्लोलैर्जल
स्फुरत्यलम् । पात्ररूपेण ताम्रं हि ब्रह्माण्डौघैस्तथात्मता ॥६
घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः । जगन्नाम्ना चि
भाति ज्ञेयं तत्तदभावतः॥ ६४ ॥ सर्वोपि व्यवहारस्तु ब्रह्म
क्रियते जनैः । अज्ञानान्न विजानन्ति मृदेव हि घटादि
॥ ६५ ॥ कार्यकारणता नित्यमास्ते घटमृदोर्यथा । तथैव श्रु
युक्तिभ्यां प्रपञ्चब्रह्मणोरिह ॥ ६६ ॥ गृह्यमाणे घटे यद्व
त्तिका याति वै बलात् । वीक्ष्यमाणे प्रपञ्चेऽपि ब्रह्मैवाभा
भासुरम् ॥ ६७ ॥ स हैवात्मा विशुद्धोऽस्ति ह्यशुद्धो भाति
सदा । यथैव द्विविधा रज्जुर्ज्ञानिनोऽज्ञानिनोऽनिशम् ॥ ६८
यथैव मृन्मयः कुंभस्तद्वद्देहोऽपि चिन्मयः । आत्मानात्मवि
गोऽयं मुधैव क्रियतेऽबुधैः ॥ ६९ ॥ सर्पत्वेन यथा रज्जू रज

त्वेन शुक्तिका । विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥७०॥ घटत्वेन यथा पृथ्वी पटत्वेनैव तन्तवः । विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७१ ॥ कनकं कुण्डलत्वेन तरंगत्वेन वै जलम् । विनिर्णीतं० ॥ ७२ ॥ पुरुषत्वे यथा स्थाणुर्जलत्वेन मरीचिका । विनिर्णीता० ॥ ७३ ॥ गृहत्वेनैव काष्ठानि खड्गत्वेनैव लोहता । विनिर्णीता० ॥ ७४ ॥ यथा वृक्षविपर्यासो जलाद्भवति कस्य चित् । तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७५ ॥ पोतेन गच्छतः पुंसः सर्वं भातीव चञ्चलम् । तद्वदा० ॥ ७६ ॥ पीतत्वं हि यथा शुभ्रे दोषाद्भवति कस्य चित् । तद्व० ॥ ७७ ॥ चक्षुर्भ्यां भ्रमशीलाभ्यां सर्वं भाति भ्रमात्मकम् । तद्व० ॥ ७८ ॥ अलातं भ्रमणेनैव वर्त्तुलं भाति सूर्यवत् । तद्वदा० ॥ ७९ ॥ महत्त्वे सर्ववस्तूनामणुत्वं ह्यतिदूरतः । तद्वदा० ॥ ८० ॥ सूक्ष्मत्वे सर्वभावानां स्थूलत्वं चोपनेत्रतः । तद्वदा ॥ ८१ ॥ काचभूमौ जलत्वं वा जलभूमौ हि काचता । तद्वदा० ॥ ८२ ॥ यद्वदग्नौ मणित्वं हि मणौ वा वह्निता पुनः । तद्वदा० ॥ ८३ ॥ अभ्रेषु सत्सु धावत्सु सोमो धावति भाति वै । तद्वदा० ॥ ८४ ॥ यथैव दिग्विपर्यासो मोहाद्भवति कस्यचित् । तद्वदा० ॥ ८५ ॥ यथा शशी जले भाति चञ्चलत्वेन कस्यचित् । तद्वदा० ॥ ८६ ॥ एवमात्मन्यविद्यातो देहाध्यासो हि जायते । स एवात्मपरिज्ञानाल्लीयते च परात्मनि ॥ ८७ ॥ सर्वमात्मतया ज्ञातं जगत्स्थावरजंगमम् । अभावात्सर्वभावानां देहस्य चात्मता कुतः ॥८८॥ आत्मानं सततं जानन्कालं नय महाद्युते । प्रारब्धमखिलं भुंजन्नोद्वेगं कर्तुमर्हसि ॥ ८९ ॥ उत्पन्नेप्यात्मविज्ञाने प्रारब्धं नैव मुञ्चति । इति

यच्छ्रूयते शास्त्रे तन्निराक्रियतेऽधुना ॥ ९० ॥ तत्त्वज्ञानोदय
दूर्ध्वं प्रारब्धं नैव विद्यते । देहादीनामसत्त्वात्तु यथा स्वप्नो विबो
धतः ॥ ९१ ॥ कर्म जन्मान्तरीयं यत्प्रारब्धमिति कीर्तितम्
तत्तु जन्मान्तराभावात्पुंसो नैवास्ति कर्हिचित् ॥ ९२ ॥ स्वप्न
देहो यथाध्यस्तस्तथैवायं हि देहकः । अध्यस्तस्य कुतो जन्म
जन्माभावे हि तत्कुतः ॥ ९३ ॥ उपादानं प्रपञ्चस्य मृद्भा
ण्डस्येव कथ्यते । अज्ञानं चैव वेदान्तैस्तस्मिन्नष्टे क विश्व
॥ ९४ ॥ यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात् । त
त्सत्यमविज्ञाय जगत्पश्यति मूढधीः ॥ ९५ ॥ रज्जुरूपे प
ज्ञाते सर्पखण्डं न तिष्ठति । अधिष्ठाने तथा ज्ञाते प्रपञ्चः श
न्यतां गतः ॥ ९६ ॥ देहस्यापि प्रपञ्चत्वात्प्रारब्धावस्थि
कुतः । अज्ञानिजनबोधार्थं प्रारब्धं वक्ति वै श्रुतिः ॥ ९७
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे । बहुत्वं तन्निषेधा
श्रुत्या गीतं च यत्स्फुटम् ॥ ९८ ॥ उच्यतेऽज्ञैर्बलाच्चैतत्तदा
र्थद्वयागमः । वेदान्तमतहानं च यतो ज्ञानमिति श्रुतिः ॥९९
त्रिपञ्चांगान्यथो वक्ष्ये पूर्वोक्तस्य हि लब्धये । तच्च सर्वैः सदा का
निदिध्यासनमेव तु ॥ १०० ॥ नित्याभ्यासादृते प्राप्तिर्न भ
त्सच्चिदात्मनः । तस्माद्ब्रह्म निदिध्यासेज्जिज्ञासुः श्रेयसे चि
॥ १०१ ॥ यमो हि नियमस्त्यागो मौनं देशश्च कालता
आसनं मूलबन्धश्च देहसाम्यं च दृक्स्थितिः ॥ १०२ ॥ प्राण
संयमनं चैव प्रत्याहारश्च धारणा । आत्मध्यानं समाधि
प्रोक्तान्यंगानि वै क्रमात् ॥ १०३ ॥ सर्वं ब्रह्मेति विज्ञाना
द्रियग्रामसंयमः । यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मु
॥ १०४ ॥ सजातीयप्रवाहश्च विजातीयतिरस्कृतिः । निय

हि परानन्दो नियमात्क्रियते बुधैः ॥१०५॥ त्यागः प्रपञ्चरूपस्य चिदात्मत्वावलोकनात् । त्यागो हि महतां पूज्यः सद्यो मोक्षमयो यतः ॥ १०६ ॥ यस्माद्वाचो निवर्तन्ते अप्राप्य मनसा सह । यन्मौनं योगिभिर्गम्यं तद्भवेत्सर्वदा बुधः ॥ १०७ ॥ वाचो यस्मान्निवर्तन्ते तद्वक्तुं केन शक्यते । प्रपञ्चो यदि वक्तव्यः सोपि शब्दविवर्जितः ॥१०८॥ इति वा तद्भवेन्मौनं सतां सहजसंज्ञितम् । गिरा मौनं तु बालानां प्रयुक्तं ब्रह्मवादिभिः ॥ १०९ ॥ आदावन्ते च मध्ये च जनो यस्मिन्न विद्यते । येनेदं सततं व्याप्तं स देशो विजनः स्मृतः ॥ ११० ॥ कलनात्सर्वभूतानां ब्रह्मादीनां निमेषतः । कालशब्देन निर्दिष्टो ह्यखण्डानन्द अद्वयः ॥ १११ ॥ सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिंतनम् । आसनं तद्विजानीयान्नेतरत्सुखनाशनम् ॥ ११२ ॥ सिद्धं यत्सर्वभूतादि विश्वाधिष्ठानमव्ययम् । यस्मिन्सिद्धाः समाविष्टास्तद्वै सिद्धासनं विदुः ॥ ११३ ॥ यन्मूलं सर्वभूतानां यन्मूलं चित्तबन्धनं । मूलबन्धः सदा सेव्यो योग्योसौ राजयोगिनाम् ॥ ११४ ॥ अंगानां समतां विद्यात्समे ब्रह्मणि लीयते । नोचेन्नैव समानत्वमृजुत्वं शुष्कवृक्षवत् ॥ ११५ ॥ दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् । सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥ ११६ ॥ दृष्टिदर्शनदृश्यानां विरामो यत्र वा भवेत् । दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकिनी ॥ ११७ ॥ चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् । निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ॥ ११८ ॥ निषेधनं प्रपञ्चस्य रेचकाख्यः समीरणः । ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरीरितः ॥ ११९ ॥ ततस्तद्वृत्तिनैश्चल्यं कुंभकः प्राणसंयमः । अयं

चापि प्रबुद्धानामज्ञानां घ्राणपीडनम् ॥ १२० ॥ विषयेष्वा
त्मतां दृष्ट्वा मनसश्चितिमज्जनम् । प्रत्याहारः स विज्ञेयोऽभ्य
सनीयो मुमुक्षुभिः ॥ १२१ ॥ यत्र यत्र मनो याति ब्रह्मणस्त
दर्शनात् । मनसो धारणं चैव धारणा सा परा मता ॥१२२
ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः । ध्यानशब्दे
विख्याता परमानन्ददायिनी ॥ १२३ ॥ निर्विकारतया वृत्त्या
ब्रह्माकारतया पुनः । वृत्तिविस्मरणं सम्यक् समाधिर्ज्ञानसं
ज्ञकः ॥ १२४ ॥ इमं च कृत्रिमानन्दं तावत्साधु समभ्यसेत्
वश्यो यावत्क्षणात्पुंसः प्रयुक्तः सन्भवेत्स्वयम् ॥ १२५ ॥ तत
साधननिर्मुक्तः सिद्धो भवति योगिराट् । तत्स्वरूपं न चैतस्य
विषयो मनसो गिराम् ॥ १२६ ॥ समाधौ क्रियमाणे
विघ्नान्यायान्ति वै बलात् । अनुसंधानराहित्यमालस्यं भोग
लालसम् ॥ १२७ ॥ लयस्तमश्च विक्षेपो रसास्वादश्च शून्यता
एवं यद्विघ्नबाहुल्यं त्याज्यं ब्रह्मविदा शनैः ॥ १२८ ॥ भाव
वृत्त्या हि भावत्वं शून्यवृत्त्या हि शून्यता । ब्रह्मवृत्त्या हि
पूर्णत्वं तथा पूर्णत्वमभ्यसेत् ॥ १२९ ॥ ये हि वृत्तिं जहत्येनां
ब्रह्माख्यां पावनीं पराम् । ते तु वृथैव जीवन्ति पशुभिः
समा नराः ॥१३०॥ ये हि वृत्तिं विजानन्ति ज्ञात्वापि वर्द्धयन्ति
ये । ते वै सत्पुरुषा धन्या वंद्यास्ते भुवनत्रये ॥ १३१ ॥ येषां
वृत्तिः समा वृद्धा परिपक्वा च सा पुनः । ते वै सद्ब्रह्मतां प्राप्ता
नेतरे शब्दवादिनः ॥ १३२ ॥ कुशला ब्रह्मवार्तायां वृत्ति
हीनाः सुरागिणः । तेप्यज्ञानितया नूनं पुनरायान्ति यान्ति
च ॥ १३३ ॥ निमेषार्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना
यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ॥१३४॥ कार्ये

कारणता याता कारणेन हि कार्यता । कारणत्वं ततो गच्छे-त्कार्याभावे विचारतः ॥ १३५ ॥ अथ शुद्धं भवेद्वस्तु यद्वै वाचामगोचरम् । द्रष्टव्यं मृद्धटेनैव दृष्टान्तेन पुनः पुनः॥१३६॥ अनेनैव प्रकारेण वृत्तिर्ब्रह्मात्मिका भवेत् । उदेति शुद्धचित्तानां वृत्तिज्ञानं ततः परम् ॥ १३७ ॥ कारणव्यतिरेकेण पुमानादौ विलोकयेत् । अन्वयेन पुनस्तद्धि कार्ये नित्यं प्रपश्यति ॥१३८॥ कार्ये हि कारणं पश्येत्पश्चात्कार्यं विसर्जयेत् । कारणत्वं ततो गच्छेदवशिष्टं भवेन्मुनिः ॥ १३९ ॥ भावितं तीव्रवेगेन यद्वस्तु निश्चयात्मना । पुमांस्तद्धि भवेच्छीघ्रं ज्ञेयं भ्रमरकीटवत् ॥ १४० ॥ अदृश्यं भावरूपं च सर्वमेव चिदात्मकम् । साव-धानतया नित्यं स्वात्मानं भावयेद्बुधः ॥ १४१ ॥ दृश्यं ह्यदृ-श्यतां नीत्वा ब्रह्माकारेण चिंतयेत् । विद्वान्नित्यसुखे तिष्ठे-द्धिया चिद्रसपूर्णया ॥ १४२ ॥ एभिरंगैः समायुक्तो राजयोग उदाहृतः । किंचित्पक्वकषायाणां हठयोगेन संयुतः ॥१४३॥ परिपक्वं मनो येषां केवलोऽयं च सिद्धिदः । गुरुदैवतभक्तानां सर्वेषां सुलभो जवात् ॥ १४४ ॥ इति श्रीपरमहंसपरिव्राजका-चार्यश्रीमच्छंकरभगवता विरचितापरोक्षानुभूतिः समाप्ता२८

---

## स्वात्मनिरूपणम् ॥ २९ ॥

ॐ परमात्मने नमः ॥ श्रीगुरुचरणद्वन्द्वं वन्देहं, मथितदुःसहद्वन्द्वम् । भ्रान्तिग्रहोपशान्तिं पांसुमयं यस्य भसितमातनुते ॥ १ ॥ देशिकवरं दयालुं वन्देहं निहतसकलसन्देहम् । यच्च-रणद्वयमद्वयमनुभवमुपदिशति तत्परस्यार्थम् ॥ २ ॥ संसारदा-वपावकसंतप्तः सकलसाधनोपेतः । स्वात्मनिरूपणनिपुणं वाक्य

शिष्यः प्रबोध्यते गुरुणा ॥३॥ अस्ति स्वयमित्यस्मिन्नंशे कस्य
स्ति संशयः पुंसः । तत्रापि संशयश्चेत्संशयिता यः स एव भवा
त्वम् ॥४॥ नाहमिति वेत्ति योऽसौ सत्यं ब्रह्मैव वेत्ति नास्तीति
अहमस्मीति विजानन् ब्रह्मैवासौ स्वयं विजानाति ॥ ५ ॥
ब्रह्म त्वमेव तस्मान्नाहं ब्रह्मेति मोहमात्रमिदम् । मोहेन भवा
भेदः क्लेशाः सर्वे भवन्ति तन्मूलाः ॥ ६ ॥ न क्लेशपञ्चकमि
भजते कृतकोपपञ्चकविवेकः । अत एव पञ्चकोपान् कुश
धियः संततं विचिन्वन्ति ॥ ७ ॥ अन्नप्राणमनोमयविज्ञाना
न्दपञ्चकोपाणाम् । एकैकान्तरभाजां भजति विवेकात्प्रका
तामात्मा ॥ ८ ॥ वपुरिदमन्नमयाख्यः कोपो नात्मा जडो घ
प्रायः । प्रागुत्पत्तेः पश्चात्तदलाभस्यापि दृश्यमानत्वात् ॥ ९
कोपः प्राणमयोऽयं वायुविशेपो वपुष्यवच्छिन्नः । अस्य क
मात्मता स्यात् क्षुत्तृष्णाभ्यामुपेयुपः पीडाम् ॥ १० ॥ कु
वपुष्यहन्तां गेहादौ यः करोति ममतां च । रागद्वेपविध
नासावात्मा मनोमयः कोपः ॥ ११ ॥ सुप्तौ स्वयं विली
बोधे व्याप्ता कलेवरं सकलम् । विज्ञानशब्दवाच्या चित्प्र
बिम्बा न बुद्धिरप्यात्मा ॥ १२ ॥ सुप्तिगतैः सुखलेशैरभि
नुते यः सुखी भवामीति । आनंदकोपनामा सोहङ्कारः क
भवेदात्मा ॥ १३ ॥ यः स्फुरति बिम्बभूतः स भवेदान
एव सकलात्मा । प्रागूर्ध्वमपि च सत्वादविकारित्वादबा
मानत्वात् ॥ १४ ॥ अन्नमयादेरस्मादपरं यदि नानुभू
किंचित् । अनुभवितान्नमयादेरस्तीत्यस्मिन्न कश्चिदपलापः॥१५
स्वयमेवानुभवत्वाद्यद्यप्येतस्य नानुभाव्यत्वम् । सकृदप्यभाव
ङ्का न भवेद्बोधस्वरूपसत्तायाः ॥१६॥ अनुभवति विश्वात्मा वि

नासौ न चानुभूयते । न खलु प्रकाश्यतेऽसौ विश्वमशेषं प्रकाशयन् भानुः ॥ १७ ॥ तदिदं तादृशमीदृशमेतावत्तावदिति च यन्न भवेत् । ब्रह्म तदित्यवधेयं नो चेद्विषयो भवेत् परोक्षं च ॥ १८ ॥ इदमिदमिति प्रतीते वस्तुनि सर्वत्र बाध्यमानेऽपि । अनिदमबाध्यं तत्त्वं सत्वादेतस्य न च परोक्षत्वम् ॥ १९ ॥ नावेद्यमपि परोक्षं भवति ब्रह्म स्वयं प्रकाशत्वात् । सत्यं ज्ञानमनन्तं ब्रह्मेत्येतस्य लक्षणं प्रथते ॥ २० ॥ सति कोपशक्त्युपाधौ संभवतस्तस्य जीवतेश्वरते । नो चेत्तयोरभावाद्विगतविशेषं विभाति निजरूपम् ॥ २१ ॥ सति सकलदृश्यबाधे न किमप्यस्तीति लोकसिद्धं चेत् । यन्न किमपीति सिद्धं ब्रह्म तदेवेति वेदतः सिद्धम् ॥ २२ ॥ एवमपि विरहितानां तत्त्वमसीत्यादिवाक्यचिन्तनया । प्रतिभात्येव परोक्षवदात्मा प्रत्यक् प्रकाशमानोऽपि ॥ २३ ॥ तस्मात्पदार्थशोधनपूर्वकवाक्यस्य चिन्तयन्नर्थम् । दैशिकदयाप्रभावादपरोक्षयति क्षणेन चात्मानम् ॥ २४ ॥ देहेन्द्रियादिधर्मानात्मन्यारोपयन्नभेदेन । कर्तृत्वाद्यभिमानी बोधः स्यात्त्वं पदस्य वाच्योऽर्थः ॥ २५ ॥ देहो हन्तेन्द्रियाणि साक्षी तेभ्यो विलक्षणत्वेन । प्रतिभाति योऽयबोधः प्रोक्तोऽसौ त्वंपदस्य लक्ष्योऽर्थः ॥ २६ ॥ वेदावसानवाचा संवेद्यं सकल जगदुपादानम् । सर्वज्ञताद्युपेतं चैतन्यं तत्पदस्य वाच्योर्थः ॥ २७ ॥ विविधोपाधिविमुक्तं विश्वातीतं विशुद्धमद्वैतम् । अक्षरमनुभववेद्यं चैतन्यं तत्पदस्य लक्ष्योऽर्थः ॥ २८ ॥ सामानाधिकरण्यं तदनुविशेषणविशेष्यता चेति । अथ लक्ष्यलक्षकत्वं भवति पदार्थात्मनी चेति ॥ २९ ॥ एकत्र वृत्तिरर्थे शब्दानां भिन्नवृत्तिहेतूनाम् । सामानाधिकरण्यं भवती-

त्येवं वदन्ति लाक्षणिकाः ॥ ३० ॥ प्रत्यक्षपरोक्षत्वं परिपूर्णत्वं सदद्वितीयत्वम् । इतरेतरं विरुद्धं तदिह भवितव्यमेव लक्षणया ॥ ३१ ॥ मानान्तरोपरोधे मुख्यार्थस्यापरिग्रहे जाते । मुख्याविनाकृतेऽर्थे या वृत्तिः सैव लक्षणा प्रोक्ता ॥ ३२ ॥ निखिलमपि वाच्यमर्थं त्यक्त्वा वृत्तिस्तदन्वितेऽन्यार्थे । जहतीति लक्षणा स्याद्गङ्गायां घोष इतिवदत्र ॥३३॥ वाच्यार्थमत्यजन्त्या यस्या वृत्तेः प्रवृत्तिरन्यार्थे । इयमजहतीति कथिता शोणो धावतिवदत्र न ग्राह्या ॥ ३४ ॥ जहदजहतीति सा स्याद्या वाच्यार्थैकदेशमादाय । बोधयति चैकदेशं सोयं द्विज इतिवदाश्रयेदेनाम् ॥ ३५ ॥ सोऽयं द्विज इति वाक्यं त्यक्त्वा परोक्षापरोक्षदेशाद्यम् । द्विजमात्रलक्षकत्वात् कथयत्यैक्यं पदार्थयोरुभयोः ॥३६॥ तद्वत्तत्त्वमसीति त्यक्त्वा परोक्षापरोक्षतादीनि । चिद्वस्तु लक्षयित्वा बोधयति स्पष्टमसिपदेनैक्यम् ॥ ३७ ॥ इत्थं बोधितमर्थं महता वाक्येन बोधितैक्येन । अहमित्यपरोक्षयतां वेदो वेदयति वातशोकत्वम् ॥ ३८ ॥ प्रायः प्रवर्तकत्वं विधिवचसि लोकवेदयोर्दृष्टम् । सिद्धं बोधयतोऽर्थं कथमेतद्भवति तत्त्वमस्यादेः॥३९॥विधिरेव न प्रवृत्तिं जनयत्यभिलषितवस्तुबोधोऽपि । राजा भवति सुतोऽभूदिति बोधेन प्रवर्तते लोकः ॥४०॥ ऐक्यपरैः श्रुतिवाक्यैरात्मा शश्वत्प्रकाशमानोऽपि । दैशिकदयाविहीनैरपरोक्षयितुं न शक्यते पुरुषैः ॥ ४१ ॥ विरहितकाम्यनिषिद्धो विहितानुष्ठाननिर्मलस्वान्तः । भजति स्वयमेव बोधं गुरुणा किमिति त्वया न मन्तव्यम् ॥ ४२ ॥ कर्मभिरेव न बोधः प्रभवति गुरुणा विना दयानिधिना । आचार्यवान् पुरुषो वेदेत्यर्थस्य वेदसिद्धत्वात् ॥ ४३ ॥ वेदोऽनादितया वा

यद्वा परमेश्वर प्रणीततया । भवति परमं प्रमाणं बोधो नास्ति स्वतश्च परतो वा ॥ ४४ ॥ नापेक्षते यदन्यद्यदपेक्षन्तेऽखिलानि मानानि । वाक्यं तन्निगमानां मानं ब्रह्माद्यतीन्द्रियावगतौ ॥ ॥ ४५ ॥ मानं प्रबोधयन्तं बोधं मानेन ये बुभुत्सन्ते । एधोभिरेव दहनं दग्धुं वाञ्छन्ति ते महात्मानः ॥ ४६ ॥ वेदोऽनादिरमुष्य व्यञ्जक ईशः स्वयं प्रकाशात्मा । तदभिव्यक्तिमुदीक्ष्य प्रोक्तोऽसौ सूरिभिः प्रमाणमिति ॥ ४७ ॥ रूपाणामवलोके चक्षुरिवान्यन्न कारणं दृष्टम् । तद्वददृष्टावगतौ वेदवदन्यो न वेद को हेतुः ॥ ४८ ॥ निगमेषु निश्चितार्थं तन्त्रेषु कश्चिदपि प्रकाशयति । तदिदमनुवादमात्रं प्रामाण्यं तस्य सिद्ध्यति न किंचित् ॥ ४९ ॥ अंशद्वयवति निगमे साधयति वै तमेक एवांशः । अद्वैतमेव वस्तु प्रतिपादयति प्रसिद्धमपरोंऽशः ॥ ५० ॥ अद्वैतमेव सत्यं तस्मिन् द्वैतं ह्यसत्यमध्यस्तम् । रजतमिव शुक्तिकायां मृगतृष्णायामिवोदकस्फुरणम् ॥ ५१ ॥ आरोपितं यदि स्याददद्वैतं वस्त्ववस्तुनि द्वैते । युक्तं नैव तदा स्यात्सत्येऽध्यासो भवत्यसत्यानाम् ॥ ५२ ॥ यद्यारोपणमुभयोस्तद्व्यतिरिक्तस्य कस्यचिद्भावः । आरोपणं न शून्ये तस्माद्द्वैतसत्यता ग्राह्या ॥ ५३ ॥ प्रत्यक्षाद्यनवगतं श्रुत्या प्रतिपादनीयमद्वैतम् । द्वैतं न प्रतिपाद्यं तस्य स्वयमेव लोकसिद्धत्वात् ॥ ५४ ॥ अद्वैतं सुखरूपं दुःसहदुःखं सदा भवेद्द्वैतम् । यत्र प्रयोजनं स्यात्प्रतिपादयति श्रुतिस्तदेवासौ ॥ ५५ ॥ निगमगिरा प्रतिपाद्यं वस्तु यदानन्दरूपमद्वैतम् । स्वाभाविकं स्वरूपं जीवत्वं तस्य केचन ब्रुवते ॥ ५६ ॥ स्वाभाविकं यदि स्याज्जीवत्वं तस्य विशदविज्ञप्तेः । सकृदपि न तद्विनाशं गच्छे-

दुष्णप्रकाशवद्वह्नेः ॥ ५७ ॥ यद्वदयो रसविद्धं काञ्चनतां याति
तद्वदेवासौ । जीवः साधनशक्त्या परतां यातीति केचिदिच्छ
न्ति ॥ ५८ ॥ तदिदं भवति न युक्तं गतवति तस्मिंश्चित्
रसवीर्ये । प्रतिपद्यते प्रणाशं हैमो वर्णोऽप्ययःसमारूढः ॥ ५९ ॥
जीवत्वमपि तथेदं बहुविधसुखदुःखलक्षणोपेतम् । गत
साधनशक्त्या प्रतिभात्येव प्रयाति न विनाशम् ॥ ६० ॥ त
त्स्वतो यदि स्याज्जीवः सततं स एव जीवः स्यात् । एवं य
परमात्मा परमात्मैवायमिति भवेद्युक्तम् ॥६१॥ यदि वा पर
साम्यं जीवश्चेद्व्रजति साधनबलेन । कालेन तदपि किय
नश्यत्येवेति निश्चितं सकलैः ॥ ६२ ॥ तस्मात्परं स्वकीयं
मोहात्मकं च संसारम् । स्वज्ञानेन जहित्वा पूर्णः स्वयं
शिष्यते नान्यत् ॥ ६३ ॥ सत्यज्ञानानन्दं प्रकृतं परमात्म
मद्वैतम् । अवबोधयन्ति निखिलाः श्रुतयः स्मृतिभिः समं स
स्ताभिः ॥ ६४ ॥ एकत्वबोधकानां निखिलानां निगमवाक्य
जालानाम् । वाक्यान्तराणि सकलान्यभिधायन्ते स्म शेष
तानि ॥ ६५ ॥ यस्मिन्मिहिरवदुदिते तिमिरवदपयान्ति क
तादीनि । ज्ञानं विरहितभेदं कथमेतद्भवति तत्त्वमस्य
॥ ६६ ॥ कर्मप्रकरणनिष्ठं ज्ञानं कर्माङ्गमिष्यते प्राज्ञैः । भि
प्रकरणभाजः कर्माङ्गत्वं कथं भवेज्ज्ञप्तेः ॥ ६७ ॥ अधिका
विषयभेदौ कर्मज्ञानात्मकावुभौ काण्डौ । एवं सति कथमन
रङ्गाङ्गित्वं परस्परं घटते ॥ ६८ ॥ ज्ञानं कर्मणि न स्याज्ज्ञा
कर्मेदमपि तथा न स्यात् । कथमनयोरुभयोस्तत्तपनतमोवत्
मुच्चयो घटते ॥ ६९ ॥ तस्मान्मोहनिवृत्तौ ज्ञानं न सहायम
दर्थयते । यद्वद्घनतरतिमिरप्रकरपरिध्वंसने सहस्रांशुः ॥ ७०

ज्ञानं तदेवममलं साक्षी विश्वस्य भवति परमात्मा । संबध्यते न धर्मैः साक्षी तैरेव सच्चिदानन्दः ॥ ७१ ॥ रज्ज्वादेरुरगाद्यैः संबन्धस्तस्य दृश्यसंबन्धः । सततमसंगोऽहमिति श्रुतिरप्यमुमर्थमेव साधयति ॥ ७२ ॥ कर्तृ च कर्म यस्य स्फुरति ब्रह्मैव तत्र जानाति । यस्य न कर्तृ न कर्म स्फुटतरमयमेव वेदितुं क्रमते ॥ ७३ ॥ कर्तृत्वादिकमेतन्मायाशक्त्या प्रतीयते निखिलम् । इति केचिदाहुरेषा भ्रान्तिर्ब्रह्मातिरेकतो नान्यत् ॥ ७४ ॥ तस्मिन् ब्रह्मणि विदिते विश्वमशेषं भवेदिदं विदितम् । कारणमृदि विदितायां घटकरकाद्या यथाऽवगम्यन्ते ॥ ७५ ॥ तदिदं कारणमेकं विगतविशेषं विशुद्धचिद्रूपम् । तस्मात्सदेकरूपान्मायोपहितादभूदशेषमिदम् ॥ ७६ ॥ कारणमसदिति केचित् कथयन्त्यसतो भवेन्न कारणता । अङ्कुरजननी शक्तिः सति खलु बीजे समीक्ष्यते सकलैः ॥ ७७ ॥ कारणमसदिति कथयन् वन्ध्यापुत्रेण निर्वहेत्कार्यम् । किंच मृगतृष्णिकाम्भः पीत्वोदन्यां महीयसीं शमयेत् ॥ ७८ ॥ यस्मान्न सोयमसतो वादः संभवति शास्त्रयुक्तिभ्याम् । यस्मात्सदेव तत्त्वं सर्वेषां कारणं भवति जगतस्म् ॥ ७९ ॥ जगदाकारतयाऽपि प्रथते गुरुशिष्यविग्रहतयापि । ब्रह्माद्याकारतयापि प्रतिभातीदं परात्परं तत्त्वम् ॥ ८० ॥ सत्यं जगदिति भानं संसृतये स्यादपक्वचित्तानाम् । तस्मादसत्यमेतन्निखिलं प्रतिपादयन्ति निगमान्ताः ॥ ८१ ॥ परिपक्वमानसानां पुरुषवराणां पुरातनैः सुकृतैः । ब्रह्मैवेदं सर्वं जगदिति भूयः प्रबोधयत्येषः ॥ ८२ ॥ अनवगतकाञ्चनानां भूषणधीरिव भूषणे हैमे । एवमविवेकभाजां जगति जनानां न तात्त्विकी धिषणा ॥ ८३ ॥ अहमालम्बनसिद्धं कस्य परोक्षं भवे-

दिदं ब्रह्म । तदपि विचारविहीनैरपरोक्षयितुं न शक्यते मुमुक्षान्
॥ ८४ ॥ अहमिदमिति च मतिभ्यां सततं व्यवहरति सर्वलोकाि
कोऽपि । प्रथमा प्रतीचि चरमा निवसति वपुरिन्द्रियादिषु ति
ह्यार्थे ॥ ८५ ॥ वपुरिन्द्रियादिविषयाऽहंबुद्धिश्चेन्महत्यसा
भ्रान्तिः । अतस्मिंस्तद्बुद्धिरित्यध्यासेन शास्यमानत्वात् ॥८६॥
तस्मादशेषसाक्षी परमात्मैवाहमर्थ इत्युचितम् । अजडवदर्थ
जडोयं सत्संबन्धाद्भवत्यहंकारः ॥ ८७ ॥ तस्मात् सर्वशरीरे
ष्वहमहमित्येव भासते स्पष्टः । यः प्रत्ययो विशुद्धस्तस्य ब्रह्मत्व
भवति मुख्यार्थः ॥ ८८ ॥ गोशब्दादिव गोत्वं तदपि व्यक्तिनि
प्रतीयतेऽर्थतया । अहमर्थः परमात्मा तद्भ्रान्त्या भवत्यलंका
॥ ८९ ॥ दग्धत्वादिकमयसः पावकसंगेन भासते यद्वत् । तद्वदु
चेतनसंगादहमिति प्रतिभाति कर्तृतादीनि ॥ ९० ॥ देहेन्द्रियां
यादिदृश्यव्यतिरिक्तं निर्मलमतुलमद्वैतम् । अहमर्थमिति विनिश्च
त्वा तद्व्यतिरिक्तं न कल्पयेदन्यत् ॥ ९१ ॥ यद्वत्सुखदुःखानामि
मनुभवभेदाद्विचित्रता देहे । तद्वदिह सत्यभेदेप्यनुभववैचित्र्यमा
त्मनामेषाम् ॥९२॥ किमिदं किमस्य रूपं कथमेतदभूदमुष्य कोऽहं
हेतुः । इति न कदापि विचिन्त्यं चिन्त्यं मायेति धीमता विश्व
॥९३ ॥ दन्तिनि दारुविकारे दारु तिरोभवति सोऽपि तत्रैव वि
जगति तथा परमात्मा परमात्मन्यपि जगत्तिरोधत्ते ॥ ९४ ॥
आत्ममये महति पटे विविधजगच्चित्रमात्मना लिखितम् । स्वयम्
मेव केवलमसौ पश्यन्प्रमुदं प्रयाति परमात्मा ॥ ९५ ॥ चिन्म
न्मात्रममलमक्षयमद्वयमानंदमनुभवारूढम् । ब्रह्मैवास्ति तदन्यद्
किंचिदस्तीति निश्चयो विदुषाम् ॥ ९६ ॥ व्यवहारस्य दशेय
विद्याविद्येति वेदपरिभाषा । नास्त्येव तत्त्वदृष्ट्या तत्त्वं ब्रह्मैव

धान्यदस्त्यस्मात् ॥ ९७ ॥ अस्त्यन्यदिति मतं चेत्तदपि ब्रह्मैव
वास्तितारूपम् । व्यतिरिक्तमस्तिताया नास्तितया शून्यमेव
त्सिद्धम् ॥ ९८ ॥ तत्त्वावबोधशक्त्या स्थिरताया बाधितापि
सा माया । आदेहपातमेषामाभात्यात्माप्ययं निजो विदुषाम्
॥ ९९ ॥ एष विशेषो विदुषां पश्यन्तोऽपि प्रपञ्चसंसारम् ।
पृथगात्मनो न किंचित्पश्येयुः सकलनिगमनिर्णीतात् ॥१००॥
किं चिन्त्यं किमचिन्त्यं किं कथनीयं किमप्यकथनीयम् । किं
कृत्यं किमकृत्यं निखिलं तदिति जानतां विदुषाम् ॥ १०१ ॥
निखिलं दृश्यविशेषं दृग्रूपत्वेन पश्यतां विदुषाम् । बन्धो नापि
मुक्तिर्न च परमात्मत्वमपि न जीवत्वम् ॥ १०२ ॥ असकृ-
दनुचिन्तितानामव्याहततरनिजोपदेशानाम् । प्रामाण्यं परसी-
मां निगमनमिदमेव निखिलनिगमानाम् ॥ १०३ ॥ इत्थं
विबोध्य गुरुणा शिष्यो हृष्यन्प्रणम्य तं पदयोः । स्वानुभ-
सिद्धमर्थं स्वयमेवान्तर्विचारयामास ॥ १०४ ॥ अजरोहम-
मरोहं प्राज्ञोहं प्रत्यगात्मबोधोहम् । परमानन्दमयोहं परमशि-
वोहं भवामि परिपूर्णः ॥ १०५ ॥ आढ्योहमात्मभाजामात्मा-
नन्दानुभूतिरसिकोहम् । आबालगोपमखिलैरयमित्यनुभूयमा-
विभवोऽहम् ॥ १०६ ॥ इन्द्रियसुखविमुखोहं निजसुखबो-
ानुभूतिरहितोहम् । इति मतिदूरतरोहं भावेतरसुखितचित्तो-
हम् ॥ १०७॥ ईशोहमीश्वराणामीर्ष्याद्वेषानुपङ्गरहितोहम् ।
क्षणविषयमतीनामीप्सितपुरुषार्थसाधनपरोहम् ॥ १०८ ॥
दयोहमेव जगतामुपनिषदुद्यानकृतविहारोहम् । उद्वेलशोक-
गरवाडवहुतवाहनाचिरहम् ॥ १०९ ॥ ऊर्जस्वलनिजविभवै-
र्ध्वमधस्तिर्यगश्नुवानोहम् । ऊहापोहविचारैरुररीकृतवत्प्रतीय-

मानोहम् ॥११० ॥ ऋषिरहमृषिगणोहं सृष्टिरहं सृज्यमानमे
हम् । ऋद्धिरहं वृद्धिरहं तृप्तिरहं तृप्तिदीपदीप्तिरहम् ॥१११॥ ए
हमेतदीदृशमेवमिति स्फुरितभेदरहितोहम् । यष्टव्योहमनी
न्तःसुकृतानुभूतिरहितोहम् ॥११२॥ ऐक्यावभासकोऽहं वा
परिज्ञानपावनमतीनाम् । ऐशमहमेव तत्वं नैशतमःप्रायमोह
हिरोहम्॥११३॥ ओजोहमोषधीनामोतप्रोतायमानविभवोह
ओङ्कारसारसोल्लसदात्मसुखामोदमत्तभृंगोहम् ॥ ११४ ॥
पधमहमशुभानामौपाधिकधर्मजालरहितोहम् । औदार्याति
योहं चित्तविविधचतुर्वर्गतरणपरोहम् ॥ ११५ ॥ अङ्कुशमह
खिलानां महत्तया मत्तवारणेन्द्राणाम् । अम्बरमिव विमलो
शम्बररिपुजातविकृतिरहितोहम् ॥ ११६ ॥ आत्मविकल
तीनामस्खलदुपदेशगम्यमानोऽहम् । अस्थिरसुखविमुखा
सुस्थिरसुखबोधसंपदुचितोहम् ॥ ११७ ॥ करुणारसभरि
कवलितकमलासनादिलोकोहम् । कलुषाहङ्कारविलक्षणोहं क
पसुकृतोपलेशरहितोहम् ॥ ११८ ॥ खानामगोचरोहं खा
तोहं खपुष्पभवगोहम् । खलजनदुरासदोहं खण्डज्ञानापन
नपरोहम् ॥ ११९ ॥ गलितद्वैतकथोहं देही भवदखिलमू
दयोहम् । गन्तव्योहमनीहैर्गत्या गतिरहितपूर्णबोधोहम्॥१२
घनतरमोहतिमिरप्रकरप्रध्वंसभानुनिकरोहम् । घटिकावास
जनीसंवत्सरयुगकल्पकालभेदोहम् ॥ १२१ ॥ चरदचरा
कोहं चतुरमतिश्लाघ्यचरितोहम् । चपलजनदुर्गमोहं चल
जलधिपारदेशोहम् ॥ १२२ ॥ छन्दःसिन्धुनिगूढज्ञानसुखा
दमोदमानोहम् । छलपदविहतमतीनां छन्नोहं शान्तिमार्गगम
हम् ॥ १२३ ॥ जलजासनादिगोचरपञ्चमहाभूतमूलभूतोह

जगदानंदकरोहं जन्मजरारोगमरणरहितोहम् ॥१२४॥ उंकृति-
हुंकृतिसिंजितबृंहितमुखविविधनादभेदोहम् । झटिति घटि-
तात्मवेदनदीपपरिस्फुरितहृदयभवनोहम् ॥ १२५ ॥ ज्ञानमहं
ज्ञेयमहं ज्ञाताहं ज्ञानसाधनगणोहम् । ज्ञातृज्ञानविनाकृतमस्ति-
त्वमेवाहम् ॥ १२६ ॥ तत्त्वातीतपदोहं तदन्तरोऽस्मीति भाव-
रहितोहम् । तामसदुरधिगमोहं तत्त्वंपदबोध्यहृदयोहम्
॥ १२७ ॥ दैवतदैत्यनिशाचरमानवतिर्यङ्महीधरादिरहम् ।
देहेन्द्रियरहितोहं दक्षिणपूर्वादिदिग्विभागोहम् ॥ १२८ ॥ धर्मा-
धर्ममयोहं धर्माधर्मादिबन्धरहितोहम् । धार्मिकजनसुलभोऽहं
धन्योहं धातुरादिभूतोहम् ॥ १२९ ॥ वामादिविरहितोहं नर-
कस्वर्गापवर्गरहितोहम् । नादान्तरविदितोहं नानाविश्वनिखि-
लागमसारोहम् ॥ १३० ॥ परजीवभेदबाधकपरमार्थज्ञानशु-
द्धचित्तोहम् । प्रकृतिरहं विकृतिरहं परिणतिरहमस्मि भागधेया-
नाम् ॥ १३१ ॥ फणधरभूधरवारणविग्रहविधृतप्रपञ्चसारोहम् ।
भालतलोहितलोचनपावकपरिभूतपञ्चबाणोहम् ॥ १३२ ॥ बद्धो
भवामि नाहं बन्धान्मुक्तस्तथापि नैवाहम् । बोध्यो भवामि
नाहं बोधोहं नैव बोधको नाहम् ॥१३३॥ भक्तिरहं भजनमहं
मुक्तिरहं मुक्तियुक्तिरहमेव । भूतानुशासनोहं भूतभवद्भावमूलभू-
तोहम् ॥ १३४ ॥ मान्योहमस्मि महतां मन्दमतीनाममाननी-
योहम् । मदरागमानमोहितमानसदुर्वासनादुरापोहम् ॥१३५॥
यजनयजमानयाजकयागमयोहं यमादिरहितोहम् । इन्द्रयमव-
रुणयक्षराक्षसमरुदीशवह्निरूपोहम् ॥ १३६ ॥ रक्षाविधानशि-
क्षावीक्षितलीलावलोकमहिमाहम् । रजनीदिवसविरामस्फुर-
दनुभूतिप्रमाणसिद्धोहम् ॥ १३७ ॥ लक्षणलक्ष्यमयोहं लाक्ष-

णिकोहं लयादिरहितोहम् । लाभालाभमयोहं लब्धव्याना
भ्यमानोहम् ॥ १३८ ॥ वर्णाश्रमरहितोहं वर्णमयोहं वरे
ण्योहम् । वाचामगोचरोहं वचसामर्थे पदे निविष्टोहम् ॥ १३
शमदमविरहितमनसां शास्त्रशतैरप्यगम्यमानोहम् । शरण
मेव विदुषां शकलीकृतविविधसंशयगणोहम् ॥ १४० ॥
भावविरहितोहं षड्गुणरहितोहमहितरहितोहम् । षड्कोश
रहितोहं षट्त्रिंशत्तत्त्वजालरहितोहम् ॥ १४१ ॥ संवित्सु
त्मकोहं समाधिसंकल्पकल्पवृक्षोहम् । संसारविरहितोहं सा
त्कारोहमात्मविद्यायाः ॥ १४२ ॥ हव्यमहं कव्यमहं हेयो
देयभावशून्योहम् । हरिरहमस्मि हरोऽहं विधिरहमेवास्मि क
तेषाम् ॥१४३॥ क्षालितकलुषमयोहं क्षपितभवक्लेशजालह
हम् । क्षान्ताद्यक्षरसहितो विविधव्यवहारमूलमेवाहम् ॥१४
बहुभिः किमेभिरुक्तैरहमेवेदं चराचरं विश्वम् । सीकरफेन
ङ्गाः सिन्धोरपराणि न खलु वस्तूनि ॥ १४५ ॥ शरणं
मम जननी न पिता न सुता न सोदरा नान्ये । परमं श
मिदमेव चरणं मम मूर्ध्नि दैशिकन्यस्तम् ॥ १४६ ॥ अ
दैशिकचरणं निरवधिरास्ते तदीक्षणे करुणा । अ
किमपि यदुक्तं किमतः परमस्ति जन्मसाफल्यम् ॥ १४
हिमकरकरसारसान्द्राः काङ्क्षितवरदानकल्पविशेषाः । श्रीगु
रणकटाक्षाः शिशिराः शमयन्ति चित्तसन्तापम् ॥ १४८
कवलितचञ्चलचेतोगुरुतरमणूकजातपरितोष्मा । शेते हृद
हायां चिरतरमेकैव चिन्मयी भुजङ्गी ॥ १४९ ॥ मयि
बोधपयोधौ महति ब्रह्माण्डबुद्बुदसहस्रम् । मायाविशेषशालि
भूत्वा भूत्वा पुनस्तिरोधत्ते ॥ १५० ॥ गुरुकृपयैव सुन

प्राक्तनभाग्यप्रवृद्धमारुतया । दुःसहदुःखतरङ्गस्तुङ्गः संसार-सागरस्तीर्णः ॥ १५१ ॥ सति तमसि मोहरूपे विश्वमपश्यं तदेतदित्यखिलम् । उदितवति बोधभानौ किमपि न पश्यामि किं त्विदं चित्रम् ॥ १५२ ॥ नाहं नमामि देवान्देवानतीत्य न सेवते देवम् । न तदनुकरोति विधानं तस्मै यतते नमो नमो मह्यम् ॥ १५३ ॥ इत्यात्मबोधलाभं मुहुर्मुहुरनुचिन्त्य मोद-मानेन । प्रारब्धकर्मणोन्ते परं पदं प्राप्यतेस्म कैवल्यम् ॥१५४॥ मोहान्धकारहरणं संसारोद्वेलसागरोत्तरणम् । स्वात्मनिरूपण-मेतत्प्रकरणमकृत दक्षिणामूर्तिः ॥ १५५ ॥ अज्ञानान्ध्यविनि-हन्ता विरचितविज्ञानपङ्कजोल्लासः । मानसगगनतलं मे भास-यति श्रीनिवासगुरुभानुः ॥ १५६ ॥ इति श्रीमत्परमहंसपरि-व्राजकाचार्यश्रीमच्छंकराचार्यविरचितं स्वात्मनिरूपणं संपू-र्णम् ॥ २९ ॥

---

## शतश्लोकी ॥ ३० ॥

ॐ परमात्मने नमः॥ दृष्टांतो नैव दृष्टस्त्रिभुवनजठरे सद्गुरो-र्ज्ञानदातुः स्पर्शश्चेत्तत्र कल्प्यः स नयति यदहो स्वर्णताम-श्मसारम् । न स्पर्शत्वं तथापि श्रितचरणयुगे सद्गुरुः स्वीय-शिष्ये स्वीयं साम्यं विधत्ते भवति निरुपमस्तेन वा लौकि-कोपि ॥ १ ॥ यद्वच्छ्रीखंडवृक्षप्रसृतपरिमलेनाभितोऽन्येपि वृक्षाः शश्वत्सौगंध्यभाजोप्यतनुतनुभृतां तापमुन्मूलयंति । आचार्याल्लब्धबोधा अपि विधिवशतः सन्निधौ संस्थितानां त्रेधा तापं च पापं सकरुणहृदयाः स्वोक्तिभिः क्षालयंति ॥ २ ॥ आत्मानात्मप्रतीतिः प्रथममभिहिता सत्यमिथ्यात्वयोगात् द्वेधा

ब्रह्मप्रतीतिर्निगमनिगदिता स्वानुभूत्योपपत्त्या । आद्या दे
नुबंधाद्भवति तदपरा सा च सर्वात्मकत्वादादौ ब्रह्माहम
त्यनुभव उदिते खल्विदं ब्रह्म पश्चात् ॥ ३ ॥ आत्मा चि
त्सुखात्मानुभवपरिचितः सर्वदेहादियंता सत्येवं मूढबु
र्भजति ननु जनोऽनित्यदेहात्मबुद्धिम् । बाह्येऽस्थिस्नायुमज्ज
लरुधिरवसाचर्ममेदोयुगंतर्विण्मूत्रश्लेष्मपूर्णं स्वपरवपुरहो सं
दित्वापि भूयः ॥ ४ ॥ देहस्त्रीपुत्रमित्रानुचरहयवृषास्तोषं
मेभेत्थं सर्वे स्वायुर्नयन्ति प्रथितमलममी मांसमीमांसया
एते जीवंति येन व्यवहृतिपटवो येन सौभाग्यभाजस्तं प्रा
धीशमंतर्गतममृतममुं नैव मीमांसयंति ॥ ५ ॥ कश्चित्
कथंचित्पटुमतिरभितः कंटकानां कुटीरं कुर्वंस्तेनैव
व्यवहृतिविषये चेष्टते यावदायुः । तद्वज्जीवोपि नानाचरि
समुदितैः कर्मभिः स्थूलदेहं निर्मायात्रैव तिष्ठन्ननुदिनम
साकमभ्येति भूमौ ॥ ६ ॥ स्वीकुर्वन् व्याघ्रवेषं स्वजठर
भीषयन्यश्च मुग्धान् मत्वा व्याघ्रोहमित्थं स नरपशुमु
बाधते किंतु सत्त्वान् । मत्वा स्त्रीवेषधारी स्त्र्यहमिति कु
किं नटो भर्तुरिच्छां तद्वच्छारीर आत्मा पृथगनुभवतो दे
यः स साक्षी ॥ ७ ॥ स्वं बालं रोदमानं चिरतरसमयं शां
मानेतुमग्रे द्राक्षं खार्जूरमाम्रं सुकदलमथवा योजयत्यं
स्य । तद्वच्चेतोतिमूढं बहुजननभवान्मौढ्यसंस्कारयोगाद्बोधोपा
रनेकैरवशमुपनिषद्बोधयामास सम्यक् ॥ ८ ॥ यत्प्रीत्या प्री
पात्रं तनुयुवतितनूजार्थमुख्यं स तस्मात्प्रेयानात्माथ शोका
दमितरदतः प्रेय एतत्कथं स्यात् । भार्याद्यं जीवितार्थी वि
रति च वपुः स्वात्मनः श्रेय इच्छंस्तस्मादात्मानमेव प्रियम

कमुपासीत विद्वान्न चान्यत् ॥ ९ ॥ यस्माद्यावत्प्रियं स्यादिह हि विषयतस्तावदस्मिन्प्रियत्वं यावद्दुःखं च यस्माद्भवति खलु ततस्तावदेवाप्रियत्वम् । नैकस्मिन्सर्वकालेस्त्युभयमपि कदाप्यप्रियोपि प्रियः स्यात्प्रेयानप्यप्रियो वा सततमपि यतः प्रेय आत्माख्यवस्तु ॥१०॥ श्रेयः प्रेयश्च लोके द्विविधमभिहितं काम्यमात्यंतिकं च काम्यं दुःखैकबीजं क्षणलवविरसं तच्चिकीर्षंति मंदाः । ब्रह्मैवात्यंतिकं यन्निरतिशयसुखस्यास्पदं संश्रयंते तत्त्वज्ञास्तच्च काठोपनिषदभिहितं षड्विधायां च वल्याम् ॥ ११ ॥ आत्मांभोधेस्तरंगोस्म्यहमिति गमने भावयन्नासनस्थः संवित्सूत्रानुविद्धो मणिरहमिति वा चेंद्रियार्थप्रतीतौ । हृष्टोस्म्यात्मावलोकादिति शयनविधौ मग्न आनंदसिंधावंतर्निष्ठो मुमुक्षुः स खलु तनुभृतां यो नयत्येवमायुः ॥ १२ ॥ वैराजव्यष्टिरूपं जगदखिलमिदं नामरूपात्मकं स्यादंतःस्थप्राणमुख्यात्प्रचलति च पुनर्वेत्ति सर्वान्पदार्थान् । नायं कर्ता न भोक्ता सवितृवदिति यो ज्ञानविज्ञानपूर्णः साक्षादित्थं विजानन्व्यवहरति परात्मानुसंधानपूर्वम् ॥ १३ ॥ नैर्वेद्यं ज्ञानगर्भं द्विविधमभिहितं तत्र वैराग्यमाद्यं । प्रायो दुःखावलोकाद्भवति गृहसुहृत्पुत्रवित्तैषणादेः । अन्यज्ज्ञानोपदेशाद्यदुदितविषये वांतवद्धेयता स्यात्प्रव्रज्यापि द्विधा स्यान्नियमितमनसां देहतो गेहतश्च॥१४॥ यः कश्चित्सौख्यहेतोस्त्रिजगति यतते नैव दुःखस्य हेतोर्देहेहंता तदुत्था स्वविषयममता चेति दुःखास्पदे द्वे । जानन्रोगाभिघाताद्यनुभवति यतो नित्यदेहात्मबुद्धिर्भार्यापुत्रार्थनाशे विपदमथ परामेति नारातिनाशे ॥ १५ ॥ तिष्ठन्गेहे गृहेशोप्यतिथिरिव निजं धाम गंतुं चिकीर्षुर्गेहस्थं दुःखसौख्यं न भजति

दान बिचार अन्न का आप अर



सहसा निर्ममत्वाभिमानः । आयात्रायास्यतीदं जलदपटलव
यास्यत्यवश्यं देहाद्यं सर्वमेव प्रविदितविषयो यच्च तिष्ठ
यत्नः ॥ १६ ॥ शक्त्या निर्मोकतः स्वाद्बहिरहिरिव यः प्र
न्स्वीयगेहाच्छायां मार्गद्रुमोत्थां पथिक इव मनाक्संश्रये
संस्थाम् । क्षुत्पर्याप्तं तरुभ्यः पतितफलमयं प्रार्थयेद्भैक्ष्य
स्वात्मारामं प्रवेष्टुं स खलु सुखमयं प्रव्रजेदेहतोपि ॥ १
कामो बुद्धावुदेति प्रथममिह मनस्युद्दिशत्यर्थजातं तद्ग्र
द्रियास्यैस्तदनधिगमतः क्रोध आविर्भवेच्च । प्राप्तावर्थस्य
क्षणमतिरुदितो लोभ एतत्त्रयं स्यात्सर्वेषां पातहेतुस्तदिह
मता त्याज्यमध्यात्मयोगात् ॥ १८ ॥ दानं ब्रह्मार्पणं यत्कि
इह नृभिः स्यात्क्षमाक्रोधसंज्ञा श्रद्धास्तिक्यं च सत्यं सा
परमतः सेतुसंज्ञं चतुष्कम् । तत्स्याद्बंधाय जंतोरिति
इमान्दानपूर्वैश्चतुर्भिस्तीर्त्वा श्रेयोमृतं च श्रयत इह
स्वर्गतिं ज्योतिरासिम् ॥ १९ ॥ अन्नं देवातिथिभ्योर्पित
तमिदं चान्यथा मोघमन्नं यश्चात्मार्थं विधत्ते तदिह निगा
मृत्युरूपं हि तस्य । लोकेसौ केवलाघो भवति तनुभृतां
लादी च यः स्यात्त्यक्त्वा प्राणाग्निहोत्रं विधिवदनुदिनं यो
ते सोपि मर्त्यः ॥२०॥ लोके भोजः स एवार्पयति गृहगता
र्थिनेन्नं कृशाय यस्तस्मै पूर्णमन्नं भवति मखविधौ जायतेऽ
शत्रुः । सख्ये नान्नार्थिने योर्पयति न स सखा सेवमान
नित्यं संसक्तायान्नमस्माद्विमुख इव पराग्वृत्तिमिच्छेत्कद
॥ २१ ॥ स्वाज्ञानज्ञानहेतू जगदुदयलयौ सर्वसाधारणौ
जीवेष्वास्वर्णगर्भं श्रुतय इति जगुर्हूयते स्वप्रबोधे । विश्वं
ण्यबोधे जगति पुनरिदं हूयते ब्रह्म तद्वच्छुक्तौ रौप्यं च

धिकरणमथवा ह्यतेन्योन्यमोहात् ॥ २२ ॥ तुच्छत्वान्नासदासीद्गगनकुसुमवद्भेदकं नो सदासीत् किंत्वाभ्यामन्यदासीद्व्यवहृतिगतिसन्नास लोकस्तदानीम् ॥ किंत्वर्वागेव शुक्तौ रजतवद्परो नो विराड्व्योमपूर्वः शर्मण्यात्मन्यथैतत्कुहकसलिलवत्किं भवेदावरीवः ॥ २३ ॥ बंधो जन्मात्ययात्मा यदि न पुनरभूत्तर्हि मोक्षोपि नासीद्यद्वद्रात्रिर्दिनं वा न भवति तरणौ किंतु दृग्दोष एषः । अप्राणं शुद्धमेकं समभवदथ तन्मायया कर्तृसंज्ञं तस्मादन्यच्च नासीत्परिवृतमजया जीवभूतं तदेव ॥ २४ ॥ प्रागासीद्भावरूपं तम इति तमसा गूढमस्मादतर्क्यं क्षीरांतर्यद्वदंभोजनिरिह जगतो नामरूपात्मकस्य । कामाद्धातुः सिसृक्षोरनुगतजगतः कर्मभिः संप्रवृत्ताद्रेतोरूपैर्मनोभिः प्रथममनुगतैः संततैः कार्यमाणैः ॥ २५ ॥ चत्वारोस्याः कपर्दा युवतिरथ भवेन्नूतना नित्यमेषा माया वा पेशला स्यादघटनघटनापाटवं याति यस्मात् । स्यादारंभे घृतास्या श्रुतिभववयुनान्येवमाच्छादयन्ती तस्यामेतौ सुपर्णाविव परपुरुषौ तिष्ठतोर्थप्रतीत्या ॥ २६ ॥ एकस्तत्रास्त्यसंगस्तदनु तदपरोज्ञानसिंधुं प्रविष्टो विस्मृत्यात्मस्वरूपं स विविधजगदाकारमाभासमैक्षत् । बुद्ध्यांतर्यावदेक्षद्विसृजति तमजा सोपि तामेवमेकस्तावद्विप्रास्तमेकं कथमपि बहुधा कल्पयंति स्ववाग्भिः॥२७॥ नायाति प्रत्यगात्मा प्रजननसमये नैव यात्यंतकाले यत्सोखंडोस्ति लैंगं मन इह विशति प्रव्रजत्यूर्ध्वमर्वाक् । तत्कार्श्यं वा स्थूलतां न भजति वपुषः किंतु संस्कारजातैस्तेजोमात्रा गृहीत्वा व्रजति पुनरिहायाति तैस्तैः सहैव ॥ २८ ॥ आसीत्पूर्वं सुबंधुर्भूशमवनिसुरो यः पुरोधाः सनातेर्ब्राह्म्यात्कूटाभिचारात्स खलु-

स्वपनविचार प्रथा - ॐ



मृतिमितस्तन्मनोगात्कृतांतम् । तद्धाता श्रौतमंत्रैः पुनरनयदि
ग्राह सूक्तेन वेदस्तस्मादात्माभियुक्तं व्रजति ननु मनः कहिँ
भ्रांतरात्मा ॥२९॥ एको निष्कंप आत्मा प्रचलति मनसा धा
मानेन तस्मिंस्तिष्ठन्नग्रेथ पश्चान्न हि तमनुगतं जानते च
राद्याः । यद्वत्पाथस्तरंगैः प्रचलति परितो धावमानैस्तद
ग्राक्पश्चादस्ति तेषां पवनसमुदितैस्तैः प्रशांतैर्यथावत् ॥ ३०
एकाक्यासीत्स पूर्वं मृगयति विषयानानुपूर्व्यांतरात्मा ज
मे स्यात्प्रजा वा धनमुपकरणं कर्म कुर्वंस्तदर्थम् । क्लेशैः प्राप
वशेषैर्महदपि मनुते नान्यदस्माद्गरीयस्त्वेकालाभेप्यकृत्स्नो
इव विरमत्येकहान्याकृतार्थः ॥ ३१ ॥ नासीत्पूर्वं न पश्चाद
नुदिनकराच्छादको वारिवाहो दृश्यः किंत्वंतरासौ स्थगयति
दृशं पश्यतो नार्कबिम्बम् । नोचेदेवं विनार्कं जलधरप
भासते तर्हि कस्मात्तद्वद्विश्वं पिधत्ते दृशमथ न परं भा
चालकं स्वम् ॥ ३२ ॥ भुंजानः स्वप्नराज्यं स सकलवि
जागरं प्राप्य भूयो राज्यभ्रष्टोहमित्थं न भजति विषमं
न्मृषा मन्यमानः । स्वप्ने कुर्वन्नगम्यागमनमुखमघं तेन
प्रत्यवायी तद्वज्जाग्रद्दशायां व्यवहृतिमखिलां स्वप्नवद्विस्मरे
॥ ३३ ॥ स्वप्नावस्थानुभूतं शुभमथ विषमं तन्मृषा जागरे स
जाग्रत्यां स्थूलदेहव्यवहृतिविषयं तन्मृषा स्वप्नकाले । इ
मिथ्यात्वसिद्धावनिशमुभयथा सज्जते तत्र मूढः सत्येतज्जा
केस्मिन्निह हि कुत इदं तन्न विद्मो वयं हि ॥ ३४ ॥ जीव
जाग्रतीह स्वजनमथ मृतं स्वप्नकाले निरीक्ष्य निर्वेदं याल
स्मान्मृतममृतममुं वीक्ष्य हर्षं प्रयाति । स्मृत्वाप्येतस्य जी
निधनमसुयुतिं भाषते तेन साकं सत्येवं भाति भूयोल

समयवशात्सत्यता वा मृपात्वम् ॥ ३५ ॥ स्वाप्नस्त्रीसंगसौख्यादपि भृशमसतो या च रेतश्च्युतिः स्यात्साद्दश्यात्तद्वदेतत्स्फुरति जगदसत्कारणं सत्यकल्पम् । स्वप्ने सत्यः पुमान्स्याद्युवतिरिह मृषैवानयोः संयुतिश्च प्रातः शुक्रेण वस्त्रोपहतिरिति यतः कल्पनामूलमेतत् ॥ ३६ ॥ पश्यंत्यारामस्य प्रतिदिवसममी जंतवः स्वापकाले पश्यत्येनं न कश्चित्करणगणमृते मायया क्रीडमानम् । जाग्रत्यर्थव्रजानामथ च तनुभृतां भासकं चालकं वा नो जानीते सुषुप्तौ परमसुखमयं कश्चिदाश्चर्यमेतत् ॥३५॥ स्वप्ने मंत्रोपदेशः श्रवणपरिचितः सत्य एष प्रबोधे स्वाप्नादेव प्रसादादभिलषितफलं सत्यतां प्रातरेति । सत्यप्राप्तिस्त्वसत्यादपि भवति तथा किं च तत्स्वप्रकाशं येनेदं भाति सर्वं चरमचरमथोच्चावचं दृश्यजातम् ॥ ३८ ॥ मध्यप्राणं सुषुप्तौ स्वजनिमनुविशंत्यग्निसूर्यादयोमी वागाद्याः प्राणवायुं तदिह निगदिता ग्लानिरेषां न वायोः । तेभ्यो दृश्यावभासो भ्रम इति विदितः शुक्तिकारौप्यकल्पः प्राणायामव्रतं तच्छ्रुतिशिरसि मतं स्वात्मलब्धौ न चान्यत् ॥ ३९ ॥ नोकस्मादार्द्रमेधः स्पृशति च दहनः किंतु शुष्कं निदाघादार्द्रं चेतोनुबंधैः कृतसुकृतमपि स्वोक्तकर्मप्रजार्थैः । तद्वज्ज्ञानाग्निरेतत्स्पृशति न सहसा किंतु वैराग्यशुष्कं तस्माच्छुद्धो विरागः प्रथममभिहितस्तेन विज्ञानसिद्धिः ॥ ४० ॥ यत्किंचिन्नामरूपात्मकमिदमसदेवोदितं भाति भूमौ येनानेकप्रकारैर्व्यवहरति जगद्येन तेनेश्वरेण ॥ तद्वत्प्रच्छादनीयं निभृतरशनया यद्वदेव द्विजिह्वस्तेन त्यक्तेन भोज्यं सुखमनतिशयं मा गृधोन्यद्धनाद्यम् ॥ ४१ ॥ जीवन्मुक्तिर्मुमुक्षोः प्रथममथ ततो मुक्तिरात्यंतिकी च तेऽभ्यासज्ञानयो-

ज्ञानीजी विचार ः



गाद्गुरुचरणकृपापांगसंगेन लब्धात् । अभ्यासोपि द्विध स्यादधिकरणवशादैहिको मानसश्च शारीरस्त्वासनाद्यो ह्युप रतिरपरो ज्ञानयोगः परोक्तः ॥ ४२ ॥ सर्वानुन्मूल्य कामान् हृदिकृतनिलयान्क्षिप्तशंकूनिवोच्चैर्दीर्घदेहाभिमानस्त्यजति चपल तामात्मदत्तावधानः । यात्यूर्ध्वस्थानमुच्चैः कृतसुकृतभ नाडिकाभिर्विचित्रं नीलश्वेतारुणाभिः स्रवदमृतभरं गृह्णा णात्मसौख्यः ॥ ४३ ॥ प्रापश्यद्विश्वमात्मेत्ययमिह पुरुष शोकमोहाद्यतीतः शुक्रं ब्रह्माध्यगच्छत्स खलु सकलवित्सर्व सिद्ध्यास्पदं हि । विस्मृत्य स्थूलसूक्ष्मप्रभृतिवपुरसौ सर्वसं ल्पशून्यो जीवन्मुक्तस्तुरीयं पदमधिगतवान्पुण्यपापैर्विहीन ॥ ४४ ॥ यः सत्त्वाकारवृत्तौ प्रतिफलति युवा देहमात्रा तोपि तद्धर्मैर्बाल्यवार्ध्यादिभिरनुपहतः प्राण आविर्बभूव श्रेयान्साध्यस्तमेतं सुनिपुणमतयः सत्यसंकल्पभाजोप्यभ्यासा चयंतः परिणतमनसा साकमूर्ध्वं नयन्ति ॥४५॥ प्रायो कामो स्तकामो निरतिशयसुखायात्मकामस्तदासौ तत्प्राप्तावाप्तकाम स्थितचरमदशस्तस्य देहावसाने । प्राणा नैवोत्क्रमंति क्रम विरतिमिताः स्वस्वहेतौ तदानीं कायं जीवो विलीनो लवण मिव जलेऽखंड आत्मैव पश्चात् ॥ ४६ ॥ पिण्डीभूतं यदंतर्जल निधिसलिलं याति तत्सैंधवाख्यं भूयः प्रक्षिप्तमस्मिन्विलय पगतं नामरूपं जहाति । प्राज्ञस्तद्वत्परात्मन्यथ भजति लय तस्य चेतो हिमांशौ वागग्नौ चक्षुरर्के पयसि पुनरसृग्रेतसी दिक्षु कर्णौ ॥ ४७ ॥ क्षीरान्तर्यद्वदाज्यं मधुरिमविदितं तत्पृ थग्भूतमस्माद्भूतेषु ब्रह्म तद्वद्व्यवहृतिविदितं श्रांतविश्रांतिबीजम् । यं लब्ध्वा लाभमन्यत्तृणमिव मनुते यत्र नोदेति भीति

सान्द्रानन्दं यदन्तः स्फुरति तदमृतं विद्ध्यतो ह्यन्यदार्तम्
॥ ४८ ॥ ओत :प्रोतश्च तंतुष्विह विततपटश्चित्रवर्णेषु चित्रस्त-
स्मिञ्जिज्ञास्यमाने ननु भवति पटः सूत्रमात्रावशेषः । तद्वद्विश्वं
विचित्रं नगनगरनरग्रामपश्वादिरूपं प्रोतं वैराजरूपे स वियति
तदपि ब्रह्मणि प्रोतमोतम् ॥ ४९ ॥ रूपं रूपं प्रतीदं प्रतिफल-
नवशात्प्रातिरूप्यं प्रपेदे । ह्येको द्रष्टा द्वितीयो भवति च सलिले
सर्वतोनंतरूपः इन्द्रो मायाभिरास्ते श्रुतिरिति वदति व्या-
पकं ब्रह्म तस्माज्जीवत्वं यात्यकस्मादतिविमलतरे बिम्बितं बुद्ध्यु-
पाधौ ॥ ५० ॥ तज्ज्ञाः पश्यन्ति बुद्ध्या परमबलवतो माय-
यात्तं पतङ्गं बुद्धावंतःसमुद्रे प्रतिफलितमरीच्यास्पदं वेधस-
स्तम् । यादृग्यावानुपाधिः प्रतिफलति तथा ब्रह्म तस्मिन्यथा-
यं प्रासादर्शानुरूपं प्रतिफलति यथावस्थितं तत्सदैवम् ॥५१॥
एको भानुस्तदर्थप्रतिफलनवशाद्यस्त्वनेकोदकांतर्नानात्वं यात्यु-
पाधिस्थितिगतिसमतां चापि तद्वत्परात्मा । भूतेषूच्चावचेषु
प्रतिफलित इवाभाति तावत्स्वभावावच्छिन्नो यः परंतु स्फुटम-
नुपहतो भाति तावत्स्वभावैः ॥ ५२ ॥ यद्वत्पीयूषरश्मौ दिन-
करकिरणैर्विंबितैरेति सान्द्रं नाशं नैशं तमिस्रं गृहगतमथवा
मूर्छितैः कांस्यपात्रे । तद्वद्बुद्धौ परात्मद्युतिभिरनुपदं बिंबि-
ताभिः समंताद्भासन्ते हींद्रियास्यप्रसृतिभिरनिशं रूपमुख्याः
पदार्थाः ॥ ५३ ॥ पूर्णात्मानात्मभेदात्त्रिविधमिह परं बुद्ध्य-
वच्छिन्नमन्यत्तत्रैवाभासमात्रं गगनमिव जले त्रिप्रकारं विभाति ।
अम्भोवच्छिन्नमस्मिन्प्रतिफलितमतः पाथसोंतर्बहिश्च पूर्णाव-
च्छिन्नयोगे व्रजति लयमविद्या स्वकार्यैः सहैव ॥ ५४ ॥
दृश्यन्ते दारुनार्यो युगपदगणिताः स्तंभसूत्रप्रयुक्ताः संगीतं

दर्शयंत्यो व्यवहृतिमपरां लोकसिद्धां च सर्वाम् । सर्वत्राङ्कु
विष्टादभिनवविभवाद्यावदर्थानुवंधात्तद्वत्सूत्रात्मसंज्ञाद्व्यवहरति
जगद्भूर्भुवःस्वर्महान्तम् ॥ ५५ ॥ तत्सत्यं यत्त्रिकालेष्वनुपह
मदः प्राणदिग्व्योममुख्यं यस्मिन्विश्रान्तमास्ते तदिह नि
दितं ब्रह्म सत्यस्य सत्यम् । नास्त्यन्यत्किंच यद्वत्परमधिकम
नाम सत्यस्य सत्यं सच्च त्यच्चेति मूर्ताद्युपहितमवरं सत्यमख्या
सत्यम् ॥ ५६ ॥ यत्किंचिद्भात्यसत्यं व्यवहृतिविषये रौप्य
प्रांद्युमुख्यं तद्वै सत्याश्रयेणेत्ययमिह नियमः सावधिर्लोक
द्धः । तद्वत्सत्यस्य सत्ये जगदखिलमिदं ब्रह्मणि प्राविरा
न्मिथ्याभूतं प्रतीतं भवति खलु यतस्तच्च सत्यं वदन्ति ॥ ५७
यत्राकाशावकाशः कलयति च कलामात्रतां यत्र कालो
वाशावसानं बृहदिह हि विराट्पूर्वमर्वागिवास्ते । सूत्रं यत्र
विरासीन्महदपि महतस्तद्धि पूर्णाच्च पूर्णं संपूर्णादर्णवादे
भवति यथा पूर्णमेकार्णवांभः ॥ ५८ ॥ अन्तः सर्वौषधी
पृथगमितरसैर्गंधवीर्यैर्विपाकैरेकं पाथोदपाथः परिणमति
तद्वदेवान्तरात्मा । नानाभूतस्वभावैर्वहति वसुमती येन वि
पयोदो वर्षत्युच्चैर्हुताशः पचति दहति वा येन सर्वान्तरा
॥ ५९ ॥ भूतेष्वात्मानमात्मन्यनुगतमखिलं भूतजातं प्रप
त्त्रायः पाथस्तरंगान्वयवदथ चिरं सर्वमात्मैव पश्येत् ।
ब्रह्माद्वितीयं श्रुतिशिरसि मतं नेह नानास्ति किंचिन्मृत्यो
प्नोति मृत्युं स इह जगदिदं यस्तु नानेव पश्येत् ॥ ६०
प्राक्पश्चादस्ति कुंभाद्गगनमिदमिति प्रत्यये सत्यपीदं कुम्भ
त्पत्तावुदेति प्रलयमुपगते नश्यतीत्यन्यदेशम् । नीते कुं
साकं व्रजति भजति वा तत्प्रमाणानुकारमित्थं मिथ्या प्र

तिः स्फुरति तनुभृतां विश्वतस्तद्वदात्मा ॥ ६१ ॥ यावान्पिण्डो गुडस्य स्फुरति मधुरिमैवास्ति सर्वोऽपि तावान्यावान्कर्पूरपिण्डः परिणमति सदामोद एवात्र तावान् । विश्वं यावद्विभाति द्रुमनगनगरारामचैत्याभिरामं तावच्चैतन्यमेकं प्रविकसति यतस्तत्तदात्मावशेषम् ॥ ६२ ॥ वाद्याघ्नादानुभूतिर्यदपि तदपि सा नूनमाघातगम्या वाद्याघातध्वनीनां पृथगनुभवतः किंतु तत्साहचर्यात् । मायोपादानमेतत्सहचरितमिव ब्रह्मणा भाति तद्वत्तस्मिन्प्रत्यक्प्रतीते न किमपि विषयीभावमाप्नोति यस्मात् ॥ ६३ ॥ दृष्टः साक्षादिदानीमिह खलु जगतामीश्वरः संविदात्मा विज्ञानस्थाणुरेको गगनवदभितः सर्वभूतान्तरात्मा । दृष्टं ब्रह्मातिरिक्तं सकलमिदमसद्रूपमाभासमात्रं शुद्धं ब्रह्माहमस्मीत्यविरतमधुनात्रैव तिष्ठेदनीहः ॥ ६४ ॥ इन्द्रेन्द्राण्योः प्रकामं सुरतसुखजुषोः स्याद्रतान्तः सुषुप्तिस्तस्यामानन्दसान्द्रं पदमतिगहनं यत्स आनंदकोशः । तस्मिन्नो वेद किंचिन्निरतिशयसुखाभ्यन्तरे लीयमानो दुःखी स्याद्बोधितः सन्निति कुशलमतिर्बोधयेन्नैव सुप्तम् ॥ ६५ ॥ सर्वे नन्दन्ति जीवा अधिगतयशसा गृह्णता चक्षुरादीनन्तःसर्वोपकर्त्रा बहिरपि च सुषुप्तौ यथा तुल्यसंस्थाः । एतेषां किल्बिषस्पृक् जठरभृतिकृते यो बहिर्वृत्तिरास्ते त्वक्चक्षुःश्रोत्रनासारसनवशमितो याति शोकं च मोहम् ॥ ६६ ॥ जाग्रत्यामन्तरात्मा विषयसुखकृतेऽनेकयत्नान्विधास्यन् श्राम्यत्सर्वेंद्रियौघोऽधिगतमपि सुखं विस्मरन्याति निद्राम् । विश्रामाय स्वरूपे त्वतितरसुलभं तेन चातींद्रियं हि सौख्यं सर्वोत्तमं स्यात्परिणतिविरसादिंद्रियोत्थात्सुखाच्च॥६७॥ पक्षावभ्यस्य पक्षी जनयति मरुतं तेन यात्युच्चदेशं लब्ध्वा वायुं

महान्तं श्रममपनयति स्वीयपक्षौ प्रसार्य । दुःसंकल्पैर्विक
विषयमनुकदर्थीकृतं चित्तमेतत्खिन्नं विश्रामहेतोः स्वपि
चिरमहो हस्तपादान्प्रसार्य ॥ ६८ ॥ आश्लिष्यात्मानमात्मा
किमपि सहसैवांतरं वेद बाह्यं यद्वत्कामी विदेशात्सदनमुप
गाढमाश्लिष्य कान्ताम् । यात्यस्तं तत्र लोकव्यवहृतिरखि
पुण्यपापानुबन्धः शोको मोहो भयं वा समविषममिदं न
त्वेव किंचित् ॥ ६९ ॥ अल्पानल्पप्रपंचप्रलय उपरतिश्च
याणां सुखाप्तिर्जीवन्मुक्तौ सुषुप्तौ त्रितयमपि समं किंतु तत्रा
भेदः । प्राक्संस्कारात्प्रसुप्तः पुनरपि च परावृत्तिमेति प्र
नश्यत्संस्कारजातो न स किल पुनरावर्तते यश्च मुक्तः ॥७
आनन्दान्यश्च सर्वाननुभवति नृपः सर्वसंपत्समृद्धस्तस्यान
स एकः स खलु शतगुणः संप्रतिष्ठः पितॄणाम् । आदेव
लोकं शतशतगुणितास्ते यदन्तर्गताः स्युर्ब्रह्मानन्दः स ए
स्त्वथ विषयसुखान्यस्य मात्रा भवन्ति ॥ ७१ ॥ यत्रानन्द
मोदाः प्रमद इति मुदश्चासते सर्व एते यत्राप्ताः सर्वका
स्युरखिलविरमात्केवलीभाव आस्ते । मां तत्रानंदसांद्रे
चिरममृतं सोमपीयूषपूर्णां धारामिंद्राय देहीत्यपि निगम
भ्रूयुगांतर्गताय ॥ ७२ ॥ आत्माकंपः सुखात्मा स्फुरति
परा त्वन्यथैव स्फुरंती स्थैर्यं वा चंचलत्वं मनसि परि
याति तत्रत्यमस्मिन् । चांचल्यं दुःखहेतुर्मनस इदमहो याव
ष्टार्थलब्धिस्तस्यां यावत्स्थिरत्वं मनसि विषयजं स्यात्सुखं
देव ॥ ७३ ॥ यद्वत्सौख्यं रतान्ते निमिषमिह मनस्येक
रसे स्यात्स्थैर्यं यावत्सुषुप्तौ सुखमनतिशयं तावदेवाथ मु
नित्यानंदः प्रशांते हृदि तदिह सुखस्थैर्ययोः साहचर्यं नि

नंदस्य मात्रा विषयसुखमिदं युज्यते तेन वक्तुम् ॥ ७४ ॥
श्रांतं स्वांतं सबाह्यव्यवहृतिभिरिदं ताः समाकृष्य सर्वास्तत्तत्संस्कारयुक्तं ह्युपरमति परावृत्तमिच्छन्निदानम् । स्वाप्नान्संस्कारजातप्रजनितविषयान् स्वाप्नदेहेनुभूतान् प्रोत्स्यांतः प्रत्यगात्मप्रवणमिदमगाद्भूरिविश्राममस्मिन् ॥ ७५ ॥ स्वप्ने भोगः सुखादेर्भवति ननु कुतः साधने मूर्छमाने स्वाप्नं देहांतरं तद्व्यवहृतिकुशलं न्व्यमुत्पद्यते चेत् । तत्सामग्र्या अभावात्कुत इदमुदितं तद्धि सांकल्पितं चेत्तत्किं स्वाप्ने रतांते वपुषि निपतिते दृश्यते शुक्रमोक्षः ॥ ७६ ॥ भीत्या रोदित्यनेन प्रवदति हसति श्लाघते नूनमस्मात्स्वप्नेप्यंगेनुबंधं त्यजति न सहसा मूर्छितेप्यंतरात्मा । पूर्वं ये येनुभूतास्तनुयुवतिहयव्याघ्रदेशादयोर्थास्तत्संस्कारस्वरूपान्सृजति पुनरमून् श्रित्य संस्कारदेहम् ॥ ७७ ॥ सन्धौ जाग्रत्सुषुप्त्योरनुभवविदिता स्वाप्न्यवस्था द्वितीया तत्रात्मज्योतिरास्ते पुरुष इह समाकृष्य सर्वेंद्रियाणि । संवेश्य स्थूलदेहं समुचितशयने स्वीयभासांतरात्मा पश्यन्संस्काररूपानभिमतविषयान्याति कुत्रापि तद्वत् ॥ ७८ ॥ रक्षन् प्राणैः कुलायं निजशयनगतं श्वासमात्रावशेषैर्माभूत्तत्प्रेतकल्पाकृतकमिति पुनः सारमेयादिभक्ष्यम् । स्वप्ने स्वीयप्रभावात्सृजति हयरथान्निम्नगाः पल्वलानि क्रीडास्थानान्यनेकान्यपि सुहृदबलापुत्रमित्रानुकारान् ॥ ७९ ॥ मातंगव्याघ्रदस्युद्विपदुरगकपीन्कुत्रचित्प्रेयसीभिः क्रीडन्नास्ते हसन्वा विहरति कुहचिन्मृष्टमश्नाति चान्नम् । म्लेच्छत्वं प्राप्तवानस्म्यहमिति कुहचिच्छंकितः स्वीयलोकादास्ते व्याघ्रादिभीत्या प्रचलति कुहचिद्रोदिति ग्रस्यमानः ॥८०॥ यो यो दृग्गोचरोर्थो भवति स स तदा तद्गतात्म-

स्वरूपाविज्ञानोत्पद्यमानः स्फुरति ननु यथा शुक्तिकाज्ञा
हेतुः । रौप्याभासो मृषैव स्फुरति च किरणाज्ञानतोंभो भुजं
रज्ज्वज्ञानान्निमेपं सुखभयकृदतो दृष्टसृष्टं किलेदम् ॥ ८१
मायाध्यासाश्रयेण प्रविततमखिलं यन्मया तेन मत्स्थान्यं
न्येतेपु नाहं यदपि हि रजतं भाति शुक्तौ न रौप्ये । शुक्ति
स्तेन भूतान्यपि मयि निवसंतीति विष्वग्विनेता प्राहास्माद्
जातं सकलमपि मृषैवेंद्रजालोपमेयम् ॥ ८२ ॥ हेतुः
लोके सुखतदितरयोरेवमज्ञोऽविदित्वा मित्रं वा शत्रुरित्थं
हरति मृषा याज्ञवल्क्यार्तभागौ । यत्कर्मैवोचतुः प्राक् जन
नृपगृहे चक्रतुस्तत्प्रशंसां वंशोत्तंसो यदूनामिति वदति
कोप्यत्र तिष्ठत्यकर्मा ॥ ८३ ॥ वृक्षच्छेदे कुठारः प्रभ
यदपि प्राणिनोद्यस्तथापि प्रायोन्नं तृप्तिहेतुस्तदपि निर्गा
कारणं भोक्तृयत्नः । प्राचीनं कर्म तद्वद्विपमसमफलप्राप्तिहेतु
थापि स्वातंत्र्यं नश्वरेस्मिन्न हि खलु घटते प्रेरकोस्यांतरा
॥ ८४ ॥ स्मृत्या लोकेपु वर्णाश्रमविहितमदो नित्यकाम्या
कर्म सर्वं ब्रह्मार्पणं स्यादिति निगमगिरः संगिरन्तेतिरम्य
यन्नासानेत्रजिह्वाकरचरणशिरःश्रोत्रसंतर्पणेन तुष्येदंगीव स
त्तरुरिव सकलो मूलसंतर्पणेन ॥ ८५ ॥ यः प्रेत्यात्मानं
श्रुतिविदपि तथा कर्मकृत्कर्मणोस्य नाशः स्यादल्पभोगा
रवतरणे दुःखभोगो महीयान् । आत्माभिज्ञस्य लिप्सोरपि
ति महान्शाश्वतः सिद्धिभोगो ह्यात्मा तस्मादुपास्यः खलु
धिगमे सर्वसौख्यान्यलिप्सोः ॥ ८६ ॥ सूर्याद्यैरर्थभानं न
भवति पुनः केवलैर्नात्र चित्रं सूर्यात्सूर्यप्रतीतिर्न भवति स
नापि चंद्रस्य चंद्रात् । अग्नेरग्नेश्च किंतु स्फुरति रविमुखं

पश्चित्प्रयुक्तादात्मज्योतिस्ततोयं पुरुष इह महो देवतानां च चित्रम् ॥ ८७ ॥ प्राणेनांभांसि भूयः पिवति पुनरसावन्नमश्नाति तत्र तत्पाकं जाठरोग्निस्तदुपहितवलो द्राक् शनैर्वा करोति । व्यानः सर्वांगनाडीष्वथ नयति रसं प्राणसंतर्पणार्थं निःसारं पूतिगंधं त्यजति वहिरयं देहतोपानसंज्ञः ॥ ८८ ॥ व्यापारं देहसंस्थः प्रतिवपुरखिलं पंचवृत्त्यात्मकोसौ प्राणः सर्वेंद्रियाणामधिपतिरनिशं सत्तया निर्विवादम् । यस्येत्थं चिद्घनस्य स्फुटमिह कुरुते सोस्मि सर्वस्य साक्षी प्राणस्य प्राण एषोप्यखिलतनुभृतां चक्षुषश्चक्षुरेषः ॥ ८९ ॥ यं भांतं चिद्घनैकं क्षितिजलपवनादित्यचन्द्रादयो ये भासा तस्यैव चानु प्रविरलगतयो भांति तस्मिन्वसंति । विद्युत्पुंजोग्निसंघोप्युडुगणविततिर्भासयेत्किं परेशं ज्योतिः शांतं ह्यनंतं कविमजममरं शाश्वतं जन्मशून्यम् ॥ ९० ॥ तद्ब्रह्मैवाहमस्मीत्यनुभव उदितो यस्य कस्यापि चेद्व पुंसः श्रीसद्गुरूणामतुलितकरुणापूर्णपीयूषदृष्ट्या । जीवन्मुक्तः स एव भ्रमविधुरमना निर्गतेनाद्युपाधौ नित्यानंदैकधाम प्रविशति परमं नष्टसंदेहवृत्तिः ॥ ९१ ॥ नो देहो नेंद्रियाणि क्षरमतिचपलं नो मनो नैव वुद्धिः प्राणो नैवाहमस्मीत्यखिलजडमिदं वस्तुजातं कथं स्याम् । नाहंकारो न दारागृहसुतसुजनक्षेत्रवित्तादि दूरं साक्षी चित्प्रत्यगात्मा निखिलजगदधिष्ठानभूतः शिवोहम् ॥ ९२ ॥ दृश्यं यद्रूपमेतद्भवति च विशदं नीलपीताद्यनेकं सर्वस्यैतस्य दृग्वै स्फुरदनुभवता लोचनं चैकरूपम् । तद्दृश्यं मानसं दृक् परिणतविषयाकारधीवृत्तयोपि दृश्या दृग्रूप एव प्रभुरिह स तथा दृश्यते नैव साक्षी ॥ ९३ ॥ रज्ज्वज्ञानाद्भुजंगस्तदुपरि सहसा भाति मंदा-

न्धकारे स्वात्माज्ञानात्तथासौ भृशमसुखमभूदात्मनो जीव
वः । आप्तोक्त्याहिभ्रमांते स च खलु विदिता रज्जुरेका त
कूटस्थो नैव जीवो निजगुरुवचसा साक्षिभूतः शिवोहम् ॥९
किं ज्योतिस्ते वदस्वाहनि रविरिह मे चंद्रदीपादि रात्रौ स
मानुदीपादिकपरिकलने किं तव ज्योतिरस्ति । चक्षुस्तन्मी
किं भवति च सुतरां धीर्धियः किं प्रकाशे तत्रैवाहं त
तदसि परमकं ज्योतिरसि प्रभोहम् ॥ ९५ ॥ कंचित
स्थितः कौ पुनरिह भजते नैव देहादिसंघं यावत्प्रारब्ध
कथमपि स सुखं चेष्टते संगबुद्ध्या । निर्द्वंद्वो नित्यशुद्धो वि
लितममताहंकृतिर्नित्यतृप्तो ब्रह्मानंदस्वरूपः स्थिरमतिर
निर्गताशेषमोहः ॥ ९६ ॥ जीवात्मब्रह्मभेदं दलयति स
यत् प्रकाशैकरूपं विज्ञानं तच्च बुद्धौ समुदितमतुलं यस्य
पवित्रम् । माया तेनैव तस्य क्षयमुपगमिता संसृतेः
या नष्टा सा कार्यकर्त्री पुनरपि भविता नैव विज्ञानमा
॥ ९७ ॥ विश्वं नेति प्रमाणाद्विगलितजगदाकारभानस्
पीत्वा यद्वत्फलांभस्त्यजति च सुतरां तत्फलं सौरभा
सम्यक् सच्चिद्घनैकामृतसुखकवलास्वादपूर्णो हृदासौ
निःसारमेवं जगदखिलमिदं स्वप्रभः शांतचित्तः ॥ ९
क्षीयंते चास्य कर्माण्यपि खलु हृदयग्रंथिरुद्भिद्यते वै छि
संशया ये जनिमृतिफलदा दृष्टमात्रे परेशे । तस्मिंश्चिन्मा
गुणमलरहिते तत्त्वमस्यादिलक्ष्ये कूटस्थे प्रत्यगात्मन्यखि
धिमनोगोचरे ब्रह्मणीशे ॥ ९९ ॥ आदौ मध्ये तथांते ज
तिफलदं कर्ममूलं विशालं ज्ञात्वा संसारवृक्षं भ्रममदमुदि
शोकतानेकपत्रम् । कामक्रोधादिशाखं सुतपशुवनिताकन्या

पक्षिसंघं छित्त्वासंगासिनैनं पटुमतिरभितश्चिंतयेद्वासुदेवम् ॥ ॥ १०० ॥ जातं मय्येव सर्वं पुनरपि मयि तत्संस्थितं चैव विश्वं सर्वं मय्येव याति प्रविलयमिति तद्ब्रह्म चैवाहमस्मि । यस्य स्मृत्या च यज्ञाद्यखिलशुभविधौ सुप्रयातीह कार्यं न्यूनं संपूर्णतां वै तमहमतिमुदैवाच्युतं सन्नतोस्मि ॥ १०१ ॥ इति श्रीमच्छंकराचार्यकृतशतश्लोकी संपूर्णा ॥ ३० ॥

---

## विवेकचूडामणिः ॥ ३१ ॥

ॐ परमात्मने नमः ॥ सर्ववेदान्तसिद्धान्तगोचरं तमगोचरम् । गोविन्दं परमानन्दं सद्गुरुं प्रणतोऽस्म्यहम् ॥ १ ॥ जन्तूनां नरजन्म दुर्लभमतः पुंस्त्वं ततो विप्रता तस्माद्वैदिकधर्ममार्गपरता विद्वत्त्वमस्मात्परम् । आत्मानात्मविवेचनं स्वनुभवो ब्रह्मात्मना-संस्थितिर्मुक्तिर्नो शतकोटिजन्मसुकृतैः पुण्यैर्विना लभ्यते ॥ २ ॥ दुर्लभं त्रयमेवैतद्देवानुग्रहहेतुकम् । मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः ॥ ३ ॥ लब्ध्वा कथंचिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् । यस्त्वात्ममुक्त्यै न यतेत मूढधीः स ह्यात्महा स्वं विनिहन्त्यसद्ग्रहात् ॥ ४ ॥ इतः कोन्योऽस्ति मूढात्मा यस्तु स्वार्थे प्रमाद्यति । दुर्लभं मानुषं देहं प्राप्य तत्रापि पौरुषम् ॥५॥ वदन्तु शास्त्राणि यजन्तु देवान् कुर्वन्तु कर्माणि भजन्तु देवताः । आत्मैक्यबोधेन विनापि मुक्तिर्न सिद्ध्यति ब्रह्मशतान्तरेऽपि ॥ ६ ॥ अमृतत्वस्य नाशास्ति वित्तेनेत्येव हि श्रुतिः । ब्रवीति कर्मणो मुक्तेरहेतुत्वं स्फुटं यतः ॥ ७ ॥ अतो विमुक्त्यै प्रयतेत विद्वान् संन्यस्तबाह्यार्थसुखस्पृहः सन् । सन्तं महान्तं समुपेत्य

देशिकं तेनोपदिष्टार्थसमाहितात्मा ॥ ८ ॥ उद्धरेदात्मनात्म
मग्नं संसारवारिधौ । योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठ
॥ ९ ॥ संन्यस्य सर्वकर्माणि भवबन्धविमुक्तये । यत्यतां प
तैर्धीरैरात्माभ्यास उपस्थितैः ॥ १० ॥ चित्तस्य शुद्धये
नतु वस्तूपलब्धये । वस्तुसिद्धिर्विचारेण न किंचित्कर्मको
भिः ॥ ११ ॥ सम्यग्विचारतः सिद्धा रज्जुतत्त्वावधारणा
भ्रान्तोदितमहासर्पभयदुःखविनाशिनी ॥ १२ ॥ अ
निश्चयो दृष्टो विचारेण हितोक्तितः । न स्नानेन न दा
प्राणायामशतेन वा ॥ १३ ॥ अधिकारिणमाशास्ते फलसि
र्विशेषतः । उपाया देशकालाद्याः सन्त्यस्मिन्सहकारिणः ॥
अतो विचारः कर्तव्यो मुमुक्षोरात्मवस्तुनः । समासाद्य द
सिन्धुं गुरुं ब्रह्मविदुत्तमम् ॥ १५ ॥ मेधावी पुरुषो विद्वा
पोहविचक्षणः । अधिकार्यात्मविद्यायामुक्तलक्षणलक्षितः ॥
विवेकिनो विरक्तस्य शमादिगुणशालिनः । मुमुक्षोरेव हि
जिज्ञासायोग्यता मता ॥ १७ ॥ साधनान्यत्र चत्वारि क
तानि मनीषिभिः । येषु सत्स्वेव सन्निष्ठा यदभावे न सि
ति ॥ १८ ॥ आदौ नित्याऽनित्यवस्तुविवेकः परिगण्य
इहामुत्रफलभोगविरागस्तदनन्तरम् ॥ १९ ॥ शमादिषट्क
त्तिर्मुमुक्षुत्वमिति स्फुटम् । ब्रह्म सत्यं जगन्मिथ्येत्येवं
विनिश्चयः ॥ २० ॥ सोऽयं नित्यानित्यवस्तुविवेकः समुदा
तः । तद्वैराग्यं जिहासा या दर्शनश्रवणादिभिः ॥ २१
देहादिब्रह्मपर्यन्ते ह्यनित्ये भोगवस्तुनि । विरज्य विषयव्रा
द्दोषदृष्ट्या मुहुर्मुहुः ॥ २२ ॥ स्वलक्ष्ये नियतावस्था मन
शम उच्यते । विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोल

॥ २३ ॥ उभयेषामिन्द्रियाणां स दमः परिकीर्तितः। बाह्यानालम्बनं वृत्तेरेषोपरतिरुत्तमा ॥ २४ ॥ सहनं सर्वदुःखानामप्रतीकारपूर्वकम्। चिन्ताविलापरहितं सा तितिक्षा निगद्यते ॥ २५ ॥ शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्यवधारणम्। सा श्रद्धा कथिता सद्भिर्यया वस्तूपलभ्यते ॥ २६ ॥ सर्वदा स्थापनं बुद्धेः शुद्धे ब्रह्मणि सर्वदा। तत्समाधानमित्युक्तं नतु चित्तस्य लालनम् ॥ २७ ॥ अहंकारादिदेहान्तान्बन्धानज्ञानकल्पितान्। स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता ॥ २८ ॥ मन्दमध्यमरूपापि वैराग्येण शमादिना। प्रसादेन गुरोः सेयं प्रवृद्धा सूयते फलम् ॥ २९ ॥ वैराग्यं च मुमुक्षुत्वं तीव्रं यस्य तु विद्यते। तस्मिन्नेवार्थवन्तः स्युः फलवन्तः शमादयः ॥ ३० ॥ एतयोर्मन्दता यत्र विरक्तत्वमुमुक्षयोः। मरौ सलिलवत्तत्र शमादेर्भानमात्रता ॥ ३१ ॥ मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी। स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते ॥ ३२ ॥ स्वात्मतत्त्वानुसन्धानं भक्तिरित्यपरे जगुः। उक्तसाधनसंपन्नस्तत्त्वजिज्ञासुरात्मनः ॥ ३३ ॥ उपसीदेद्गुरुं प्राज्ञं यस्माद्बन्धविमोक्षणम्। श्रोत्रियोऽवृजिनोऽकामहतो यो ब्रह्मवित्तमः ॥ ३४ ॥ ब्रह्मण्युपरतः शान्तो निरिन्धन इवानिलः। अहेतुकदयासिन्धुर्बन्धुरानमतां सताम् ॥ ३५ ॥ तमाराध्य गुरुं भक्त्या प्रह्वप्रश्रयसेवनैः। प्रसन्नं तमनुप्राप्य पृच्छेज्ज्ञातव्यमात्मनः ॥ ३६ ॥ स्वामिन्नमस्ते नतलोकबन्धो कारुण्यसिन्धो पतितं भवाब्धौ। मामुद्धरात्मीयकटाक्षदृष्ट्या ऋज्व्यातिकारुण्यसुधाभिवृष्ट्या ॥ ३७ ॥ दुर्वारसंसारदवाग्नितप्तं दोधूयमानं दुरदृष्टवातैः। भीतं प्रपन्नं परिपाहि मृत्योः शर-

ण्यमन्यद्यदहं न जाने ॥ ३८ ॥ शान्ता महान्तो निवस
सन्तो वसन्तवल्लोकहितं चरन्तः । तीर्णाः स्वयं भीमभवा
जना न हेतुनान्यानपि तारयन्तः ॥ ३९ ॥ अयं स्वभा
स्वत एव यत्परश्रमापनोदप्रवणं महात्मनाम् । सुधां
स्वयमर्ककर्कशप्रभाभितप्तामवति क्षितिं किल ॥ ४०
ब्रह्मानन्दरसानुभूतिकलितैः पूतैः सुशीतैर्युतैर्युष्मद्वाकलशो
तैः श्रुतिसुखैर्वाक्यामृतैः सेचय । संतप्तं भवतापदावदहन
लाभिरेनं प्रभो धन्यास्ते भवदीक्षणक्षणगतेः पात्री
स्वीकृताः ॥ ४१ ॥ कथं तरेयं भवसिन्धुमेतं का वा ग
कतमोऽस्त्युपायः । जाने न किंचित्कृपयाऽव मां प्रभो सं
दुःखक्षतिमातनुष्व ॥ ४२ ॥ तथा वदन्तं शरणागतं
संसारदावानलतापतप्तम् । निरीक्ष्य कारुण्यरसार्द्रदृष्ट्या
दभीतिं सहसा महात्मा ॥ ४३ ॥ विद्वान्स तस्मा उ
त्तिमीयुषे मुमुक्षवे साधु यथोक्तकारिणे । प्रशान्तचि
शमान्विताय तत्त्वोपदेशं कृपयैव कुर्यात् ॥ ४४ ॥
भैष्ट विद्वंस्तव नास्त्यपायः संसारसिंधोस्तरणेऽस्त्युपायः
येनैव याता यतयोऽस्य पारं तमेव मार्गं तव नि
शामि ॥ ४५ ॥ अस्त्युपायो महान्कश्चित्संसारभयनाश
तेन तीर्त्वा भवाम्भोधिं परमानन्दमाप्स्यसि ॥ ४६ ॥ वे
न्तार्थविचारेण जायते ज्ञानमुत्तमम् । तेनात्यन्तिकसं
दुःखनाशो भवत्यनु ॥ ४७ ॥ श्रद्धाभक्तिध्यानयोगान्मुमु
र्मुक्तेर्हेतून्वक्ति साक्षाच्छ्रुतेर्गीः । यो वा एतेष्वेव तिष्ठत्य
मोक्षोऽविद्याकल्पिताद्देहबन्धात् ॥ ४८ ॥ अज्ञानयोगात्पर
त्मनस्तव ह्यनात्मबन्धस्तत एव संसृतिः । तयोर्विवेकोदित

धवह्निरज्ञानकार्यं प्रदहेत्ससूलम् ॥ ४९ ॥ कृपया श्रूयतां स्वामिन्प्रश्नोऽयं क्रियते मया । यदुत्तरमहं श्रुत्वा कृतार्थः स्यां भवन्मुखात् ॥ ५० ॥ को नाम बन्धः कुत एष आगतः कथं प्रतिष्ठाऽस्य कथं विमोक्षः । कोऽसावनात्मा परमः स्व आत्मा तयोर्विवेकः कथमेतदुच्यताम् ॥ ५१ ॥ धन्योऽसि कृतकृत्योऽसि पावितं ते कुलं त्वया । यदविद्याबन्धमुक्त्या ब्रह्मीभवितुमिच्छसि ॥ ५२॥ ऋणमोचनकर्त्तारः पितुः सन्ति सुतादयः। बन्धमोचनकर्त्ता तु स्वस्मादन्यो न कश्चन ॥ ५३ ॥ मस्तकन्यस्तभारादेर्दुःखमन्यैर्निवार्यते । क्षुधादिकृतदुःखं तु विना स्वेन न केनचित् ॥ ५४ ॥ पथ्यमौषधसेवा च क्रियते येन रोगिणा । आरोग्यसिद्धिर्दृष्टाऽस्य नान्यानुष्ठितकर्मणा ॥ ५५॥ वस्तुस्वरूपं स्फुटबोधचक्षुषा स्वेनैव वेद्यं नतु पण्डितेन । चन्द्रस्वरूपं निजचक्षुषैव ज्ञातव्यमन्यैरवगम्यते किम् ॥ ५६ ॥ अविद्याकामकर्मादि पाशबन्धं विमोचितुम् । कः शक्नुयाद्विनात्मानं कल्पकोटिशतैरपि ॥ ५७ ॥ न योगेन न सांख्येन कर्मणा नो न विद्यया । ब्रह्मात्मैकत्वबोधेन मोक्षः सिध्यति नान्यथा ॥ ५८ ॥ वीणाया रूपसौन्दर्यं तन्त्रीवादनसौष्ठवम् । प्रजारञ्जनमात्रं तन्न साम्राज्याय कल्पते ॥ ५९ ॥ वाग्वैखरीशब्दझरी शास्त्रव्याख्यानकौशलम् । वैदुष्यं विदुषां मध्ये भुक्तये न तु मुक्तये ॥ ६० ॥ अविज्ञाते परे तत्त्वे शास्त्राधीतिस्तु निष्फला । विज्ञातेऽपि परे तत्त्वे शास्त्राधीतिस्तु निष्फला ॥ ६१ ॥ शब्दजालं महारण्यं चित्तभ्रमणकारणम् । अतः प्रयत्नाज्ज्ञातव्यं तत्त्वज्ञात्तत्त्वमात्मनः ॥ ६२ ॥ अज्ञानसर्पदष्टस्य ब्रह्मज्ञानौषधं विना । किमु वेदैश्च शास्त्रैश्च किमु मन्त्रैः किमौ-

पधैः ॥ ६३ ॥ न गच्छति विना पानं व्याधिरौषधशब्द
विनाऽपरोक्षानुभवं ब्रह्मशब्दैर्न मुच्यते ॥ ६४ ॥ अथ
दृश्यविलयमज्ञात्वा तत्त्वमात्मनः । बाह्यशब्दैः कुतो मुक्ति
क्तिमात्रफलैर्नृणाम् ॥ ६५ ॥ अकृत्वा शत्रुसंहारमगत्वा
भूश्रियम् । राजाहमिति शब्दान्नो राजा भवितुमर्हति ॥
आप्तोक्तिं खननं तथोपरि शिलाद्युत्कर्षणं स्वीकृतिं नि
समपेक्षते न हि बहिः शब्दैस्तु निर्गच्छति । तद्वद्ब्रह्मविदो
शमननध्यानादिभिर्लभ्यते मायाकार्यतिरोहितं स्वममलं
न दुर्युक्तिभिः ॥ ६७ ॥ तस्मात्सर्वप्रयत्नेन भवबन्धविमु
स्वैरेव यत्नः कर्तव्यो रोगादाविव पण्डितैः ॥ ६८ ॥
याद्य कृतः प्रश्नो वरीयाञ्छास्त्रविन्मतः । सूत्रप्रायो निगू
ज्ञातव्यश्च मुमुक्षुभिः ॥ ६९ ॥ शृणुष्वावहितो विद्वन्
समुदीर्यते । तदेतच्छ्रवणात्सद्यो भवबन्धाद्विमोक्ष्यसे ॥
मोक्षस्य हेतुः प्रथमो निगद्यते वैराग्यमत्यन्तमनित्यवस्तु
ततः शमश्चापि दमस्तितिक्षा न्यासः प्रसक्ताखिलक
भृशम् ॥ ७१ ॥ ततः श्रुतिस्तन्मननं सतत्त्वध्यानं चिरं
निरन्तरं मुनेः । ततो विकल्पं परमेत्य विद्वानिहैव निर्वाण
समृच्छति ॥ ७२ ॥ यद्बोद्धव्यं तवेदानीमात्मानात्मविवेचन
तदुच्यते मया सम्यक् श्रुत्वात्मन्यवधारय ॥ ७३ ॥ मज्जा
मेदःपलरक्तचर्मत्वगाद्यैर्धातुभिरेभिरन्वितम् । पादोरुवक्षो
पृष्ठमस्तकैरङ्गैरुपाङ्गैरुपयुक्तमेतत् ॥ ७४ ॥ अहं ममेति
शरीरं मोहास्पदं स्थूलमितीर्यते बुधैः । नभोनभस्वद्दहना
मयः सूक्ष्माणि भूतानि भवन्ति तानि ॥ ७५ ॥ परस्परा
मिलितानि भूत्वा स्थूलानि च स्थूलशरीरहेतवः । मात्रा

दीया विपया भवन्ति शब्दादयः पञ्च सुखाय भोक्तुः ॥ ७६॥
य एपु मूढा विपयेपु बद्धा रागोरुपाशेन सुदुर्दमेन । आयान्ति
निर्यान्त्यध ऊर्ध्वमुच्चैः स्वकर्मदूतेन जवेन नीताः ॥ ७७ ॥
शब्दादिभिः पञ्चभिरेव पञ्च पञ्चत्वमापुः स्वगुणेन बद्धाः ।
कुरङ्गमातङ्गपतङ्गमीनभृङ्गा नरः पञ्चभिरञ्चितः किम् ॥ ७८ ॥
दोपेण तीव्रो विपयः कृष्णसर्पविपादपि । विपं निहन्ति
भोक्तारं द्रष्टारं चक्षुपाप्ययम् ॥ ७९ ॥ विपयाशामहापाशाद्यो
विमुक्तः सुदुस्त्यजात् । स एव कल्पते मुक्त्यै नान्यः पट्शास्त्र-
वेद्यपि ॥ ८० ॥ आपातवैराग्यवतो मुमुक्षून् भवाब्धिपारं
प्रतियातुमुद्यतान् । आशाग्रहो मज्जयतेऽन्तराले निगृह्य कण्ठे
विनिवर्त्य वेगात् ॥ ८१ ॥ विपयाख्यग्रहो येन सुविरक्त्यसिना
हतः । स गच्छति भवाम्भोधेः पारं प्रत्यूहवर्जितः ॥ ८२ ॥
विपमविपयमार्गैर्गच्छतोऽनच्छबुद्धेः प्रतिपदमभियातो मृत्यु-
रप्येप विद्धि । हितसुजनगुरूक्त्या गच्छतः स्वस्य युक्त्या
प्रभवति फलसिद्धिः सत्यमित्येव विद्धि ॥ ८३ ॥ मोक्षस्य
काङ्क्षा यदि वै तवास्ति त्यजातिदूराद्विपयान्विपं यथा । पीयूप-
वत्तोपदयाक्षमार्जवप्रशान्तिदान्तीर्भज नित्यमादरात् ॥ ८४ ॥
अनुक्षणं यत्परिहृत्य कृत्यमनाद्यविद्याकृतबन्धमोक्षणम् । देहः
परार्थोऽयममुष्य पोपणे यः सज्जते स स्वमनेन हन्ति ॥ ८५ ॥
शरीरपोपणार्थी सन् य आत्मानं दिदृक्षति । ग्राहं दारुधिया
धृत्वा नदीं तर्तुं स गच्छति ॥ ८६ ॥ मोह एप महामृत्युर्मुमु-
क्षोर्वपुरादिपु । मोहो विनिर्जितो येन स मुक्तिपदमर्हति
॥ ८७ ॥ मोहं जहि महामृत्युं देहदारसुतादिपु । यं जित्वा
मुनयो यान्ति तद्विष्णोः परमं पदम् ॥ ८८ ॥ त्वङ्मांसरुधिर-

स्नायुमेदोमज्जास्थिसंकुलम् । पूर्णं मूत्रपुरीषाभ्यां स्थूलं निन्दि
मिदं वपुः ॥ ८९ ॥ पञ्चीकृतेभ्यो भूतेभ्यः स्थूलेभ्यः
पूर्वकर्मणा । समुत्पन्नमिदं स्थूलं भोगायतनमात्मनः कर्म
अवस्था जागरस्तस्य स्थूलार्थानुभवो यतः ॥ ९० ॥ बधि
न्द्रियैः स्थूलपदार्थसेवां स्रक्चन्दनस्त्र्यादिविचित्ररूपाम् दात
करोति जीवः स्वयमेतदात्मना तस्मात्प्रशस्तिर्वपुषोऽस्य ज
॥ ९१ ॥ सर्वोऽपि बाह्यसंसारः पुरुषस्य यदाश्रयः । विद्धि
देहमिदं स्थूलं गृहवद्गृहमेधिनः ॥ ९२ ॥ स्थूलस्य संभवजरा
रामरणानि धर्माः स्थौल्यादयो बहुविधाः शिशुताद्य
स्थाः । वर्णाश्रमादिनियमा बहुधामयाः स्युः पूजावमानबहु
मानमुखा विशेषाः ॥ ९३ ॥ बुद्धीन्द्रियाणि श्रवणं त्वक्चक्षु
घ्राणं च जिह्वा विषयावबोधनात् । वाक्पाणिपादा गुदमु
पस्थः कर्मेन्द्रियाणि प्रवणेन कर्मसु ॥ ९४ ॥ निगद्यते
करणं मनोधीरहंकृतिश्चित्तमिति स्ववृत्तिभिः । मनस्तु संक
विकल्पनादिभिर्बुद्धिः पदार्थाध्यवसायधर्मतः ॥ ९५
अत्राभिमानादहमित्यहंकृतिः । स्वार्थानुसन्धानगुणेन चि
म् ॥ ९६ ॥ प्राणापानव्यानोदानसमाना भवत्यसौ प्राण
स्वयमेव वृत्तिभेदाद्विकृतेर्भेदात्सुवर्णसलिलवत् ॥ ९७ ॥ वा
दिपञ्च श्रवणादिपञ्च प्राणादिपञ्चाभ्रमुखानि पञ्च । बुद्ध्य
घविद्यापि च कामकर्मणी पुर्यष्टकं सूक्ष्मशरीरमाहुः ॥ ९८
इदं शरीरं शृणु सूक्ष्मसंज्ञितं लिङ्गं त्वपञ्चीकृतभूतसंभव
सवासनं कर्म फलानुभावकं स्वाज्ञानतोऽनादिरुपाधिरात्म
॥ ९९ ॥ स्वप्नो भवत्यस्य विभक्त्यवस्था स्वमात्रशेषेण विभा
यत्र । स्वप्ने तु बुद्धिः स्वयमेव जाग्रत्कालीननानाविध

नाभिः ॥ १०० ॥ कर्त्रादिभावं प्रतिपद्य राजते यत्र स्वयं भाति
ह्ययं परात्मा । धीमात्रकोपाधिरशेषसाक्षी न लिप्यते तत्कृत-
कर्मलेशैः ॥ यस्मादसङ्गस्तत एव कर्मभिर्न लिप्यते किंचिदुपा-
धिना कृतैः ॥ १०१ ॥ सर्वं व्यापृतिकरणं लिङ्गमिदं स्याच्चि-
दात्मनः पुंसः । वास्यादिकमिव तक्ष्णस्तेनैवात्मा भवत्यसङ्गो-
ऽयम् ॥ १०२ ॥ अन्धत्वमन्दत्वपटुत्वधर्माः सौगुण्यवैगुण्यव-
शाद्धि विद्धि । बाधिर्यमूकत्वमुखास्तथैव श्रोत्रादिधर्मा नतु
वेत्तुरात्मनः ॥ १०३ ॥ उच्छ्वासनिःश्वासविजृम्भणक्षुत्प्रस्प-
न्दनाद्युत्क्रमणादिकाः क्रियाः । प्राणादिकर्माणि वदन्ति
तज्ज्ञाः प्राणस्य धर्मावशनापिपासे ॥ १०४ ॥ अन्तःकरणमे-
तेषु चक्षुरादिषु वर्ष्मणि । अहमित्यभिमानेन तिष्ठत्याभासते-
जसा ॥ १०५ ॥ अहंकारः स विज्ञेयः कर्त्ता भोक्ताभिमान्य-
यम् । सत्वादिगुणयोगेन चावस्थात्रयमश्नुते ॥ १०६ ॥ विष-
याणामानुकूल्ये सुखी दुःखी विपर्यये । सुखं दुःखं च तद्धर्मः
सदानन्दस्य नात्मनः ॥ १०७ ॥ आत्मार्थत्वेन हि प्रेयान्वि-
षयो न स्वतः प्रियः । स्वत एव हि सर्वेषामात्मा प्रियतमो
यतः ॥ १०८ ॥ तत आत्मा सदानन्दो नास्य दुःखं कदा-
चन । यत्सुषुप्तौ निर्विषय आत्मानन्दोऽनुभूयते ॥ श्रुतिः प्रत्य-
क्षमैतिह्यमनुमानं च जाग्रति ॥ १०९ ॥ अव्यक्तनाम्नी परमे-
शशक्तिरनाद्यविद्या त्रिगुणात्मिका परा । कार्यानुमेया सुधि-
यैव माया यया जगत्सर्वमिदं प्रसूयते ॥ ११० ॥ सन्नाप्यस-
न्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो । साङ्गा-
प्यनङ्गाप्युभयात्मिका नो महाद्भुतानिर्वचनीयरूपा ॥ १११ ॥
शुद्धाद्वयब्रह्मविबोधनाश्या सर्पभ्रमो रज्जुविवेकतो यथा । रज-

स्तमः सत्वमिति प्रसिद्धा गुणास्तदीयाः प्रथितैः स्वकार्यै
॥ ११२ ॥ विक्षेपशक्ती रजसः क्रियात्मिका यतः प्र
प्रसृता पुराणी । रागादयोऽस्याः प्रभवन्ति नित्यं दुःखा
मे मनसो विकाराः ॥ ११३ ॥ कामक्रोधो लोभदम्भाद्य
अहंकारेर्ष्यामत्सराद्यास्तु घोराः । धर्मा एते राजसाः पुंप्र
र्यस्मादेषा तद्रजो बन्धहेतुः ॥ ११४ ॥ एषा वृत्तिर्नाम
गुणस्य शक्तिर्यया वस्त्ववभासतेऽन्यथा । सैषा निदानं पु
संसृतेर्विक्षेपशक्तेः प्रवणस्य हेतुः ॥ ११५ ॥ प्रज्ञावान
ण्डितोऽपि चतुरोऽप्यत्यन्तसूक्ष्मात्मदृक् । व्यालीढस्तम
वेत्ति बहुधा संबोधितोऽपि भृशम् । भ्रान्त्यारोपितमेव
कलयत्यालम्बते तद्गुणान् हन्तासौ प्रबला दुरन्ततमसः
महत्यावृतिः ॥ ११६ ॥ अभावना वा विपरीतभावना
वना विप्रतिपत्तिरस्याः । संसर्गयुक्तं न विमुञ्चति ध्रुवं वि
शक्तिः क्षपयत्यजस्रम् ॥ ११७ ॥ अज्ञानमालस्यजडत
प्रमादमूढत्वमुखास्तमोगुणाः । एतैः प्रयुक्तो नहि वेत्ति कि
निद्रालुवत्स्तम्भवदेव तिष्ठति ॥ ११८ ॥ सत्त्वं विशुद्धं
त्तथापि ताभ्यां मिलित्वा शरणाय कल्प्यते । यत्रात्म
प्रतिबिम्बितः सन् प्रकाशयत्यर्क इवाखिलं जगत् ॥ ११
मिश्रस्य सत्त्वस्य भवन्ति धर्माः स्वमानिताद्या नियमा
द्याः । श्रद्धा च भक्तिश्च मुमुक्षुता च दैवी च संपत्तिरस
वृत्तिः ॥ १२० ॥ विशुद्धसत्त्वस्य गुणाः प्रसादः स्वात्मानु
परमा प्रशान्तिः । तृप्तिः प्रहर्षः परमात्मनिष्ठा यया सदान
रसं समृच्छति ॥ १२१ ॥ अव्यक्तमेतत्त्रिगुणैर्निरुक्तं तत्का
नाम शरीरमात्मनः । सुषुप्तिरेतस्य विभक्त्यवस्था प्रलीन

न्द्रियबुद्धिवृत्तिः ॥ १२२ ॥ सर्वप्रकारप्रमितिप्रशान्तिर्बीजात्म-
नावस्थितिरेव बुद्धेः । सुषुप्तिरेतस्य किल प्रतीतिः किंचिन्न
वेद्मीति जगत्प्रसिद्धेः ॥ १२३ ॥ देहेन्द्रियप्राणमनोऽहमादयः
सर्वे विकारा विषयाः सुखादयः । व्योमादिभूतान्यखिलं च
विश्वमव्यक्तपर्यन्तमिदं ह्यनात्मा ॥ १२४ ॥ माया मायाकार्यं
सर्वं महदादिदेहपर्यन्तम् । असदिदमनात्मकत्वं विद्धि मरुम-
रीचिकाकल्पम् ॥ १२५ ॥ अथ ते संप्रवक्ष्यामि स्वरूपं परमा-
त्मनः । यद्विज्ञाय नरो बन्धान्मुक्तः कैवल्यमश्नुते ॥ १२६ ॥
अस्ति कश्चित्स्वयं नित्यमहंप्रत्ययगोचरः । अवस्थात्रयसाक्षी सन्
पञ्चकोशविलक्षणः ॥ १२७॥ यो विजानाति सकलं जाग्रत्स्वप्न-
सुषुप्तिषु । बुद्धितद्वृत्तिसद्भावमभावमहमित्ययम् ॥ १२८ ॥ यः
पश्यति स्वयं सर्वं यं न पश्यति कश्चन । यश्चेतयति बुद्ध्यादि
न तद्यं चेतयत्ययम् ॥ १२९ ॥ येन विश्वमिदं व्याप्तं यन्न व्या-
प्नोति किंचन । आभारूपमिदं सर्वं तं भान्तमनु भात्ययम् ॥ १३० ॥
यस्य सन्निधिमात्रेण देहेन्द्रियमनोधियः । विषयेषु स्वकीयेषु
वर्तन्ते प्रेरिता इव ॥ १३१ ॥ अहंकारादिदेहान्ता विषयाश्च
सुखादयः । वेद्यन्ते घटवद्येन नित्यबोधस्वरूपिणा ॥ १३२ ॥
एषोऽन्तरात्मा पुरुषः पुराणो निरन्तराखण्डसुखानुभूतिः ।
सदैकरूपः प्रतिबोधमात्रो येनेषिता वागसवश्चरन्ति ॥ १३३ ॥
अत्रैव सत्त्वात्मनि धीगुहायामव्याकृताकाश उशत्प्रकाशः ।
आकाश उच्चैः रविवत्प्रकाशते स्वतेजसा विश्वमिदं प्रकाशयन्
॥ १३४ ॥ ज्ञाता मनोहंकृतिविक्रियाणां देहेन्द्रियप्राणकृतक्रि-
याणाम् । अयोऽग्निवत्ताननुवर्तमानो न चेष्टते नो विकरोति
किंचन ॥१३५॥ न जायते नो म्रियते न वर्धते न क्षीयते नो

विकरोति नित्यः । विलीयमानोऽपि वपुष्यमुष्मिन्न लीयते इ
इवाम्बरः स्वयम् ॥ १३६ ॥ प्रकृतिविकृतिभिन्नः शुद्धबोध
भावः सदसदिदमशेषं भासयन्निर्विशेषः । विलसति परमा
जाग्रदादिष्ववस्थास्वहमहमिति साक्षात्साक्षिरूपेण बुद्धेः ॥१३
नियमितमनसाऽमुं त्वं स्वमात्मानमात्मन्यहमहमिति सा
द्धिद्धि बुद्धिप्रसादात् । जनिमरणतरङ्गापारसंसारसिन्धुं प्रतर
कृतार्थो ब्रह्मरूपेण संस्थः ॥ १३८ ॥ अत्रानात्मन्यह
मतेर्बन्ध एषोऽस्य पुंसः प्राप्तोऽज्ञानाज्जननमरणक्लेशसंपातहे
येनैवायं वपुरिदमसत्सत्यमित्यात्मबुद्ध्या पुष्यत्युक्षत्यवति
यैस्तन्तुभिः कोशकृद्वत् ॥ १३९ ॥ अतस्मिंस्तद्बुद्धिः प्रभ
विमूढस्य तमसा विवेकाभावाद्वै स्फुरति भुजगे रज्जुधिषणा
ततोऽनर्थव्रातो निपतति समादातुरधिकस्ततो योऽसद्ग्राहः
भवति बन्धः शृणु सखे ॥ १४० ॥ अखण्डनित्याद्वय
शक्त्या स्फुरन्तमात्मानमनन्तवैभवम् । समावृणोत्यावृतिश
रेषा तमोमयी राहुरिवार्कबिम्बम् ॥ १४१ ॥ तिरोभूते स्वा
न्यमलतरतेजोवति पुमाननात्मानं मोहादहमिति शरीरं
यति । ततः कामक्रोधप्रभृतिभिरमुं बन्धनगुणैः परं विक्षे
स्त्या रजस उरुशक्तिर्व्यथयति ॥ १४२ ॥ महामोहग्राहग्रस
लितात्मावगमनो धियो नानावस्थां स्वयमभिनयंस्तद्गुणत
अपारे संसारे विषयविषपूरे जलनिधौ निमज्ज्योन्मज्ज्यायं भ्र
ति कुमतिः कुत्सितगतिः ॥ १४३ ॥ भानुप्रभासंजनिताभ्र
ङ्क्तिर्भानुं तिरोधाय विजृम्भते यथा । आत्मोदिताहंकृति
तत्त्वं तथा तिरोधाय विजृम्भते स्वयम् ॥ १४४ ॥ कव
दिननाथे दुर्दिने सान्द्रमेघैर्व्यथयति हिमझंझावायुरुग्रो

तान् । अविरततमसात्मन्यावृते मूढबुद्धिं क्षपयति बहुदुःखै-
स्तीव्रविक्षेपशक्तिः ॥ १४५ ॥ एताभ्यामेव शक्तिभ्यां बन्धः
पुंसः समागतः । याभ्यां विमोहितो देहं मत्वात्मानं भवत्य-
यम् ॥ १४६ ॥ बीजं संसृतिभूमिजस्य तु तमो देहात्मधीरङ्कुरो
रागः पल्लवमम्बुकर्म तु वपुः स्कन्धोऽसवः शाखिकाः । अग्रा-
णीन्द्रियसंहतिश्च विषयाः पुष्पाणि दुःखं फलं नानाकर्मसमुद्भवं
बहुविधं भोक्तात्र जीवः खगः ॥ १४७ ॥ अज्ञानमूलोऽयम-
नात्मबन्धो नैसर्गिकोऽनादिरनन्त ईरितः । जन्माप्ययं व्याधि-
जरादिदुःखप्रवाहपातं जनयत्यमुष्य ॥ १४८ ॥ नास्त्रैर्न शस्त्रै-
रनिलेन वह्निना छेत्तुं न शक्यो न च कर्मकोटिभिः । विवेक-
विज्ञानमहासिना विना धातुः प्रसादेन सितेन मञ्जुना॥१४९॥
श्रुतिप्रमाणैकमतेः स्वधर्मनिष्ठा तयैवात्मविशुद्धिरस्याः । विशु-
द्धबुद्धेः परमात्मवेदनं तेनैव संसारसमूलनाशः ॥ १५० ॥
कोशैरन्नमयाद्यैः पञ्चभिरात्मा न संवृतो भाति । निजशक्ति-
समुत्पन्नैः शैवलपटलैरिवाम्बु वापीस्थम् ॥ १५१ ॥ तच्छैवा-
लापनये सम्यक् सलिलं प्रतीयते शुद्धम् । तृष्णासंतापहरं सद्यः
सौख्यप्रदं परं पुंसः ॥ १५२ ॥ पञ्चानामपि कोशानामपवादे
विभात्ययं शुद्धः । नित्यानन्दैकरसः प्रत्यग्रूपः परं स्वयंज्योतिः
॥ १५३ ॥ आत्मानात्मविवेकः कर्तव्यो बन्धमुक्तये विदुषा ।
तेनैवानन्दी भवति स्वं विज्ञायैव सच्चिदानन्दम् ॥ १५४ ॥
मुञ्जादिषीकामिव दृश्यवर्गात्प्रत्यञ्चमात्मानमसङ्गमक्रियम् । वि-
विच्य तत्र प्रविलाप्य सर्वं तदात्मना तिष्ठति यः स मुक्तः
। १५५ ॥ देहोऽयमन्नभवनोऽन्नमयस्तु कोशश्चान्नेन जीवति
विनश्यति तद्विहीनः । त्वक्चर्ममांसरुधिरास्थिपुरीपराशिर्नायं

स्वयं भावेतुमर्हति नित्यशुद्धः ॥ १५६ ॥ पूर्वं जनेरपि मृते
नायमस्ति जातक्षणः क्षणगुणोऽनियतस्वभावः । नैको ज
घटवत्परिदृश्यमानः स्वात्मा कथं भवति भावविकार
॥ १५७ ॥ पाणिपादादिमान्देहो नात्मा व्यङ्गेऽपि
नात् । तत्तच्छक्तेरनाशाच्च न नियम्यो नियामकः ॥ १५८
देहतद्धर्मतत्कर्मतदवस्थादिसाक्षिणः । स्वत एव स्वतः सि
तद्वैलक्षण्यमात्मनः ॥ १५९ ॥ शल्यराशिर्मांसलिप्तो मलपू
ऽतिकश्मलः । कथं भवेदयं वेत्ता स्वयमेतद्विलक्षणः ॥ १६०
त्वङ्मांसमेदोऽस्थिपुरीषराशावहंमतिं मूढजनः करोति । वि
क्षणं वेत्ति विचारशीलो निजस्वरूपं परमार्थभूतम् ॥ १६१
देहोऽहमित्येव जडस्य बुद्धिर्देहे च जीवे विदुषस्त्वहंधीः । वि
कविज्ञानवतो महात्मनो ब्रह्माहमित्येव मतिः सदात्म
॥ १६२ ॥ अत्रात्मबुद्धिं त्यज मूढबुद्धे त्वङ्मांसमेदोऽस्थि
पराशौ । सर्वात्मनि ब्रह्मणि निर्विकल्पे कुरुष्व शान्तिं प
भजस्व ॥ १६३ ॥ देहेन्द्रियादावसति भ्रमोदितां विद्वानह
न जहाति यावत् । तावन्न तस्यास्ति विमुक्तिवार्ताप्यस
वेदान्तनयान्तदर्शी ॥ १६४ ॥ छायाशरीरे प्रतिबिम्ब
यत्स्वप्नदेहे हृदि कल्पिताङ्गे । यथात्मबुद्धिस्तव नास्ति का
जीवच्छरीरे च तथैव मास्तु ॥ १६५ ॥ देहात्मधीरेव नृ
मसद्धिया जन्मादिदुःखप्रभवस्य बीजम् । यतस्ततस्त्वं जहि
प्रयत्नात् त्यक्ते तु चित्ते न पुनर्भवाशा ॥ १६६ ॥ कर्मेन्द्रि
पञ्चभिरञ्चितोऽयं प्राणो भवेत्प्राणमयस्तु कोशः । येनात्मवा
न्नमयोऽन्नपूर्णात् प्रवर्ततेऽसौ सकलक्रियासु ॥ १६७ ॥ नै
त्मापि प्राणमयो वायुविकारो गन्ताऽऽगन्ता वायुवदन्तर्बहिरे

यस्मात्किंचित्क्वापि न वेत्तीष्टमनिष्टं स्वं चान्यं वा किंचिन्नित्यं परतन्त्रः ॥ १६८ ॥ ज्ञानेन्द्रियाणि च मनश्च मनोमयः स्यात्कोशो ममाहमिति वस्तुविकल्पहेतुः । संज्ञादिभेदकलनाकलितो बलीयांस्तत्पूर्वकोशमभिपूर्य विजृम्भते यः ॥ १६९ ॥ पञ्चेन्द्रियैः पञ्चभिरेव होतृभिः प्रचीयमानो विषयाज्यधारया। जाज्वल्यमानो बहुवासनेन्धनैर्मनोमयाग्निर्दहति प्रपञ्चम्॥१७० नह्यस्त्यविद्या मनसोऽतिरिक्ता मनो ह्यविद्या भवबन्धहेतुः। तस्मिन्विनष्टे सकलं विनष्टं विजृम्भितेऽस्मिन्सकलं विजृम्भते ॥ १७१ ॥ स्वप्नेऽर्थ शून्ये सृजति स्वशक्त्या भोक्त्रादिविश्वं मन एव सर्वम्। तथैव जाग्रत्यपि नो विशेषस्तत्सर्वमेतन्मनसो विजृम्भणम् ॥ १७२ ॥ सुषुप्तिकाले मनसि प्रलीने नैवास्ति किंचित्सकलप्रसिद्धेः। अतो मनःकल्पित एव पुंसः संसार एतस्य न वस्तुतोऽस्ति ॥ १७३ ॥ वायुनाऽऽनीयते मेघः पुनस्तेनैव नीयते । मनसा कल्प्यते बन्धो मोक्षस्तेनैव कल्प्यते ॥ १७४ ॥ देहादिसर्वविषये परिकल्प्य रागं बध्नाति तेन पुरुषं पशुवद्गुणेन । वैरस्यमत्र विषवत्सुविधाय पश्चादेनं विमोचयति तन्मन एव बन्धात् ॥ १७५ ॥ तस्मान्मनः कारणमस्य जन्तोर्बन्धस्य मोक्षस्य च वा विधाने । बन्धस्य हेतोर्मलिनं रजोगुणैर्मोक्षस्य शुद्धं विरजस्तमस्कम् ॥ १७६ ॥ विवेकवैराग्यगुणातिरेकाच्छुद्धत्वमासाद्य मनो विमुक्त्यै । भवत्यतो बुद्धिमतो मुमुक्षोस्ताभ्यां दृढाभ्यां भवितव्यमग्रे ॥ १७७ ॥ मनो नाम महाव्याघ्रो विषयारण्यभूमिषु । चरत्यत्र न गच्छन्तु साधवो ये मुमुक्षवः ॥ १७८ ॥ मनः प्रसूते विषयानशेषान् स्थूलात्मना सूक्ष्मतया च भोक्तुः । शरीरवर्णाश्रमजातिभेदान् गुणक्रिया-

हेतुफलानि नित्यम् ॥ १७९ ॥ असङ्गचिद्रूपममुं विमोह्य
न्द्रियप्राणगुणैर्निबध्य । अहंममेति भ्रमयत्यजस्रं मनः
त्येषु फलोपभुक्तिषु ॥ १८० ॥ अध्यासदोषात्पुरुषस्य सं
रध्यासबन्धस्त्वमुनैव कल्पितः । रजस्तमोदोषवतो विवे
जन्मादिदुःखस्य निदानमेतत् ॥ १८१ ॥ अतः प्राहु
ऽविद्यां पण्डितास्तत्त्वदर्शिनः । येनैव भ्राम्यते विश्वं वायुन
भ्रमण्डलम् ॥ १८२ ॥ तन्मनःशोधनं कार्यं प्रयत्नेन मुमुक्षु
विशुद्धे सति चैतस्मिन्मुक्तिः करफलायते ॥ १८३ ॥ मो
सक्त्या विषयेषु रागं निर्मूल्य संन्यस्य च सर्वकर्म । सच्छ्र
यः श्रवणादिनिष्ठो रजःस्वभावं स धुनोति बुद्धेः ॥१८४॥
मयो नापि भवेत्परात्मा ह्याद्यन्तवत्त्वात्परिणामिभावात्
खात्मकत्वाद्विषयत्वहेतोर्द्रष्टा हि दृश्यात्मतया न दृष्टः ॥१८
बुद्धिर्बुद्धीन्द्रियैः सार्धं सवृत्तिः कर्तृलक्षणः । विज्ञानमय
स्यात्पुंसः संसारकारणम् ॥ १८६ ॥ अनुव्रजच्चित्प्रतिबिम्ब
क्तिर्विज्ञानसंज्ञः प्रकृतेर्विकारः । ज्ञानक्रियावानहमित्यजस्रं
न्द्रियादिष्वभिमन्यते भृशम् ॥ १८७ ॥ अनादिकालोऽय
स्वभावो जीवः समस्तव्यवहारवोढा । करोति कर्माण्यपि
वासनः पुण्यान्यपुण्यान्यपि तत्फलानि ॥ १८८ ॥ भुङ्क्ते वि
त्रास्वपि योनिषु व्रजन्नायाति निर्यात्यध ऊर्ध्वमेषः । अस्
विज्ञानमयस्य जाग्रत्स्वप्नाद्यवस्थासुखदुःखभोगः ॥ १८९
देहादिनिष्ठाश्रमधर्मकर्मगुणाभिमानं सततं ममेति । विज्ञा
कोशोऽयमतिप्रकाशः प्रकृष्टसान्निध्यवशात्परात्मना ।
भवत्येव उपाधिरस्य यदात्मधीः संसरति भ्रमेण ॥ १९०
योऽयं विज्ञानमयः प्राणेषु हृदि स्फुरत्ययं ज्योतिः । कूट

सन्नात्मा कर्ता भोक्ता भवत्युपाधिस्थः ॥ १९१ ॥ स्वयं परि-
च्छेदमुपेत्य बुद्धेस्तादात्म्यदोषेण परं मृषात्मनः । सर्वात्मकः
सन्नपि वीक्षते स्वयं स्वतः पृथक्त्वेन मृदो घटानिव ॥ १९२ ॥
उपाधिसंबन्धवशात्परात्मा ह्युपाधिधर्माननुभाति तद्गुणः ।
अयोविकारानविकारिवह्निवत् सदैकरूपोऽपि परः स्वभावात्
॥ १९३ ॥ भ्रमेणाप्यन्यथा वास्तु जीवभावः परात्मनः । तदु-
पाधेरनादित्वान्नानादेर्नाश इष्यते ॥ १९४ ॥ अतोऽस्य जीव-
भावोऽपि नित्या भवति संसृतिः । न निवर्तेत तन्मोक्षः कथं
मे श्रीगुरो वद ॥ १९५ ॥ सम्यक् पृष्टं त्वया विद्वन्सावधानेन
तच्छृणु । प्रामाणिकी न भवति भ्रान्त्या मोहितकल्पना १९६
भ्रान्तिं विना त्वसङ्गस्य निष्क्रियस्य निराकृतेः । न घटेतार्थ-
संबन्धो नभसो नीलतादिवत् ॥ १९७ ॥ स्वस्य द्रष्टुर्निर्गुण-
स्याक्रियस्य प्रत्यग्बोधानन्दरूपस्य बुद्धेः । भ्रान्त्या प्राप्तो जीव-
भावो न सत्यो मोहापाये नास्त्यवस्तुस्वभावात् ॥ १९८ ॥
यावद्भ्रान्तिस्तावदेवास्य सत्ता मिथ्याज्ञानोज्जृम्भितस्य प्रमा-
दात् । रज्ज्वां सर्पो भ्रान्तिकालीन एव भ्रान्तेर्नाशे नैव सर्पो-
ऽपि तद्वत् ॥ १९९ ॥ अनादित्वमविद्यायाः कार्यस्यापि तथे-
ष्यते । उत्पन्नायां तु विद्यायामाविद्यकमनाद्यपि ॥ २०० ॥
प्रबोधे स्वप्नवत्सर्वं सहमूलं विनश्यति । अनाद्यपीदं नो नित्यं
प्रागभाव इव स्फुटम् ॥ २०१ ॥ अनादेरपि विध्वंसः प्राग-
भावस्य वीक्षितः । यद्बुद्ध्युपाधिसंबन्धात्परिकल्पितमात्मनि
॥ २०२ ॥ जीवत्वं न ततोऽन्यत्तु स्वरूपेण विलक्षणः । संब-
न्धः स्वात्मनो बुद्ध्या मिथ्याज्ञानपुरस्सरः ॥ २०३ ॥ विनि-
वृत्तिर्भवेत्तस्य सम्यग्ज्ञानेन नान्यथा । ब्रह्मात्मैकत्वविज्ञानं

सम्यग्ज्ञानं श्रुतेर्मतम् ॥ २०४ ॥ तदात्मानात्मनोः सम्यग्वि-
वेकेनैव सिद्ध्यति । ततो विवेकः कर्तव्यः प्रत्यगात्मासदात्मन-
नोः ॥ २०५ ॥ जलं पङ्कवदत्यन्तं पङ्कापाये जलं स्फुटम्
यथा भाति तथात्मापि दोषाभावे स्फुटप्रभः ॥ २०६ ॥ असद-
भिवृत्तौ तु सदात्मना स्फुटं प्रतीतिरेतस्य भवेत्प्रतीचः । स्फु-
निरासः करणीय एव सदात्मनः साध्वहमादिवस्तुनः ॥२०७॥ स्फु-
अतो नायं परात्मा स्याद्विज्ञानमयशब्दभाक् । विकारित्वाज्जि-
त्वाच्च परिच्छिन्नत्वहेतुतः दृश्यत्वाद्व्यभिचारित्वान्नानित्यो घटो
इष्यते ॥ २०८ ॥ आनन्दप्रतिबिम्बचुम्बिततनुर्वृत्तिस्तमस्तथ-
म्भिता स्यादानन्दमयः प्रियादिगुणकः स्वेष्टार्थलाभोदयः । पु-
स्यानुभवे विभाति कृतिनामानन्दरूपः स्वयं भूत्वा नन्दति
साधुतनुभृन्मात्रः प्रयत्नं विना ॥२०९॥ आनन्दमयकोशस्य
सौ स्फूर्तिरुत्कटा । स्वप्नजागरयोरीषद्दिष्टसंदर्शनादिना ॥२१०॥
नैवायमानन्दमयः परात्मा सोपाधिकत्वात्प्रकृतेर्विकारात् ।
र्यत्वहेतोः सुकृतक्रियाया विकारसंघातसमाहितत्वात् ॥२११॥
पञ्चानामपि कोशानां निषेधे युक्तितः श्रुतेः । तन्निषेधाव-
साक्षी बोधरूपोऽवशिष्यते ॥ २१२ ॥ योऽयमात्मा स्वयं-
तिः पञ्चकोशविलक्षणः । अवस्थात्रयसाक्षी सन्निर्विकारो नि-
ञ्जनः ॥ २१३ ॥ सदानन्दः स विज्ञेयः स्वात्मत्वेन विपश्चि-
मिथ्यात्वेन निषिद्धेषु कोशेष्वेतेषु पञ्चसु । सर्वाभावं वि-
किंचिन्न पश्याम्यत्र हे गुरो । विज्ञेयं किमु वस्त्वस्ति स्वा-
नात्मविपश्चिता ॥ २१५ ॥ सत्यमुक्तं त्वया विद्वन्निपुणोऽसि
विचारणे । अहमादिविकारास्ते तदभावोऽयमप्यनु ॥ २१६ ॥
सर्वे येनानुभूयन्ते यः स्वयं नानुभूयते । तमात्मानं वेदि-

र्वविद्धि बुद्ध्या सुसूक्ष्मया ॥ २१७ ॥ तत्साक्षिकं भवेत्तत्तद्यद्य-
द्येनानुभूयते । कस्याप्यननुभूतार्थे साक्षित्वं नोपयुज्यते ॥२१८॥
असौ स्वसाक्षिको भावो यतः स्वेनानुभूयते । अतः परं स्वयं
साक्षात्प्रत्यगात्मा न चेतरः ॥ २१९ ॥ जाग्रत्स्वप्नसुषुप्तिषु
स्फुटतरं योऽसौ समुज्जृम्भते प्रत्यग्रूपतया सदाहमहमित्यन्तः
स्फुरन्नैकधा । नानाकारविकारभागिन इमान्पश्यन्नहंधीमुखा-
न्नित्यानन्दचिदात्मना स्फुरति तं विद्धि स्वमेतं हृदि ॥२२०॥
घटोदके बिम्बितमर्कबिम्बमालोक्य मूढो रविमेव मन्यते ।
तथा चिदाभासमुपाधिसंस्थं भ्रान्त्याहमित्येव जडोऽभिमन्यते
॥ २२१ ॥ घटं जलं तद्गतमर्कबिम्बं विहाय सर्वं विनिरीक्ष्य-
तेऽर्कः । तटस्थ एतत्त्रितयावभासकः स्वयंप्रकाशो विदुषा यथा
यथा ॥ २२२ ॥ देहं धियं चित्प्रतिबिम्बमेव विसृज्य बुद्धौ
निहितं गुहायाम् । द्रष्टारमात्मानमखण्डबोधं सर्वप्रकाशं सद-
सद्विलक्षणम् ॥ २२३ ॥ नित्यं विभुं सर्वगतं सुसूक्ष्ममन्तर्बहिः
शून्यमनन्यमात्मनः । विज्ञाय सम्यङ्निजरूपमेतं पुमान्विपा-
प्मा विरजो विमृत्युः ॥ २२४ ॥ विशोक आनन्दघनो विप-
श्चित् स्वयं कुतश्चिन्न बिभेति कश्चित् । नान्योऽस्ति पन्था भव-
बन्धमुक्तेर्विना स्वतत्त्वावगमं मुमुक्षोः ॥ २२५ ॥ ब्रह्माभिन्न-
त्वविज्ञानं भवमोक्षस्य कारणम् । येनाऽद्वितीयमानन्दं ब्रह्म
संपद्यते बुधैः ॥ २२६ ॥ ब्रह्मभूतस्तु संसृत्यै विद्वान्नावर्तते
पुनः । विज्ञातव्यमतः सम्यग्ब्रह्माभिन्नत्वमात्मनः ॥ २२७ ॥
सत्यं ज्ञानमनन्तं ब्रह्म विशुद्धं परं स्वतःसिद्धम् । नित्यानन्दै-
करसं प्रत्यगभिन्नं निरन्तरं जयति ॥ २२८ ॥ सदिदं परमा-
द्वैतं स्वस्मादन्यस्य वस्तुनोऽभावात् । नह्यन्यदस्ति किंचित्सम्यक्

जगत्यमिथ्या दृष्टान्तः



६१

परमार्थबोधदशायाम् ॥ २२९ ॥ यदिदं सकलं विश्वं न
रूपं प्रतीतमज्ञानात् । तत्सर्वं ब्रह्मैव प्रत्यस्ताशेषभावना
॥ २३० ॥ मृत्कार्यभूतोऽपि मृदो न भिन्नः कुम्भोऽस्ति
तु मृत्स्वरूपात् । न कुम्भरूपं पृथगस्ति कुम्भः कुतो
कल्पितनाममात्रः ॥ २३१ ॥ केनाऽपि मृद्भिन्नतया
घटस्य संदर्शयितुं न शक्यते । अतो घटः कल्पित एव
न्मृदेव सत्यं परमार्थभूतम् ॥ २३२ ॥ सद्ब्रह्मकार्यं
सदैव तन्मात्रमेतन्न ततोऽन्यदस्ति । अस्तीति यो वक्ति न
मोहो विनिर्गतो निद्रितवत्प्रजल्पः ॥ २३३ ॥ ब्रह्मैवेदं
मित्येव वाणी श्रौती ब्रूतेऽथर्वनिष्ठा वरिष्ठा । तस्मादेतद्ब्र
हि विश्वं नाधिष्ठानाद्भिन्नतारोपितस्य ॥ २३४ ॥ सत्यं
स्याज्जगदेतदात्मना न तत्त्वहानिर्निगमाप्रमाणता । असत्
दित्वमपीशितुः स्यान्नैतत्त्रयं साधु हितं महात्मनाम् ॥ २
ईश्वरो वस्तुतत्त्वज्ञो न चाहं तेष्ववस्थितः । नच मत्स्थानि
नीत्येवमेव व्यचीक्लृपत् ॥२३६॥ यदि सत्यं भवेद्विश्वं सुषु
पलभ्यताम् । तन्नोपलभ्यते किंचिदतोऽसत्स्वप्नवन्मृषा ॥२
अतः पृथङ्नास्ति जगत्परात्मनः पृथक्प्रतीतिस्तु मृषा
दिवत् । आरोपितस्यास्ति किमर्थवत्ताऽधिष्ठानमाभाति
भ्रमेण ॥ २३८ ॥ भ्रान्तस्य यद्यद्भ्रमतः प्रतीतं ब्रह्मैव त
जतं हि शुक्तिः । इदंतया ब्रह्म सदैव रूप्यते त्वारोपितं ब्र
नाममात्रम् ॥ २३९ ॥ अतः परं ब्रह्म सदद्वितीयं विशु
ज्ञानघनं निरञ्जनम् । प्रशान्तमाद्यन्तविहीनमक्रियं निर
नन्दरसस्वरूपम् ॥ २४० ॥ निरस्तमायाकृतसर्वभेदं नित्यं
निष्कलमप्रमेयम् । अरूपमव्यक्तमनाख्यमव्ययं ज्योतिः

किंचिदिदं चकास्ति ॥ २४१ ॥ ज्ञातृज्ञेयज्ञानशून्यमनन्तं निर्विकल्पकम् । केवलाखण्डचिन्मात्रं परं तत्त्वं विदुर्बुधाः॥२४२॥ अहेयमनुपादेयं मनोवाचामगोचरम् । अप्रमेयमनाद्यन्तं ब्रह्म पूर्णमहं महः ॥ २४३ ॥ तत्त्वंपदाभ्यामभिधीयमानयोर्ब्रह्मात्मनोः शोधितयोर्यदीत्थम् । श्रुत्या तयोस्तत्त्वमसीति सम्यगेकत्वमेव प्रतिपाद्यते मुहुः ॥ २४४ ॥ ऐक्यं तयोर्लक्षितयोर्न वाच्ययोर्निगद्यतेऽन्योन्यविरुद्धधर्मिणोः । खद्योतभान्वोरिव राजभृत्ययोः कूपाम्बुराश्योः परमाणुमेर्वोः ॥ २४५ ॥ तयोर्विरोधोऽयमुपाधिकल्पितो न वास्तवः कश्चिदुपाधिरेषः । ईशस्य माया महदादिकारणं जीवस्य कार्यं शृणु पञ्चकोशम् ॥२४६॥ एतावुपाधी परजीवयोस्तयोः सम्यङ्निरासेन परो न जीवः । राज्यं नरेन्द्रस्य भटस्य खेटकस्तयोरपोहेन भटो न राजा ॥२४७॥ अथात आदेश इति श्रुतिः स्वयं निषेधति ब्रह्मणि कल्पितं द्वयम् । श्रुतिप्रमाणानुगृहीतबोधात्तयोर्निरासः करणीय एवम् ॥ २४८ ॥ नेदं नेदं कल्पितत्वान्न सत्यं रज्जुदृष्टव्यालवत्स्वप्नवच्च । इत्थं दृश्यं साधु युक्त्या व्यपोह्य ज्ञेयः पश्चादेकभावस्तयोर्यः ॥ २४९ ॥ ततस्तु तौ लक्षणया सुलक्ष्यौ तयोरखण्डैकरसत्वसिद्धये । नालं जहत्या न तथाऽजहत्या किंतूभयार्थात्मिकयैव भाव्यम् ॥ २५० ॥ स देवदत्तोऽयमितीह चैकता विरुद्धधर्मांशमपास्य कथ्यते । यथा तथा तत्त्वमसीति वाक्ये विरुद्धधर्मानुभयत्र हित्वा ॥ २५१ ॥ संलक्ष्य चिन्मात्रतया सदात्मनोरखण्डभावः परिचीयते बुधैः । एवं महावाक्यशतेन कथ्यते ब्रह्मात्मनोरैक्यमखण्डभावः ॥ २५२ ॥ अस्थूलमित्येतदसन्निरस्य सिद्धं स्वतो व्योमवदप्रतर्क्यम् । अतो मृषामात्र-

मिदं प्रतीतं जहीहि यत्स्वात्मतया गृहीतम् । ब्रह्माहमि विशुद्धबुद्ध्या विद्धि स्वमात्मानमखण्डबोधम् ॥२५४॥ मृत् सकलं घटादि सततं मृन्मात्रमेवाहितं तद्वत्सज्जनितं सद कमिदं सन्मात्रमेवाखिलम् । यस्माचास्ति सतः परं किमपि त्वं स आत्मा स्वयं तस्मात्तत्त्वमसि प्रशान्तममलं ब्रह्माद्वयं रम् ॥ २५५ ॥ निद्राकल्पितदेशकालविषयज्ञात्रादिसर्वं मिथ्या तद्वदिहापि जाग्रति जगत्स्वाज्ञानकार्यत्वतः । यस्मा मिदं शरीरकरणप्राणाहमाद्यप्यसत् तस्मात्तत्त्वमसि प्रशान्त ब्रह्माद्वयं यत्परम् ॥ २५६ ॥ जातिनीतिकुलगोत्रदूरगं ना पगुणदोषवर्जितम् । देशकालविषयातिवर्ति यद्ब्रह्म तत्त्व भावयात्मनि ॥ २५७ ॥ यत्परं सकलरागगोचरं गोचरं लबोधचक्षुषः । शुद्धचिद्घनमनादिवस्तु यद्ब्रह्म तत्त्वमसि यात्मनि ॥ २५८ ॥ षड्भिरूर्मिभिरयोगियोगिहृद्भावि करणैर्विभावितम् । बुद्ध्यवेद्यमनवेद्यमस्ति यद्ब्रह्म तत्त्वमसि यात्मनि ॥ २५९ ॥ भ्रान्तिकल्पितजगत्कलाश्रयं स्वाश्र सदसद्विलक्षणम् । निष्कलं निरुपमानवद्धि यद्ब्रह्म तत्त्व भावयात्मनि ॥ २६० ॥ जन्मवृद्धिपरिणत्यपक्षयव्याधि नविहीनमव्ययम् । विश्वसृष्ट्यवनघातकारणं ब्रह्म तत्त्व भावयात्मनि ॥ २६१ ॥ अस्तभेदमनपास्तलक्षणं निस्तरङ्ग राशिनिश्चलम् । नित्यमुक्तमविभक्तमूर्ति यद्ब्रह्म तत्त्वमसि यात्मनि ॥ २६२ ॥ एकमेव सदनेककारणं कारणान्तर स्वकारणम् । कार्यकारणविलक्षणं स्वयं ब्रह्म तत्त्वमसि भाव त्मनि ॥ २६३ ॥ निर्विकल्पकमनल्पमक्षरं यत्क्षराक्षरवि परम् । नित्यमव्ययसुखं निरञ्जनं ब्रह्म तत्त्वमसि भावया

॥ २६४ ॥ यद्विभाति सदनेकधा भ्रमान्नामरूपगुणविक्रिया-
त्मना । हेमवत्स्वयमविक्रियं सदा ब्रह्म तत्त्वमसि भावयात्मनि
॥ २६५ ॥ यच्चकास्त्यनपरं परात्परं प्रत्यगेकरसमात्मलक्षणम् ।
सत्यचित्सुखमनन्तमव्ययं ब्रह्म तत्त्वमसि भावयात्मनि २६६
उक्तमर्थमिममात्मनि स्वयं भावयेत्प्रथितयुक्तिभिर्धिया । संश-
यादिरहितं कराम्बुवत्तेन तत्त्वनिगमो भविष्यति ॥ २६७ ॥
संबोधमात्रं परिशुद्धतत्त्वं विज्ञाय सङ्घे नृपवच्च सैन्ये । तदा-
श्रयः स्वात्मनि सर्वदा स्थितो विलापय ब्रह्मणि विश्वजातम्
। २६८ ॥ बुद्धौ गुहायां सदसद्विलक्षणं ब्रह्मास्ति सत्यं परम-
द्वितीयम् । तदात्मना योऽत्र वसेद्गुहायां पुनर्न तस्याङ्ग गुहा-
प्रवेशः ॥ २६९ ॥ ज्ञाते वस्तुन्यपि बलवती वासनानादिरेषा
कर्ता भोक्ताप्यहमिति दृढा यास्य संसारहेतुः । प्रत्यग्दृष्ट्यात्मनि
निवसता सापनेया प्रयत्नान्मुक्तिं प्राहुस्तदिह मुनयो वासना-
तानवं यत् ॥ २७० ॥ अहं ममेति यो भावो देहाक्ष्यादावना-
त्मनि । अध्यासोऽयं निरस्तव्यो विदुषा स्वात्मनिष्ठया॥२७१॥
ज्ञात्वा स्वं प्रत्यगात्मानं बुद्धितद्वृत्तिसाक्षिणम् । सोऽहमित्येव
सद्वृत्त्यानात्मन्यात्ममतिं जहि ॥२७२॥ लोकानुवर्तनं त्यक्त्वा
त्यक्त्वा देहानुवर्तनम् । शास्त्रानुवर्तनं त्यक्त्वा स्वाध्यासापनयं
कुरु ॥ २७३ ॥ लोकवासनया जन्तोः शास्त्रवासनयापि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ॥ २७४ ॥ संसारकारा-
गृहमोक्षमिच्छोरयोमयं पादनिबन्धशृङ्खलम् । वदन्ति तज्ज्ञाः
पटुवासनात्रयं योऽस्माद्विमुक्तः समुपैति मुक्तिम् ॥ २७५ ॥
जलादिसंपर्कवशात्प्रभूतदुर्गन्धधूतागुरुदिव्यवासना । संघर्ष-
णेनैव विभाति सम्यग्विधूयमाने सति बाह्यगन्धे ॥ २७६ ॥

अन्तःश्रितानन्तदुरन्तवासनाधूलीविलिप्ता परमात्मवासना
प्रज्ञातिसंघर्षणतो विशुद्धा प्रतीयते चन्दनगन्धवत्स्फुटम् ॥
यथा यथा प्रत्यगवस्थितं मनस्तथा तथा मुञ्चति बाह्यवासनाः
निःशेषमोक्षे सति वासनानामात्मानुभूतिः प्रतिबन्ध
॥ २७८ ॥ स्वात्मन्येव सदा स्थित्वा मनो नश्यति योगिनः
वासनानां क्षयश्चातः स्वाध्यासापनयं कुरु ॥ २७९ ॥
द्वाभ्यां रजः सत्त्वात्सत्त्वं शुद्धेन नश्यति । तस्मात्सत्त्वम
स्वाध्यासापनयं कुरु ॥२८०॥ प्रारब्धं पुष्यति वपुरिति नि
त्य निश्चलः । धैर्यमालम्ब्य यत्नेन स्वाध्यासापनयं कुरु ॥२
नाहं जीवः परंब्रह्मेत्येतद्व्यावृत्तिपूर्वकम् । वासनावेगतः
स्वाध्यासापनयं कुरु ॥ २८२ ॥ श्रुत्या युक्त्या स्वानु
ज्ञात्वा सार्वात्म्यमात्मनः । क्वचिदाभासतः प्राप्तस्वाध्या
नयं कुरु ॥ २८३ ॥ अनादानविसर्गाभ्यामीपन्नास्ति
मुनेः । तदेकनिष्ठया नित्यं स्वाध्यासापनयं कुरु ॥ २८
तत्त्वमस्यादिवाक्योत्थब्रह्मात्मैकत्वबोधतः । ब्रह्मण्यात्मत्व
दार्ढ्याय स्वाध्यासापनयं कुरु ॥ २८५ ॥ अहंभावस्य देहे
न्निश्शेषविलयावधि । सावधानेन युक्तात्मा स्वाध्यासाप
कुरु ॥ २८६ ॥ प्रतीतिर्जीवजगतोः स्वप्नवद्भाति याव
तावन्निरन्तरं विद्वन्स्वाध्यासापनयं कुरु ॥ २८७ ॥ नि
लोकवार्तायाः शब्दादेरपि विस्मृतेः । क्वचिन्नावसरं दत्वा
न्तयात्मानमात्मनि ॥ २८८ ॥ मातापित्रोर्मलोद्भूतं मल
मयं वपुः । त्यक्त्वा चाण्डालवद्दूरं ब्रह्मीभूय कृती भव॥२८
स्वप्रकाशमधिष्ठानं स्वयंभूय सदात्मनि । ब्रह्माण्डमपि पिण्ड
त्यज्यतां मलभाण्डवत् ॥ २९० ॥ घटाकाशं महाकाश

त्मानं परात्मनि । विलाप्याखण्डभावेन तूष्णींभव महामुने
॥ २९१ ॥ चिदात्मनि सदानन्दे देहारूढामहंधियम् । निवेश्य
लिङ्गमुत्सृज्य केवलो भव सर्वदा ॥ २९२ ॥ यत्रैप जगदा-
भासो दर्पणान्तःपुरं यथा । तद्ब्रह्माहमिति ज्ञात्वा कृतकृत्यो
भविष्यसि ॥ २९३ ॥ यत्सत्यभूतं निजरूपमाद्यं चिदद्वयान-
न्दमरूपमक्रियम् । तदेत्य मिथ्यावपुरुत्सृजेत शैलूपवद्वेपमुपा-
त्तमात्मनः ॥ २९४ ॥ सर्वात्मना दृश्यमिदं मृपैव नैवाहमर्थः
क्षणिकत्वदर्शनात् । जानाम्यहं सर्वमिदं प्रतीतिः कुतोऽहमादेः
क्षणिकस्य सिद्ध्येत् ॥ २९५ ॥ अहंपदार्थस्त्वहमादिसाक्षी नित्यं
सुपुप्तावपि भावदर्शनात् । ब्रूते ह्यजो नित्य इति श्रुतिः स्वयं
तत्प्रत्यगात्मा सदसद्विलक्षणः ॥ २९६ ॥ विकारिणां सर्ववि-
कारवेत्ता नित्याविकारो भवितुं समर्हति । मनोरथस्वप्नसुपु-
प्तिपु स्फुटं पुनःपुनर्दृष्टमसत्त्वमेतयोः ॥ २९७ ॥ अतोऽभिमानं
त्यज मांसपिण्डे पिण्डाभिमानिन्यपि बुद्धिकल्पिते । कालत्रया-
बाध्यमखण्डबोधं ज्ञात्वा स्वमात्मानमुपैहि शान्तिम् ॥ २९८ ॥
त्यजाभिमानं कुलगोत्रनामरूपाश्रमेष्वार्द्रशवाश्रितेपु । लिङ्गस्य
धर्मानपि कर्तृतादींस्त्यक्त्वा भवाखण्डसुखस्वरूपः ॥ २९९ ॥
सन्त्यन्ये प्रतिबन्धाः पुंसः संसारहेतवो दृष्टाः । तेपामेवं मूलं
प्रथमविकारो भवत्यहंकारः ॥ ३०० ॥ यावत्स्यात्स्वस्य संब-
न्धोऽहंकारेण दुरात्मना । तावन्न लेशमात्रापि मुक्तिवार्ता विल-
क्षणा ॥ ३०१ ॥ अहंकारग्रहान्मुक्तः स्वरूपमुपपद्यते । चन्द्रव-
द्विमलः पूर्णः सदानन्दः स्वयंप्रभः ॥ ३०२ ॥ यो वा पुरे
सोऽहमिति प्रतीतो बुद्ध्या प्रक्लृप्तस्तमसातिमूढया । तस्यैव निः-
शेपतया विनाशे ब्रह्मात्मभावः प्रतिबन्धशून्यः ॥ ३०३ ॥

ब्रह्मानन्दनिधिर्महाबलवताहंकारघोराहिना संवेष्ट्यात्मनि र
ते गुणमयैश्चण्डैस्त्रिभिर्मस्तकैः । विज्ञानाख्यमहासिना श्रुति
विच्छिद्य शीर्षत्रयं निर्मूल्याहिमिमं निधिं सुखकरं धीरो
भोक्तुं क्षमः ॥ ३०४ ॥ यावद्वा यत्किंचिद्विषदोषस्फूर्ति
चेद्देहे । कथमारोग्याय भवेत्तद्वदहंताऽपि योगिनो मुक्त्यै ॥३
अहमोऽत्यन्तनिवृत्त्या तत्कृतनानाविकल्पसंहृत्या । प्रत्य
विवेकादिदमहमस्मीति विन्दते तत्त्वम् ॥ ३०६ ॥ अहं
कर्तर्यहमिति मतिं मुञ्च सहसा विकारात्मन्यात्मप्रतिफ
स्वस्थितिमुपि । यदध्यासात्प्राप्ता जनिमृतिजरादुःखबहुला
चश्चिन्मूर्तेस्तव सुखतनोः संसृतिरियम् ॥ ३०७ ॥ सदैक
चिदात्मनो विभोरानन्दमूर्तेरनवद्यकीर्तेः । नैवान्यथा
विकारिणस्ते विनाहमध्यासममुष्य संसृतिः ॥ ३०८ ॥
दहंकारमिमं स्वशत्रुं भोक्तुर्गले कण्टकवत्प्रतीतम् । वि
विज्ञानमहासिना स्फुटं भुङ्क्ष्वात्मसाम्राज्यसुखं यथेष्टम् ॥३
ततोऽहमादेर्विनिवर्त्य वृत्तिं संत्यक्तरागः परमार्थलाभा
तूष्णीं समास्स्वात्मसुखानुभूत्या पूर्णात्मना ब्रह्मणि निर्वि
॥ ३१० ॥ समूलकृत्तोऽपि महानहं पुनर्व्युल्लेखितः स्या
चेतसा क्षणम् । संजीव्य विक्षेपशतं करोति नभस्वता प्रा
वारिदो यथा ॥ ३११ ॥ निगृह्य शत्रोरहमोऽवकाशः क्व
देयो विषयानुचिन्तया । स एव संजीवनहेतुरस्य प्रक्षीणज
रतरोरिवाम्बु ॥ ३१२ ॥ देहात्मना संस्थित एव कामी वि
क्षणः कामयिता कथं स्यात् । अतोऽर्थसन्धानपरत्वमेव भे
सक्त्या भवबन्धहेतुः ॥ ३१३ ॥ कार्यप्रवर्धनाद्बीजप्रवृद्धिः
दृश्यते । कार्यनाशाद्बीजनाशस्तस्माद्बीजं निरोधयेत् ॥ ३१

वासनावृद्धितः कार्यं कार्यवृद्ध्या च वासना । वर्धते सर्वथा पुंसः संसारो न निवर्तते ॥ ३१५ ॥ संसारबन्धविच्छित्त्यै तद्द्वयं प्रदहेद्यतिः । वासनावृद्धिरेताभ्यां चिन्तया क्रियया बहिः ॥ ३१६ ॥ ताभ्यां प्रवर्धमाना सा सूते संसृतिमात्मनः। त्रयाणां च क्षयोपायाः सर्वावस्थासु सर्वदा ॥ ३१७ ॥ सर्वत्र सर्वदा सर्वं ब्रह्ममात्रावलोकनैः । सद्भाववासनादार्ढ्यात्तत्त्रयं लयमश्नुते ॥ ३१८ ॥ क्रियानाशे भवेच्चिन्ता नाशोऽस्माद्वासना-क्षयः । वासनाप्रक्षयो मोक्षः सा जीवन्मुक्तिरिष्यते ॥ ३१९ ॥ सद्वासनास्फूर्तिविजृम्भणे सत्यसौ विलीनाप्यहमादिवासना । अतिप्रकृष्टाप्यरुणप्रभायां विलीयते साधु यथा तमिस्रा ॥३२०॥ तमस्तमःकार्यमनर्थजालं न दृश्यते सत्युदिते दिनेशे । तथा-ऽद्वयानन्दरसानुभूतौ नैवास्ति बन्धो न च दुःखगन्धः ॥३२१॥ दृश्यं प्रतीतं प्रविलापयन्सन् सन्मात्रमानन्दघनं विभावयन् । समाहितः सन्बहिरन्तरं वा कालं नयेथाः सति कर्मबन्धे ॥ ३२२ ॥ प्रमादो ब्रह्मनिष्ठायां न कर्तव्यः कदाचन । प्रमादो मृत्युरित्याह भगवान्ब्रह्मणः सुतः ॥ ३२३ ॥ न प्रमादादनर्थो-ऽन्यो ज्ञानिनः स्वस्वरूपतः । ततो मोहस्ततोऽहंधीस्ततो बन्ध-स्ततो व्यथा ॥ ३२४ ॥ विषयाभिमुखं दृष्ट्वा विद्वांसमपि विस्मृतिः । विक्षेपयति धीदोषैर्योषा जारमिव प्रियम् ॥३२५॥ यथापकृष्टं शैवालं क्षणमात्रं न तिष्ठति । आवृणोति तथा माया प्राज्ञं वापि पराङ्मुखम् ॥ ३२६ ॥ लक्ष्यच्युतं चेद्यदि चित्तमीषद्बहिर्मुखं संनिपतेत्ततस्ततः । प्रमादतः प्रच्युतकेलि-कन्दुकः सोपानपङ्क्तौ पतितो यथा तथा ॥ ३२७ ॥ विषये-ष्वाविशच्चेतः संकल्पयति तद्गुणान् । सम्यक् संकल्पनात्कामः

कामात्पुंसः प्रवर्तनम् ॥ ३२८ ॥ अतः प्रमादान्न परोऽन्त
मृत्युर्विवेकिनो ब्रह्मविदः समाधौ । समाहितः सिद्धिमुक्त
सम्यक् समाहितात्मा भव सावधानः ॥ ३२९ ॥ ततः
पथिभ्रंशो विभ्रष्टस्तु पतत्यधः । पतितस्य विना नाशं पुनस्ति
रोह ईक्ष्यते ॥ ३३० ॥ संकल्पं वर्जयेत्तस्मात्सर्वानर्थस्य प्रदा
णम् । जीवतो यस्य कैवल्यं विदेहे स च केवलः ॥ यत्तिष्ठ
त्पश्यतो भेदं भयं ब्रूते यजुःश्रुतिः ॥ ३३१ ॥ यदा
वापि विपश्चिदेष ब्रह्मण्यनन्तेऽप्यणुमात्रभेदम् । पश्यत्यथ
भयं तदेव यद्वीक्षितं भिन्नतया प्रमादात् ॥ ३३२ ॥ श्रुतिश्च
तिन्यायशतैर्निषिद्धे दृश्येऽत्र यः स्वात्ममतिं करोति । श्रुति
दुःखोपरि दुःखजातं निषिद्धकर्ता स मलिम्लुचो यथा ॥
सत्याभिसन्धानरतो विमुक्तो महत्त्वमात्मीयमुपैति नि
मिथ्याभिसंधानरतस्तु नश्येद्दृष्टं तदेतद्यदचौरचौरयोः॥
यतिरसदनुसन्धिं बन्धहेतुं विहाय स्वयमयमहमस्मीत्यात्म
तिष्ठेत् । सुखयति ननु निष्ठा ब्रह्मणि स्वानुभूत्या हरति
विद्याकार्यदुःखं प्रतीतम् ॥ ३३५ ॥ बाह्यानुसन्धिः प
यत्फलं दुर्वासनामेव ततस्ततोऽधिकाम् । ज्ञात्वा विवेकैः
हृत्य बाह्यं स्वात्मानुसन्धिं विदधीत नित्यम् ॥ ३३६ ॥
निरुद्धे मनसः प्रसन्नता मनःप्रसादे परमात्मदर्शनम् ।
न्सुदृष्टे भवबन्धनाशो बहिर्निरोधः पदवी विमुक्तेः ॥ ३
कः पण्डितः सन्सदसद्विवेकी श्रुतिप्रमाणः परमार्थदर्शी
नन्हि कुर्यादसतोऽवलम्बं स्वपातहेतोः शिशुवन्मुमुक्षुः ॥
देहादिसंसक्तिमतो न मुक्तिर्मुक्तस्य देहाद्यभिमत्यभावः
नो जागरणं न जाग्रतः स्वप्नस्तयोर्भिन्नगुणाश्रयत्वात् ॥

न्तर्बहिः स्वं स्थिरजङ्गमेषु ज्ञात्वात्मनाधारतया विलोक्य ।
क्ताखिलोपाधिरखण्डरूपः पूर्णात्मना यः स्थित एष मुक्तः
॥ ३४० ॥ सर्वात्मना बन्धविमुक्तिहेतुः सर्वात्मभावान्न परो-
स्ति कश्चित् । दृश्याग्रहे सत्युपपद्यतेऽसौ सर्वात्मभावोऽस्य
दात्मनिष्ठया ॥३४१॥ दृश्यस्याग्रहणं कथं तु घटते देहात्मना
तिष्ठतो बाह्यार्थानुभवप्रसक्तमनसस्तत्तत्क्रियां कुर्वतः । संन्य-
ताखिलधर्मकर्मविषयैर्नित्यात्मनिष्ठापरैस्तत्त्वज्ञैः करणीयमा-
मनि सदानन्देच्छुभिर्यत्नतः ॥ ३४२ ॥ सर्वात्मसिद्धये भिक्षोः
तश्रवणकर्मणः । समाधिं विदधात्येषा शान्तो दान्त इति
श्रुतिः ॥ ३४३ ॥ आरूढशक्तेरहमो विनाशः कर्तुं न शक्यः
हसापि पण्डितैः । ये निर्विकल्पाख्यसमाधिनिश्चलास्तानन्त-
नन्तभवा हि वासनाः ॥ ३४४॥ अहंबुद्ध्यैव मोहिन्या योज-
त्वाऽऽवृतेर्बलात् । विक्षेपशक्तिः पुरुषं विक्षेपयति तद्गुणैः
३४५॥ विक्षेपशक्तिविजयो विषमो विधातुं निःशेषमावरण-
क्तिनिवृत्त्यभावे । दृग्दृश्ययोः स्फुटपयोजलवद्विभागे नश्ये-
दावरणमात्मनि च स्वभावात् ॥ ३४६ ॥ निःसंशयेन भवति
तिबन्धशून्यो विक्षेपणं नहि तदा यदि चेन्मृषार्थे। सम्यग्विवेकः
फुटबोधजन्यो विभज्यदृग्दृश्यपदार्थतत्त्वम् । छिनत्ति मायाकृ-
मोहबन्धं यस्माद्विमुक्तस्य पुनर्न संसृतिः ॥ ३४७ ॥ परावरै-
त्वविवेकवह्निर्दहत्यविद्यागहनं ह्यशेषम् । किं स्यात्पुनः संस-
रस्य बीजमद्वैतभावं समुपेयुषोऽस्य ॥ ३४८ ॥ आवरणस्य
वृत्तिर्भवति हि सम्यक्पदार्थदर्शनतः । मिथ्याज्ञानविनाश-
द्विक्षेपजनितदुःखनिवृत्तिः ॥३४९॥ एतत्त्रितयं दृष्टं सम्यग्र-
स्वरूपविज्ञानात् । तस्माद्वस्तु सतत्त्वं ज्ञातव्यं बन्धमुक्तये

विदुषा ॥ ३५० ॥ अयोग्नियोगादिव सत्समन्वयान्मात्र
पेण विजृम्भते धीः । तत्कार्यमेतद्द्वितयं यतो मृषा दृ
स्वप्नमनोरथेषु ॥ ३५१ ॥ ततो विकाराः प्रकृतेरहंमुखा
वसाना विषयाश्च सर्वे । क्षणेऽन्यथा भावितया ह्यमीषा
मात्मा तु कदापि नान्यथा ॥ ३५२ ॥ नित्याद्वयाखण्
करूपो बुद्ध्यादिसाक्षी सदसद्विलक्षणः । अहंपदप्रत्ययलक्षि
प्रत्यक्सदानन्दघनः परात्मा ॥ ३५३ ॥ इत्थं विपश्चि
द्विभज्य निश्चित्य तत्त्वं निजबोधदृष्ट्या । ज्ञात्वा स्वमा
खण्डबोधं तेभ्यो विमुक्तः स्वयमेव शाम्यति ॥ ३५४ ॥
नहृदयग्रन्थेर्निःशेषविलयस्तदा । समाधिना विकल्पेन
द्वैतात्मदर्शनम् ॥ ३५५ ॥ त्वमहमिदमितीयं कल्पना
दोषात् प्रभवति परमात्मन्यद्वये निर्विशेषे । प्रविलसति स
वस्य सर्वो विकल्पो विलयनमुपगच्छेद्वस्तुतत्त्वावधृत्या ॥
शान्तो दान्तः परमुपरतः क्षान्तियुक्तः समाधिं कुर्वन्नि
यति यतिः स्वस्य सर्वात्मभावम् । तेनाविद्यातिमिरजनि
दग्ध्वा विकल्पान् ब्रह्माकृत्या निवसति सुखं निष्क्रियो
कल्पः ॥ ३५७ ॥ समाहिता ये प्रविलाप्य बाह्यं श्रोत्र
तः स्वमहं चिदात्मनि । त एव मुक्ता भवपाशबन्धैर्ना
पारोक्ष्यकथाभिधायिनः ॥ ३५८ ॥ उपाधिभेदा
भिद्यते चोपाध्यपोहे स्वयमेव केवलः । तस्मादुपाधे
विद्वान् वसेत्सदा कल्पसमाधिनिष्ठया ॥ ३५९ ॥ सति
नरो याति सद्भावं ह्येकनिष्ठया । कीटको भ्रमरं ध्याय
त्वाय कल्पते ॥ ३६० ॥ क्रियान्तरासक्तिमपास्य
ध्यायन्नलित्वं ह्यलिभावमृच्छति । तथैव योगी परमा

ध्यात्वा समायाति तदेकनिष्ठया ॥ ३६१ ॥ अतीव सूक्ष्मं पर-
मात्मतत्त्वं न स्थूलदृष्ट्या प्रतिपत्तुमर्हति । समाधिनात्यन्तसु-
सूक्ष्मवृत्त्या ज्ञातव्यमार्यैरतिशुद्धबुद्धिभिः ॥ ३६२ ॥ यथा
सुवर्णं पुटपाकशोधितं त्यक्त्वा मलं स्वात्मगुणं समृच्छति ।
तथा मनः सत्त्वरजस्तमोमलं ध्यानेन सन्त्यज्य समेति तत्त्वम्
॥ ३६३ ॥ निरन्तराभ्यासवशात्तदित्थं पक्वं मनो ब्रह्मणि लीयते
यदा । तदा समाधिः सविकल्पवर्जितः स्वतोऽद्वयानन्दरसा-
नुभावकः ॥ ३६४ ॥ समाधिनानेन समस्तवासना ग्रन्थेर्विना-
शोऽखिलकर्मनाशः । अन्तर्बहिः सर्वत एव सर्वदा स्वरूपवि-
स्फूर्तिरयत्नतः स्यात् ॥ ३६५ ॥ श्रुतेः शतगुणं विद्यान्मननं
मननादपि । निदिध्यासं लक्षगुणमनन्तं निर्विकल्पकम् ॥३६६॥
निर्विकल्पकसमाधिना स्फुटं ब्रह्मतत्त्वमवगम्यते ध्रुवम् । नान्य-
था चलतया मनोगतेः प्रत्ययान्तरविमिश्रितं भवेत् ॥ ३६७ ॥
अतः समाधत्स्व यतेन्द्रियः सन् निरन्तरं शान्तमनः प्रतीचि ।
विध्वंसय ध्वान्तमनाद्यविद्यया कृतं सदेकत्वविलोकनेन ॥३६८॥
योगस्य प्रथमद्वारं वाङ्निरोधोऽपरिग्रहः । निराशा च निरीहा
च नित्यमेकान्तशीलता ॥ ३६९ ॥ एकान्तस्थितिरिन्द्रियोप-
रमणे हेतुर्दमश्चेतसः संरोधे करणं शमेन विलयं यायादहंवा-
सना । तेनानन्दरसानुभूतिरचला ब्राह्मी सदा योगिनस्तस्मा-
च्चित्तनिरोध एव सततं कार्यः प्रयत्नान्मुने ॥ ३७० ॥ वाचं
नियच्छात्मनि तं नियच्छ बुद्धौ धियं यच्छ च बुद्धिसाक्षिणि ।
तं चापि पूर्णात्मनि निर्विकल्पे विलाप्य शान्तिं परमां भजस्व
॥ ३७१ ॥ देहप्राणेन्द्रियमनोबुद्ध्यादिभिरुपाधिभिः । यैर्यै-
र्वृत्तेः समायोगस्तत्तद्भावोऽस्य योगिनः ॥ ३७२ ॥ तन्निवृत्त्या

मुनेः सम्यक् सर्वोपरमणं सुखम् । संदृश्यते सदानन्दस्फु
भवविप्लवः ॥ ३७३ ॥ बहिस्तु विषयैः सङ्गं तथान्तर
भिः । विरक्त एव शक्नोति त्यक्तुं ब्रह्मणि निष्ठितः ॥ ३
अन्तस्त्यागो बहिस्त्यागो विरक्तस्यैव युज्यते । त्यजत्यन्त
सङ्गं विरक्तस्तु मुमुक्षया ॥ ३७५ ॥ वैराग्यबोधौ पुरुषस्य
वत् पक्षौ विजानीहि विचक्षण त्वम् । विमुक्तिसौधाग्रत
रोहणं ताभ्यां विना नान्यतरेण सिद्ध्यति ॥ ३७६ ॥ अ
न्तवैराग्यवतः समाधिः समाहितस्यैव दृढप्रबोधः । प्रबुद्ध
हि बन्धमुक्तिर्मुक्तात्मनो नित्यसुखानुभूतिः ॥ ३७७ ॥
ग्यान्न परं सुखस्य जनकं पश्यामि वश्यात्मनस्तच्चेच्छुद्ध
बोधसहितं स्वाराज्यसाम्राज्यधुक् । एतद्द्वारमजस्रमुक्ति
सात्त्वमस्मात्परं सर्वत्रास्पृहया सदात्मनि सदा प्रज्ञां कु
॥ ३७८ ॥ आशां छिन्धि विषोपमेषु विषयेष्वेषैव
कृतिस्त्यक्त्वा जातिकुलाश्रमेष्वभिमतिं मुञ्चातिदूराः क्रि
देहादावसति त्यजात्मधिषणां प्रज्ञां कुरुष्वात्मनि त्वं द्रष्टा
ऽसि निर्द्वयपरंब्रह्मासि यद्वस्तुतः ॥३७९॥ लक्ष्ये ब्रह्मणि
दृढतरं संस्थाप्य बाह्येन्द्रियं स्वस्थाने विनिवेश्य निश्चलतनु
देहस्थितिम् । ब्रह्मात्मैक्यमुपेत्य तन्मयतया चाखण्डवृत्त्या
ब्रह्मानन्दरसं पिबात्मनि मुदा शून्यैः किमन्यैर्भृशम् ॥ ३
अनात्मचिन्तनं त्यक्त्वा कश्मलं दुःखकारणम् । चिन्त
नमानन्दरूपं यन्मुक्तिकारणम् ॥ ३८१ ॥ एष स्वयं
शेषसाक्षी विज्ञानकोशो विलसत्यजस्रम् । लक्ष्यं विधा
द्विलक्षणमखण्डवृत्त्यात्मतयानुभावय ॥ ३८२ ॥ एतम
वृत्त्या प्रत्ययान्तरशून्यया । उल्लेखयन्विजानीयात्स्वस्व

स्फुटम् ॥ ३८३ ॥ अत्रात्मत्वं दृढीकुर्वन्नहमादिषु सन्त्यजन् ।
उदासीनतया तेषु तिष्ठेत्स्फुटघटादिवत् ॥ ३८४ ॥ विशुद्ध-
मन्तःकरणं स्वरूपे निवेश्य साक्षिण्यवबोधमात्रे । शनैःशनैर्निश्च-
लतामुपानयन् पूर्णं स्वमेवानुविलोकयेत्ततः ॥ ३८५ ॥ देहेन्द्रि-
यप्राणमनोऽहमादिभिः स्वाज्ञानक्लृप्तैरखिलैरुपाधिभिः । विमु-
क्तमात्मानमखण्डरूपं पूर्णं महाकाशमिवावलोकयेत् ॥ ३८६ ॥
घटकलशकुसूलसूचिमुख्यैर्गगनमुपाधिशतैर्विमुक्तमेकम् । भवति
न विविधं तथैव शुद्धं परमहमादिविमुक्तमेकमेव ॥ ३८७ ॥
ब्रह्मादिस्तम्बपर्यन्ता मृषामात्रा उपाधयः । ततः पूर्णं स्वमा-
त्मानं पश्येदेकात्मना स्थितम् ॥ ३८८ ॥ यत्र भ्रान्त्या कल्पितं
तद्विवेके तत्तन्मात्रं नैव तस्माद्विभिन्नम् । भ्रान्तेर्नाशे भ्रान्तिदृ-
ष्टाहितत्त्वं रज्जुस्तद्वद्विश्वमात्मस्वरूपम् ॥ ३८९ ॥ स्वयं ब्रह्मा
स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः । स्वयं विश्वमिदं सर्वं
स्वस्मादन्यन्न किंचन ॥ ३९० ॥ अन्तः स्वयं चापि बहिः स्वयं
च स्वयं पुरस्तात्स्वयमेव पश्चात् । स्वयं ह्यवाच्यां स्वयमप्युदी-
च्यां तथोपरिष्टात्स्वयमप्यधस्तात् ॥ ३९१ ॥ तरङ्गफेनभ्रमबु-
द्बुदादि सर्वं स्वरूपेण जलं यथा तथा । चिदेव देहाद्यहमन्त-
मेतत् सर्वं चिदेवैकरसं विशुद्धम् ॥ ३९२ ॥ सदेवेदं सर्वं
जगदवगतं वाङ्मनसयोः सतोऽन्यन्नास्त्येव प्रकृतिपरसीम्नि
स्थितवतः । पृथक् किं मृत्स्नायाः कलशघटकुम्भाद्यवगतं वद-
त्येष भ्रान्तस्त्वमहमिति मायामदिरया ॥ ३९३ ॥ क्रियासम-
भिहारेण यत्र नान्यदिति श्रुतिः । ब्रवीति द्वैतराहित्यं मिथ्या-
ध्यासनिवृत्तये ॥ ३९४ ॥ आकाशवन्निर्मलनिर्विकल्पनिःसी-
मनिष्पन्दननिर्विकारम् । अन्तर्बहिःशून्यमनन्यमद्वयं स्वयं परं

ब्रह्म किमस्ति बोध्यम् ॥ ३९५ ॥ वक्तव्यं किमु वि
बहुधा ब्रह्मैव जीवः स्वयं ब्रह्मैतज्जगदाततं नु सकलं ब्र
तीयं श्रुतिः । ब्रह्मैवाहमिति प्रबुद्धमतयः सन्त्यक्तबाह्याः
ब्रह्मीभूय वसन्ति सन्ततचिदानन्दात्मनैतद्ध्रुवम् ॥ ३९
जहि मलमयकोशेऽहंधियोत्थापिताशां प्रसभमनिलकल्पे
देहेऽपि पश्चात् । निगमगदितकीर्तिं नित्यमानन्दमूर्तिं
मिति परिचीय ब्रह्मरूपेण तिष्ठ ॥ ३९७ ॥ शवाकारं या
जति मनुजस्तावदशुचिः परेभ्यः स्यात्क्लेशो जननमरण
धिनिलयः । यदात्मानं शुद्धं कलयति शिवाकारमचलं
तेभ्यो मुक्तो भवति हि तदाह श्रुतिरपि ॥ ३९८ ॥ स्वात्म
रोपिताशेषाभासवस्तुनिरासतः । स्वयमेव परं ब्रह्म पूर्ण
मक्रियम् ॥ ३९९ ॥ समाहितायां सति चित्तवृत्तौ परा
ब्रह्मणि निर्विकल्पे । न दृश्यते कश्चिदयं विकल्पः प्रजल्प
परिशिष्यते ततः ॥ ४०० ॥ असत्कल्पो विकल्पोऽयं
मित्येकवस्तुनि । निर्विकारे निराकारे निर्विशेषे भिदा
॥ ४०१ ॥ द्रष्टृदर्शनदृश्यादिभावशून्यैकवस्तुनि । निर्वि
निराकारे निर्विशेषे भिदा कुतः ॥ ४०२ ॥ कल्पार्णव
त्यन्तपरिपूर्णैकवस्तुनि । निर्विकारे निराकारे निर्विशेषे
कुतः ॥ ४०३ ॥ तेजसीव तमो यत्र प्रलीनं भ्रान्तिकार
अद्वितीये परे तत्त्वे निर्विशेषे भिदा कुतः ॥ ४०४ ॥
त्मके परे तत्त्वे भेदवार्ता कथं वसेत् । सुषुप्तौ सुखमात्र
भेदः केनावलोकितः ॥ ४०५ ॥ न ह्यस्ति विश्वं परतत्त्वबो
सदात्मनि ब्रह्मणि निर्विकल्पे । कालत्रये नाप्यहिरीक्षितो
नह्यम्बुबिन्दुर्मृगतृष्णिकायाम् ॥ ४०६ ॥ मायामात्रमिदं

मद्वैतं परमार्थतः। इति ब्रूते श्रुतिः साक्षात् सुषुप्तावनुभूयते
॥ ४०७॥ अनन्यत्वमधिष्ठानादारोप्यस्य निरीक्षितम्। पण्डितै
रज्जुसर्पादौ विकल्पो भ्रान्तिजीवनः ॥ ४०८॥ चित्तमूलो
विकल्पोऽयं चित्ताभावे न कश्चन। अतश्चित्तं समाधेहि प्रत्य-
ग्रूपे परात्मनि ॥ ४०९॥ किमपि सततबोधं केवलानन्दरूपं
निरुपममतिवेलं नित्यमुक्तं निरीहम्। निरवधि गगनाभं नि-
ष्कलं निर्विकल्पं हृदि कलयति विद्वान्ब्रह्म पूर्णं समाधौ
॥४१०॥ प्रकृतिविकृतिशून्यं भावनातीतभावं समरसमसमानं
मानसं बन्धदूरम्। निगमवचनसिद्धं नित्यमस्मत्प्रसिद्धं हृदि
कलयति विद्वान्ब्रह्म पूर्णं समाधौ ॥४११॥ अजरममरमस्ताभा-
ववस्तुस्वरूपं स्तिमितसलिलराशिप्रख्यमाख्याविहीनम्। शमि-
तगुणविकारं शाश्वतं शान्तमेकं हृदि कलयति विद्वान्ब्रह्म पूर्णं
समाधौ ॥ ४१२॥ समाहितान्तःकरणः स्वरूपे विलोकया-
त्मानमखण्डवैभवम्। विच्छिन्धि बन्धं भवगन्धगन्धितं यत्नेन
पुंस्त्वं सफलीकुरुष्व ॥ ४१३॥ सर्वोपाधिविनिर्मुक्तं सच्चिदा-
नन्दमद्वयम्। भावयात्मानमात्मस्थं न भूयः कल्पसेऽध्वने
॥ ४१४॥ छायेव पुंसः परिदृश्यमानमाभासरूपेण फलानु-
भूत्या। शरीरमाराच्छववन्निरस्तं पुनर्न सन्धत्त इदं महात्मा
॥ ४१५॥ प्रारब्धसूत्रग्रथितं शरीरं प्रयातु वा तिष्ठतु गोरि-
वास्रक्। न तत्पुनः पश्यति तत्त्ववेत्तानन्दात्मनि ब्रह्मणि लीन-
वृत्तिः ॥ ४१६॥ सततविमलबोधानन्दरूपं समेत्य त्यज जड-
मलरूपोपाधिमेतं सुदूरे। अथ पुनरपि नैव स्मर्यतां वान्तवस्तु
स्मरणविषयभूतं कल्पते कुत्सनाय ॥ ४१७॥ समूलमेतत्परि-
दह्य वह्नौ सदात्मनि ब्रह्मणि निर्विकल्पे। ततः स्वयं नित्यवि-

ब्रह्म किमस्ति बोध्यम् ॥ ३९५ ॥ वक्तव्यं किमु वि
बहुधा ब्रह्मैव जीवः स्वयं ब्रह्मैतज्जगदाततं नु सकलं ब्र
तीयं श्रुतिः । ब्रह्मैवाहमिति प्रबुद्धमतयः सन्त्यक्तबाह्याः
ब्रह्मीभूय वसन्ति सन्ततचिदानन्दात्मनैतद्ध्रुवम् ॥ ३९
जहि मलमयकोशेऽहंधियोत्थापिताशां प्रसभमलिनकल्पे
देहेऽपि पश्चात् । निगमगदितकीर्तिं नित्यमानन्दमूर्तिं
मिति परिचीय ब्रह्मरूपेण तिष्ठ ॥ ३९७ ॥ शवाकारं या
जति मनुजस्तावदशुचिः परेभ्यः स्यात्क्लेशो जननमरण
धिनिलयः । यदात्मानं शुद्धं कलयति शिवाकारमचलं
तेभ्यो मुक्तो भवति हि तदाह श्रुतिरपि ॥ ३९८ ॥ स्वात्म
रोपिताशेषाभासवस्तुनिरासतः । स्वयमेव परं ब्रह्म पूर्ण
मक्रियम् ॥ ३९९ ॥ समाहितायां सति चित्तवृत्तौ परा
ब्रह्मणि निर्विकल्पे । न दृश्यते कश्चिदयं विकल्पः प्रजल्प
परिशिष्यते ततः ॥ ४०० ॥ असत्कल्पो विकल्पोऽयं
मित्येकवस्तुनि । निर्विकारे निराकारे निर्विशेषे भिदा
॥ ४०१ ॥ द्रष्टृदर्शनदृश्यादिभावशून्यैकवस्तुनि । निर्वि
निराकारे निर्विशेषे भिदा कुतः ॥ ४०२ ॥ कल्पार्णव
त्यन्तपरिपूर्णैकवस्तुनि । निर्विकारे निराकारे निर्विशेषे
कुतः ॥ ४०३ ॥ तेजसीव तमो यत्र प्रलीनं भ्रान्तिकार
अद्वितीये परे तत्त्वे निर्विशेषे भिदा कुतः ॥ ४०४ ॥
त्मके परे तत्त्वे भेदवार्ता कथं वसेत् । सुषुप्तौ सुखमा
भेदः केनावलोकितः ॥ ४०५ ॥ न ह्यस्ति विश्वं परतत्त्वबो
सदात्मनि ब्रह्मणि निर्विकल्पे । कालत्रये नाप्यहिरीक्षितो
नद्यम्बुबिन्दुर्मृगतृष्णिकायाम् ॥ ४०६ ॥ मायामात्रमिदं

मद्वैतं परमार्थतः। इति ब्रूते श्रुतिः साक्षात् सुषुप्तावनुभूयते ॥ ४०७ ॥ अनन्यत्वमधिष्ठानादारोप्यस्य निरीक्षितम्। पण्डितै रज्जुसर्पादौ विकल्पो भ्रान्तिजीवनः ॥ ४०८ ॥ चित्तमूलो विकल्पोऽयं चित्ताभावे न कश्चन। अतश्चित्तं समाधेहि प्रत्यग्रूपे परात्मनि ॥ ४०९ ॥ किमपि सततबोधं केवलानन्दरूपं निरुपममतिवेलं नित्यमुक्तं निरीहम्। निरवधि गगनाभं निष्कलं निर्विकल्पं हृदि कलयति विद्वान्ब्रह्म पूर्णं समाधौ ॥४१०॥ प्रकृतिविकृतिशून्यं भावनातीतभावं समरसमसमानं मानसं बन्धदूरम्। निगमवचनसिद्धं नित्यमस्मत्प्रसिद्धं हृदि कलयति विद्वान्ब्रह्म पूर्णं समाधौ ॥४११॥ अजरममरमस्ताभासवस्तुस्वरूपं स्तिमितसलिलराशिप्रख्यमाख्याविहीनम्। शमितगुणविकारं शाश्वतं शान्तमेकं हृदि कलयति विद्वान्ब्रह्म पूर्णं समाधौ ॥ ४१२ ॥ समाहितान्तःकरणः स्वरूपे विलोकयात्मानमखण्डवैभवम्। विच्छिन्धि बन्धं भवगन्धगन्धितं यत्नेन पुंस्त्वं सफलीकुरुष्व ॥ ४१३ ॥ सर्वोपाधिविनिर्मुक्तं सच्चिदानन्दमद्वयम्। भावयात्मानमात्मस्थं न भूयः कल्पसेऽध्वने ॥ ४१४ ॥ छायेव पुंसः परिदृश्यमानमाभासरूपेण फलानुभूत्या। शरीरमाराच्छववन्निरस्तं पुनर्न सन्धत्त इदं महात्मा ॥ ४१५ ॥ प्रारब्धसूत्रग्रथितं शरीरं प्रयातु वा तिष्ठतु गोरिवास्रक्। न तत्पुनः पश्यति तत्त्ववेत्तानन्दात्मनि ब्रह्मणि लीनवृत्तिः ॥ ४१६ ॥ सततविमलबोधानन्दरूपं समेत्य त्यज जडमलरूपोपाधिमेतं सुदूरे। अथ पुनरपि नैव स्मर्यतां वान्तवस्तु स्मरणविषयभूतं कल्पते कुत्सनाय ॥ ४१७ ॥ समूलमेतत्परिदह्य वह्नौ सदात्मनि ब्रह्मणि निर्विकल्पे। ततः स्वयं नित्यवि-

शुद्धबोधानन्दात्मना तिष्ठति विद्वरिष्ठः ॥ ४१८ ॥ अह
नन्दमात्मानं विज्ञाय स्वस्वरूपतः । किमिच्छन्कस्य वा
देहं पुष्णाति तत्त्ववित् ॥ ४१९ ॥ संसिद्धस्य फलं त्वेत
न्मुक्तस्य योगिनः । वहिरन्तःसदानन्दरसास्वादनमा
॥ ४२० ॥ वैराग्यस्य फलं बोधो बोधस्योपरतिः फलम् ।
नन्दानुभवाच्छान्तिरेषैवोपरतेः फलम् ॥ ४२१ ॥ यद्युत्त
राभावः पूर्वपूर्वं तु निष्फलम् । निवृत्तिः परमा तृप्तिरान
न्दोऽनुपमः स्वतः ॥ ४२२ ॥ दृष्टदुःखेष्वनुद्वेगो विद्यायाः
फलम् । यत्कृतं भ्रान्तिवेलायां नाना कर्म जुगुप्सितम् ।
न्नरो विवेकेन तत्कथं कर्तुमर्हति ॥ ४२३ ॥ विद्याफलं
सतो निवृत्तिः प्रवृत्तिरज्ञानफलं तदीक्षितम् । तज्ज्ञानयो
गतृष्णिकादौ नोचेद्विदां दृष्टफलं किमस्मात् ॥ ४२४ ॥
नहृदयग्रन्थेर्विनाशो यद्यशेषतः । अनिच्छोर्विषयः किंतु
कारणं स्वतः ॥ ४२५ ॥ वासनानुदयो भोग्ये वैराग्यस्य
वधिः । अहंभावोदयाभावो बोधस्य परमावधिः । लीन
नुत्पत्तिर्मर्यादोपरतेस्तु सा ॥ ४२६ ॥ ब्रह्माकारतया
स्थिततया निर्मुक्तबाह्यार्थधीरन्यावेदितभोग्यभोगकलनो
लुवद्बालवत् । स्वप्नालोकितलोकवज्जगदिदं पश्यन्कचिल्ल
रास्ते कश्चिदनन्तपुण्यफलभुग्धन्यः स मान्यो भुवि ॥ ४२
स्थितप्रज्ञो यतिरयं यः सदानन्दमश्नुते । ब्रह्मण्येव विलीना
निर्विकारो विनिष्क्रियः ॥ ४२८ ॥ ब्रह्मात्मनोः शोधितयो
कभावावगाहिनी । निर्विकल्पा च चिन्मात्रा बुद्धिः प्र
कथ्यते । सुस्थितासौ भवेद्यस्य स्थितप्रज्ञः स उच्यते ॥ ४२
यस्य स्थिता भवेत्प्रज्ञा यस्यानन्दो निरन्तरः । प्रपञ्चो वि

तन्नायः स जीवन्मुक्त इष्यते ॥ ४३० ॥ लीनधीरपि जागर्ति यो जाग्रद्धर्मवर्जितः । बोधो निर्वासनो यस्य स जीवन्मुक्त इष्यते ॥ ४३१ ॥ शान्तसंसारकलनः कलावानपि निष्कलः । यस्य चित्तं विनिश्चिन्तं स जीवन्मुक्त इष्यते ॥ ४३२ ॥ वर्तमानोऽपि देहेऽस्मिञ्छायावदनुवर्तिनि । अहन्ताममताभावो जीवन्मुक्तस्य लक्षणम् ॥ ४३३ ॥ अतीताननुसन्धानं भविष्यदविचारणम् । औदासीन्यमपि प्राप्तं जीवन्मुक्तस्य लक्षणम् ॥ ४३४ ॥ गुणदोषविशिष्टेऽस्मिन्स्वभावेन विलक्षणे । सर्वत्र समदर्शित्वं जीवन्मुक्तस्य लक्षणम् ॥ ४३५ ॥ इष्टानिष्टार्थसंप्राप्तौ समदर्शितयात्मनि । उभयत्राविकारित्वं जीवन्मुक्तस्य लक्षणम् ॥ ४३६ ॥ ब्रह्मानन्दरसास्वादासक्तचित्ततया यतेः । अन्तर्बहिरविज्ञानं जीवन्मुक्तस्य लक्षणम् ॥ ४३७ ॥ देहेन्द्रियादौ कर्तव्ये ममाहंभाववर्जितः । औदासीन्येन यस्तिष्ठेत्स जीवन्मुक्तलक्षणः ॥ ४३८ ॥ विज्ञात आत्मनो यस्य ब्रह्मभावः श्रुतेर्बलात् । भवबन्धविनिर्मुक्तः स जीवन्मुक्तलक्षणः ॥४३९॥ देहेन्द्रियेष्वहंभाव इदंभावस्तदन्यके । यस्य नो भवतः क्वापि स जीवन्मुक्त इष्यते ॥ ४४० ॥ न प्रत्यग्ब्रह्मणो भेदं कदापि ब्रह्मसर्गयोः । प्रज्ञया यो विजानाति स जीवन्मुक्तलक्षणः ॥ ४४१ ॥ साधुभिः पूज्यमानेऽस्मिन्पीड्यमानेऽपि दुर्जनैः । समभावो भवेद्यस्य स जीवन्मुक्तलक्षणः ॥४४२॥ यत्र प्रविष्टा विषयाः परेरिता नदीप्रवाहा इव वारिराशौ । लीयन्ति सन्मात्रतया न विक्रियामुत्पादयन्त्येष यतिर्विमुक्तः ॥ ४४३ ॥ विज्ञातब्रह्मतत्त्वस्य यथा पूर्वं न संसृतिः । अस्ति चेन्न स विज्ञातब्रह्मभावो बहिर्मुखः ॥ ४४४ ॥ प्राचीनवासनावेगादसौ

संसरतीति चेत् । न सदेकत्वविज्ञानान्मन्दीभवति वा
॥ ४४५ ॥ अत्यन्तकामुकस्यापि वृत्तिः कुण्ठति मातरि ।
ब्रह्मणि ज्ञाते पूर्णानन्दे मनीषिणः ॥ ४४६ ॥ निदिध्या
शीलस्य बाह्यप्रत्यय ईक्ष्यते । ब्रवीति श्रुतिरेतस्य प्रारब्धं
दर्शनात् ॥ ४४७ ॥ सुखाद्यनुभवो यावत्तावत्प्रारब्धमिष्य
फलोदयः क्रियापूर्वो निष्क्रियो नहि कुत्रचित् ॥ ४४
अहं ब्रह्मेति विज्ञानात्कल्पकोटिशतान्वितम् । संचितं वि
याति प्रबोधात्स्वप्नकर्मवत् ॥ ४४९ ॥ यत्कृतं भ्रान्तिवे
पुण्यं वा पापमुल्बणम् । सुप्तोत्थितस्य किं तत्स्यात्स्वर्गाय
काय वा ॥ ४५० ॥ स्वमसङ्गमुदासीनं परिज्ञाय नभो य
न श्लिष्यति च यत्किंचित्कदाचिद्भाविकर्मभिः ॥ ४५
नभो न घटयोगेन सुरागन्धेन लिप्यते । तथात्मोपाधियो
तद्धर्मैर्नैव लिप्यते ॥ ४५२ ॥ ज्ञानोदयात्पुरारब्धं कर्मज्ञान
नश्यति । अदत्त्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत् ॥४
व्याघ्रबुद्ध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ । न ति
छिनत्त्येव लक्ष्यं वेगेन निर्भरम् ॥ ४५४ ॥ प्रारब्धं बलव
खलु विदां भोगेन तस्य क्षयः सम्यग्ज्ञानहुताशनेन वि
प्राक्संचितागामिनाम् । ब्रह्मात्मैक्यमवेक्ष्य तन्मयतया ये स
संस्थितास्तेषां तत्त्रितयं नहि क्वचिदपि ब्रह्मैव ते निर्गु
॥ ४५५ ॥ उपाधितादात्म्यविहीनकेवलब्रह्मात्मनैवात्मनि
ष्ठतो मुनेः । प्रारब्धसद्भावकथा न युक्ता स्वप्नार्थसंबन्धक
जाग्रतः ॥ ४५६ ॥ नहि प्रबुद्धः प्रतिभासदेहे देहोपयोगिन्य
च प्रपञ्चे । करोत्यहन्तां ममतामिदन्तां किंतु स्वयं ति
जागरेण ॥ ४५७ ॥ न तस्य मिथ्यार्थसमर्थनेच्छा न सं

स्तज्जगतोऽपि दृष्टः। तत्रानुवृत्तिर्यदि चेन्मृषार्थे न निद्रया मुक्त इतीष्यते ध्रुवम् ॥ ४५८ ॥ तद्वत्परे ब्रह्मणि वर्तमानः सदात्मना तिष्ठति नान्यदीक्षते। स्मृतिर्यथा स्वप्नविलोकितार्थे तथाविदः प्राशनमोचनादौ ॥ ४५९ ॥ कर्मणा निर्मितो देहः प्रारब्धं तस्य कल्प्यताम्। नानादेरात्मनो युक्तं नैवात्मा कर्मनिर्मितः ॥ ४६० ॥ अजो नित्यः शाश्वत इति ब्रूते श्रुतिरमोघवाक्। तदात्मना तिष्ठतोऽस्य कुतः प्रारब्धकल्पना ॥४६१॥ प्रारब्धं सिद्ध्यति तदा यदा देहात्मना स्थितिः। देहात्मभावो नैवेष्टः प्रारब्धं त्यजतामतः ॥ ४६२ ॥ शरीरस्यापि प्रारब्धकल्पना भ्रान्तिरेव हि। अध्यस्तस्य कुतः सत्त्वमसत्त्वस्य कुतो जनिः ॥ ४६३ ॥ अजातस्य कुतो नाशः प्रारब्धमसतः कुतः। ज्ञानेनाज्ञानकार्यस्य समूलस्य लयो यदि ॥ ४६४ ॥ तिष्ठत्ययं कथं देह इति शङ्कावतो जडान्। समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः। न तु देहादिसत्यत्वबोधनाय विपश्चिताम् ॥ ४६५ ॥ परिपूर्णमनाद्यन्तमप्रमेयमविक्रियम्। एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ४६६ ॥ सद्घनं चिद्घनं नित्यमानन्दघनमक्रियम्। एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ४६७ ॥ प्रत्यगेकरसं पूर्णमनन्तं सर्वतोमुखम्। एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ४६८ ॥ अहेयमनुपादेयमनादेयमनाश्रयम्। एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥४६९॥ निर्गुणं निष्कलं सूक्ष्मं निर्विकल्पं निरञ्जनम्। एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ४७० ॥ अनिरूप्यस्वरूपं यन्मनोवाचामगोचरम्। एकमेवाद्वयं ब्रह्म नेह नानाऽस्ति किंचन ॥ ४७१ ॥ सत्समृद्धं स्वतःसिद्धं शुद्धं बुद्धमनीदृशम्। एकमे-

अनात्मीसाती:दैषो-



वाद्वयं ब्रह्म नेह नानाऽस्ति किंचन ॥ ४७२ ॥ निरस्त
विनिरस्तभोगाः शान्ताः सुदान्ता यतयो महान्तः । वि
तत्त्वं परमेतदन्ते प्राप्ताः परां निर्वृतिमात्मयोगात् ॥ ४७
भवानपीदं परतत्त्वमात्मनः स्वरूपमानन्दघनं विचार्य । वि
मोहं स्वमनःप्रकल्पितं मुक्तः कृतार्थो भवतु प्रबुद्धः ॥ ४७
समाधिना साधुविनिश्चलात्मना पश्यात्मतत्त्वं स्फुटबोधचक्षु
न संशयं सम्यगवेक्षितश्चेत् श्रुतः पदार्थो न पुनर्विक
॥ ४७५ ॥ स्वस्याऽविद्याबन्धसंबन्धमोक्षात् सत्यज्ञानानन्द
त्मलब्धौ । शास्त्रं युक्तिर्देशिकोक्तिप्रमाणं चान्तःसिद्धा स्व
भूतिः प्रमाणम् ॥ ४७६ ॥ बन्धो मोक्षश्च तृप्तिश्च चिन्ता
क्षुधादयः । स्वेनैव वेद्या यज्ज्ञानं परेषामानुमानिकम् ॥ ४७
ॐ तटस्थिता बोधयन्ति गुरवः श्रुतयो यथा । प्रज्ञयैव तरे
नीश्वरानुगृहीतया ॥ ४७८ ॥ स्वानुभूत्या स्वयं ज्ञात्वा स्व
त्मानमखण्डितम् । संसिद्धः सन्मुखं तिष्ठेन्निर्विकल्पात्मनाऽ
नि ॥ ४७९ ॥ वेदान्तसिद्धान्तनिरुक्तिरेषा ब्रह्मैव जीवः स
जगच्च । अखण्डरूपस्थितिरेव मोक्षो ब्रह्माद्वितीये श्रुतयः प्र
णम् ॥ ४८० ॥ इति गुरुवचनाच्छ्रुतिप्रमाणात् परमव
सतत्त्वमात्मयुक्त्या । प्रशमितकरणः समाहितात्मा क्वचिद
लाकृतिरात्मनिष्ठितोऽभूत् ॥ ४८१ ॥ किंचित्कालं समा
परे ब्रह्मणि मानसम् । उत्थाय परमानन्दादिदं वचनमब्र
॥ ४८२ ॥ बुद्धिर्विनष्टा गलिता प्रवृत्तिर्ब्रह्मात्मनोरेकतया
गत्या । इदं न जानेऽप्यनिदं न जाने किं वा कियद्वा सुख
स्त्यपारम् ॥ ४८३ ॥ वाचा वक्तुमशक्यमेव मनसा मन्तुं
वा शक्यते स्वानन्दामृतपूरपूरितपरब्रह्माम्बुधेर्वैभवम् । अम्

राशिविशीर्णवार्षिकशिलाभावं भजन्मे मनो यस्यांशांशलवे विलीनमधुनानन्दात्मना निर्वृतम् ॥ ४८४ ॥ क्व गतं केन वा नीतं कुत्र लीनमिदं जगत् । अधुनैव मया दृष्टं नास्ति किं महदद्भुतम् ॥ ४८५ ॥ किं हेयं किमुपादेयं किमन्यत्किं विलक्षणम् । अखण्डानन्दपीयूषपूर्णे ब्रह्ममहार्णवे ॥ ४८६ ॥ न किंचिदत्र पश्यामि न शृणोमि न वेद्म्यहम् । स्वात्मनैव सदानन्दरूपेणास्मि विलक्षणः ॥ ४८७ ॥ नमो नमस्ते गुरवे महात्मने विमुक्तसङ्गाय सदुत्तमाय । नित्याद्वयानन्दरसस्वरूपिणे भूम्ने सदापारदयाम्बुधाम्ने ॥ ४८८ ॥ यत्कटाक्षशशिसान्द्रचन्द्रिकापातधूतभवतापजश्रमः । प्राप्तवानहमखण्डवैभवानन्दमात्मपदमक्षयं क्षणात् ॥ ४८९ ॥ धन्योऽहं कृतकृत्योऽहं विमुक्तोऽहं भवग्रहात् । नित्यानन्दस्वरूपोऽहं पूर्णोऽहं तदनुग्रहात् ॥ ४९० ॥ असङ्गोऽहमनङ्गोऽहमलिङ्गोऽहमभङ्गुरः । प्रशान्तोऽहमनन्तोऽहममलोऽहं चिरन्तनः ॥ ४९१ ॥ अकर्ताहमभोक्ताहमविकारोऽहमक्रियः । शुद्धबोधस्वरूपोऽहं केवलोऽहं सदाशिवः ॥ ४९२ ॥ द्रष्टुः श्रोतुर्वक्तुः कर्तुर्भोक्तुर्विभिन्न एवाहम् । नित्यनिरन्तरनिष्क्रियनिःसीमासङ्गपूर्णबोधात्मा ॥ ४९३ ॥ नाहमिदं नाहमदोऽप्युभयोरवभासकं परं शुद्धम् । बाह्याभ्यन्तरशून्यं पूर्णं ब्रह्माद्वितीयमेवाहम् ॥ ४९४ ॥ निरुपममनादितत्त्वं त्वमहमिदमद इति कल्पनादूरम् । नित्यानन्दैकरसं सत्यं ब्रह्माद्वितीयमेवाहम् ॥ ४९५ ॥ नारायणोऽहं नरकान्तकोऽहं पुरान्तकोऽहं पुरुषोऽहमीशः । अखण्डबोधोऽहमशेषसाक्षी निरीश्वरोऽहं निरहं च निर्ममः ॥४९६॥ सर्वेषु भूतेष्वहमेव संस्थितो ज्ञानात्मनान्तर्बहिराश्रितः सन् । भोक्ता च भोग्यं स्वयमेव सर्वं

यद्यत्पृथग्दृष्टमिदन्तया पुरा ॥ ४९७ ॥ मय्यखण्डसुखाम्
बहुधा विश्ववीचयः । उत्पद्यन्ते विलीयन्ते मायामारुतवि
॥ ४९८ ॥ स्थूलादिभावा मयि कल्पिता भ्रमादारोपि
स्फुरणेन लोकैः । काले यथा कल्पकवत्सरायनर्त्वादयो
लनिर्विकल्पे ॥ ४९९ ॥ आरोपितं नाश्रयदूषकं भवेत्
मूढरतिदोषदूषितैः । नार्द्रीकरोत्यूषरभूमिभागं मरीचिका
महाप्रवाहः ॥ ५०० ॥ आकाशवल्लेपविदूरगोऽहमादित्य
विलक्षणोऽहम् । अहार्यवन्नित्यविनिश्चलोऽहमम्भोधिवत्
वर्जितोऽहम् ॥ ५०१ ॥ न मे देहेन संबन्धो मेघेनेव
यसः । अतः कुतो मे तद्धर्मा जाग्रत्स्वप्नसुषुप्तयः ॥ ५
उपाधिरायाति स एव गच्छति स एव कर्माणि करोति
स एव जीवन्म्रियते सदाऽहं कुलाद्रिवन्निश्चल एव सं
॥ ५०३ ॥ न मे प्रवृत्तिर्न च मे निवृत्तिः सदैकरूपस्य
शकस्य । एकात्मको यो निबिडो निरन्तरो व्योमेव
कथं नु चेष्टते ॥ ५०४ ॥ पुण्यानि पापानि निरि
निश्चेतसो निर्विकृतेर्निराकृतेः । कुतो ममाखण्डसुखानु
ह्यनन्वागतमित्यपि श्रुतिः ॥ ५०५ ॥ छायया स्पृष्ट
शीतं वा सुष्ठु दुष्ठु वा । न स्पृशत्येव यत्किंचित्पुरुषं त
णम् ॥ ५०६ ॥ न साक्षिणं साक्ष्यधर्माः संस्पृशन्ति
क्षणम् । अविकारमुदासीनं गृहधर्माः प्रदीपवत् ॥ ५
रवेर्यथा कर्मणि साक्षिभावो वह्नेर्यथा दाहनियामकत्वम् ।
र्यथाऽऽरोपितवस्तुसङ्गस्तथैव कूटस्थचिदात्मनो मे ॥ ५
कर्तापि वा कारयितापि नाहं भोक्तापि वा भोजयिता
हम् । द्रष्टापि वा दर्शयितापि नाहं सोऽहं स्वयंज्योतिरनी

॥ ५०९ ॥ चलत्युपाधौ प्रतिबिम्बलौल्यमौपाधिकं मूढधियो
नयन्ति । स्वबिम्बभूतं रविवद्विनिष्क्रियं कर्तास्मि भोक्तास्मि
हतोऽस्मि हेति ॥ ५१० ॥ जले वापि स्थले वापि लुठत्वेष जडा-
त्मकः । नाहं विलिप्ये तद्धर्मैर्घटधर्मैर्नभो यथा ॥ ५११ ॥
कर्तृत्वभोक्तृत्वखलत्वमत्तता जडत्वबद्धत्वविमुक्ततादयः । बुद्धे-
र्विकल्पा न तु सन्ति वस्तुतः स्वस्मिन्परे ब्रह्मणि केवलेऽद्वये
॥ ५१२ ॥ सन्तु विकाराः प्रकृतेर्दशधा शतधा सहस्रधा वा-
पि । किं मेऽसङ्गचितस्तैर्न घनः क्वचिदम्बरं स्पृशति ॥ ५१३ ॥
अव्यक्तादिस्थूलपर्यन्तमेतद्विश्वं यत्राभासमात्रं प्रतीतम् । व्योम-
प्रख्यं सूक्ष्ममाद्यन्तहीनं ब्रह्माद्वैतं यत्तदेवाहमस्मि ॥ ५१४ ॥
सर्वाधारं सर्ववस्तुप्रकाशं सर्वाकारं सर्वगं सर्वशून्यम् । नित्यं
शुद्धं निश्चलं निर्विकल्पं ब्रह्माद्वैतं यत्तदेवाहमस्मि ॥ ५१५ ॥
यत्प्रत्यस्ताशेषमायाविशेषं प्रत्यग्रूपं प्रत्ययागम्यमानम् । सत्य-
ज्ञानानन्तमानन्दरूपं ब्रह्माद्वैतं यत्तदेवाहमस्मि ॥ ५१६ ॥ नि-
ष्क्रियोऽस्म्यविकारोऽस्मि निष्कलोऽस्मि निराकृतिः । निर्विक-
ल्पोऽस्मि नित्योऽस्मि निरालम्बोऽस्मि निर्द्वयः ॥ ५१७ ॥ स-
र्वात्मकोऽहं सर्वोऽहं सर्वातीतोऽहमद्वयः । केवलाखण्डबोधोऽह-
मानन्दोऽहं निरन्तरः ॥ ५१८ ॥ स्वाराज्यसाम्राज्यविभूतिरेषा
भवत्कृपा श्रीमहिमप्रसादात् । प्राप्ता मया श्रीगुरवे महात्मने
नमो नमस्तेऽस्तु पुनर्नमोऽस्तु ॥ ५१९ ॥ महास्वप्ने मायाकृत-
जनिजरामृत्युगहने भ्रमन्तं क्लिश्यन्तं बहुलतरतापैरनुदिनम् ।
अहंकारव्याघ्रव्यथितमिममत्यन्तकृपया प्रबोध्य प्रस्वापात्परम-
वितवान्मामसि गुरो ॥ ५२० ॥ नमस्तस्मै सदेकस्मै कस्मैचिन्महसे
नमः । यदेतद्विश्वरूपेण राजते गुरुराज ते ॥ ५२१ ॥ इति
वे. स. ९

नतमवलोक्य शिष्यवर्यं समधिगतात्मसुखं प्रबुद्धतत्त्वम् ।
दितहृदयः स देशिकेन्द्रः पुनरिदमाह वचः परं महात्मा॥
ब्रह्मप्रत्ययसन्ततिर्जगदतो ब्रह्मैव सत्सर्वतः पश्याध्यात्म
प्रशान्तमनसा सर्वास्ववस्थास्वपि। रूपादन्यदवेक्षितं किमभि
क्षुष्मतां दृश्यते तद्वद्ब्रह्मविदः सतः किमपरं बुद्धेर्विहारा
॥ ५२३ ॥ कस्तां परानन्दरसानुभूतिमुत्सृज्य शून्येषु
विद्वान् । चन्द्रे महाह्लादिनि दीप्यमाने चित्रेन्दुमालोक
इच्छेत् ॥ ५२४ ॥ असत्पदार्थानुभवेन किंचिन्न ह्यस्ति
च दुःखहानिः। तदद्वयानन्दरसानुभूत्या तृप्तः सुखं तिष्ठ
त्मनिष्ठया ॥ ५२५ ॥ स्वमेव सर्वथा पश्यन्मन्यमानः
यम् । स्वानन्दमनुभुञ्जानः कालं नय महामते ॥ ५
अखण्डबोधात्मनि निर्विकल्पे विकल्पनं व्योम्नि पुरप्रकल्प
तदद्वयानन्दमयात्मना सदा शान्तिं परामेत्य
मौनम् ॥ ५२७ ॥ तूष्णीमवस्था परमोपशान्तिर्बुद्धेरसत्
विकल्पहेतोः । ब्रह्मात्मना ब्रह्मविदो महात्मनो यत्रा
न्दसुखं निरन्तरम् ॥ ५२८ ॥ नास्ति निर्वासनान्मौन
सुखकृदुत्तमम्। विज्ञातात्मस्वरूपस्य स्वानन्दरसपायिनः॥५
गच्छंस्तिष्ठन्नुपविशञ्छयानो वान्यथापि वा । यथेच्छया
द्विद्वानात्मारामः सदा मुनिः ॥ ५३० ॥ न देशकाला
ग्यमादिलक्ष्याद्यपेक्षाऽप्रतिबद्धवृत्तेः । संसिद्धतत्त्वस्य महा
ऽस्ति स्ववेदने का नियमाद्यवस्था ॥ ५३१ ॥ घटोऽ
विज्ञातुं नियमः कोन्ववेक्षते । विना प्रमाणसुष्ठुत्वं यस्मि
पदार्थधीः ॥ ५३२ ॥ अयमात्मा नित्यसिद्धः प्रमाणे
भासते ॥ न देशं नाऽपि वा कालं न शुद्धिं वाप्यपेक्षते॥५

देवदत्तोऽहमित्येतद्विज्ञानं निरपेक्षकम् । तद्वद्ब्रह्मविदोऽप्यस्य ब्रह्माहमिति वेदनम् ॥ ५३४ ॥ भानुनेव जगत्सर्वं भासते यस्य तेजसा । अनात्मकमसत्तुच्छं किंतु तस्यावभासकम् ॥ ५३५ ॥ वेदशास्त्रपुराणानि भूतानि सकलान्यपि । येनार्थवन्ति तं किंतु विज्ञातारं प्रकाशयेत् ॥ ५३६ ॥ एष स्वयंज्योतिरनन्तशक्तिरात्माऽप्रमेयः सकलानुभूतिः । यमेव विज्ञाय विमुक्तबन्धो जयत्ययं ब्रह्मविदुत्तमोत्तमः ॥ ५३७ ॥ न खिद्यते नो विषयैः प्रमोदते न सज्जते नापि विरज्यते च । स्वस्मिन्सदा क्रीडति नन्दति स्वयं निरन्तरानन्दरसेन तृप्तः ॥ ५३८ ॥ क्षुधां देहव्यथां त्यक्त्वा बालः क्रीडति वस्तुनि । तथैव विद्वान्रमते निर्ममो निरहं सुखी ॥ ५३९ ॥ चिन्ताशून्यमदैन्यभैक्ष्यमशनं पानं सरिद्वारिषु स्वातन्त्र्येण निरङ्कुशस्थितिरभीर्निद्रा श्मशाने वने । वस्त्रं क्षालनशोषणादिरहितं दिग्वास्तुशय्या मही संचारो निगमान्तवीथिषु विदां क्रीडा परे ब्रह्मणि ॥५४०॥ विमानमालम्ब्य शरीरमेतद्भुनक्त्यशेषान्विषयानुपस्थितान् । परेच्छया बालवदात्मवेत्ता योऽव्यक्तलिङ्गोऽननुषक्तबाह्यः ॥ ५४१ ॥ दिगम्बरो वापि च साम्बरो वा त्वगम्बरो वापि चिदम्बरस्थः । उन्मत्तवद्वापि च बालवद्वा पिशाचवद्वापि चरत्यवन्याम् ॥ ५४२ ॥ कामान्निष्कामरूपी संश्चरत्येकचरो मुनिः । स्वात्मनैव सदा तुष्टः स्वयं सर्वात्मना स्थितः ॥ ५४३ ॥ क्वचिन्मूढो विद्वान्क्वचिदपि महाराजविभवः क्वचिद्भ्रान्तः सौम्यः क्वचिदजगराचारकलितः । क्वचित्पात्रीभूतः क्वचिदवमतः क्वाप्यविदितश्चरत्येवं प्राज्ञः सततपरमानन्दसुखितः ॥ ५४४ ॥ निर्धनोऽपि सदा तुष्टोऽप्यसहायो महा-

बलः । नित्यतृप्तोऽप्यभुञ्जानोऽप्यसमः समदर्शनः ॥ ५ ॥
अपि कुर्वन्नकुर्वाणश्चाभोक्ता फलभोग्यपि । शरीर्यप्य
परिच्छिन्नोऽपि सर्वगः ॥ ५४६ ॥ अशरीरं सदास
ब्रह्मविदं क्वचित् । प्रियाप्रिये न स्पृशतस्तथैव च शु
॥ ५४७ ॥ स्थूलादिसंबन्धवतोऽभिमानिनः सुखं च दु
शुभाशुभे च । विध्वस्तबन्धस्य सदात्मनो मुनेः कुतः शुभ
शुभं फलं वा ॥ ५४८ ॥ तमसा ग्रस्तवज्ञानादग्रस्तोऽपि
जनैः । ग्रस्त इत्युच्यते भ्रान्त्या ह्यज्ञात्वा वस्तुलक्षणम् ॥
तद्वद्देहादिबन्धेभ्यो विमुक्तं ब्रह्मवित्तमम् । पश्यन्ति देह
शरीराभासदर्शनात् ॥ ५५० ॥ अहिनिर्ल्वयनीवायं मुक्त
तु तिष्ठति । इतस्ततश्चाल्यमानो यत्किंचित्प्राणवायुना ॥
स्रोतसा नीयते दारु यथा निम्नोन्नतस्थलम् । दैवेन
देहस्तथा कालोपभुक्तिषु ॥ ५५२ ॥ प्रारब्धकर्मपरि
वासनाभिः संसारिवच्चरति भुक्तिषु मुक्तदेहः । सिद्धः
वसति साक्षिवदत्र तूष्णीं चक्रस्य मूलमिव कल्पविक
॥ ५५३ ॥ नैवेन्द्रियाणि विषयेषु नियुङ्क्त एष नैवापयु
दर्शनलक्षणस्थः । नैव क्रियाफलमपीषदवेक्षते स सा
न्द्ररसपानसुमत्तचित्तः ॥ ५५४ ॥ लक्ष्यालक्ष्यगतिं
यस्तिष्ठेत्केवलात्मना । शिव एव स्वयं साक्षादयं ब्रह्मवि
॥ ५५५ ॥ जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ।
धिनाशाद्ब्रह्मैव सन्ब्रह्माऽप्येति निर्द्वयम् ॥ ५५६ ॥
वेषसद्भावाभावयोश्च यथा पुमान् । तथैव ब्रह्मविच्छ्रेष्ठः
ब्रह्मैव नापरः ॥ ५५७ ॥ यत्र क्वापि विशीर्णं स
तरोर्वपुः पततात् । ब्रह्मीभूतस्य यतेः प्रागेव तच्चिदग्निना

५५८ ॥ सदात्मनि ब्रह्मणि तिष्ठतो मुनेः पूर्णाद्वयानन्दम-
यात्मना सदा । न देशकालाद्युचितप्रतीक्षा त्वङ्मांसविट्पिण्ड-
विसर्जनाय ॥ ५५९ ॥ देहस्य मोक्षो नो मोक्षो न दण्डस्य
कमण्डलोः । अविद्याहृदयग्रन्थिमोक्षो मोक्षो यतस्ततः ॥५६०॥
कुल्यायामथ वा नद्यां शिवक्षेत्रेऽथ चत्वरे । पर्णं पतति चेत्तेन
तरोः किं नु शुभाशुभम् ॥ ५६१ ॥ पत्रस्य पुष्पस्य फलस्य
नाशवद्देहेन्द्रियप्राणधियां विनाशः । नैवात्मनः स्वस्य सदात्म-
कस्यानन्दाकृतेर्वृक्षवदस्ति चैषः ॥ ५६२ ॥ प्रज्ञानघन इत्या-
त्मलक्षणं सत्यसूचकम् । अनूद्यौपाधिकस्यैव कथयन्ति विना-
शनम् ॥ ५६३ ॥ अविनाशी वारेऽयमात्मेति श्रुतिरात्मनः ।
ब्रवीत्यविनाशित्वं विनश्यत्सु विकारिषु ॥ ५६४ ॥ पाषाण-
वृक्षतृणधान्यकडङ्कराद्या दग्धा भवन्ति हि मृदेव यथा तथैव ।
देहेन्द्रियासुमनआदिसमस्तदृश्यं ज्ञानाग्निदग्धमुपयाति परात्म-
भावम् ॥ ५६५ ॥ विलक्षणं यथा ध्वान्तं लीयते भानुतेजसि ।
तथैव सकलं दृश्यं ब्रह्मणि प्रविलीयते ॥ ५६६ ॥ घटे नष्टे
यथा व्योम्नि व्योमैव भवति स्फुटम् । तथैवोपाधिविलये ब्रह्मैव
ब्रह्मवित्स्वयम् ॥ ५६७ ॥ क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं
जले । संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः ॥ ५६८ ॥
एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम् । ब्रह्मभावं प्रपद्यैव
यतिर्नावर्तते पुनः ॥ ५६९ ॥ सदात्मैकत्वविज्ञानदग्धाविद्या-
दिवर्ष्मणः । अमुष्य ब्रह्मभूतत्वाद् ब्रह्मणः कुत उद्भवः ॥५७०॥
मायाक्लृप्तौ बन्धमोक्षौ न स्तः स्वात्मनि वस्तुतः । यथा रज्जौ
निष्क्रियायां सर्पाभासविनिर्गमौ ॥ ५७१ ॥ आवृतेः सदस-
त्त्वाभ्यां वक्तव्ये बन्धमोक्षणे । नावृतिर्ब्रह्मणः काचिदन्याभा-

वादनावृतम् । यद्यस्त्यद्वैतहानिः स्याद्वैतं न सहते
॥ ५७२ ॥ बन्धं च मोक्षं च मृषैव मूढा बुद्धेर्गुणं
कल्पयन्ति । दृगावृतिं मेघकृतां यथा रवौ यतोऽद्वयासङ्ग
दक्षरम् ॥ ५७३ ॥ अस्तीति प्रत्ययो यश्च यश्च न
वस्तुनि । बुद्धेरेव गुणावेतौ न तु नित्यस्य वस्तुनः ॥ ५
अतस्तौ मायया कॢप्तौ बन्धमोक्षौ न चात्मनि । निष्क
ष्क्रिये शान्ते निरवद्ये निरञ्जने ॥ ५७५ ॥ न निरो
चोत्पत्तिर्न बन्धो न च साधकः । न मुमुक्षुर्न वै मुक्ति
परमार्थता ॥ ५७६ ॥ सकलनिगमचूडास्वान्तसिद्धा
परमिदमतिगुह्यं दर्शितं ते मयाद्य । अपगतकलिदोषं
र्मुक्तबुद्धिं स्वसुतवदसकृत्त्वां भावयित्वा मुमुक्षुम् ॥ ५७७
श्रुत्वा गुरोर्वाक्यं प्रश्रयेण कृतानतिः । स तेन सम
ययौ निर्मुक्तबन्धनः ॥ ५७८ ॥ गुरुरेव सदानन्दसिन्धौ
लमानसः । पावयन्वसुधां सर्वां विचचार निरन्तरः ॥ ५
इत्याचार्यस्य शिष्यस्य संवादेनात्मलक्षणम् । निरूपितं मु
सुखबोधोपपत्तये ॥ ५८० ॥ हितमिदमुपदेशमाद्रियन्तां
तनिरस्तसमस्तचित्तदोषाः । भवसुखविरताः प्रशान्ता
श्रुतिरसिका यतयो मुमुक्षवो ये ॥ ५८१ ॥ संसाराध्वनि
भानुकिरणप्रोद्भूतदाहव्यथाखिन्नानां जलकाङ्क्षया
श्रान्त्या परिभ्राम्यतां । अत्यासन्नसुधाम्बुधिं सुखकरं
दर्शयत्येषा शंकरभारती विजयते निर्वाणसंदायिनी ॥ ५
इति श्रीपरमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपाद
श्रीमच्छङ्करभगवत्कृतो विवेकचूडामणिः समाप्तः ॥

---

# उपदेशसाहस्री ॥ ३२ ॥

( गद्यप्रबन्धः प्रथमोभागः । )

शिष्यप्रतिबोधविधिप्रकरणम् १

ॐपरमात्मने नमः॥ अथ मोक्षसाधनोपदेशविधिं व्याख्यास्यामो मुमुक्षूणां श्रद्दधानानामर्थिनामर्थाय ॥ १ ॥ तदिदं मोक्षसाधनं ज्ञानं साधनसाध्यादनित्यात्सर्वस्माद्विरक्ताय त्यक्तपुत्रवित्तलोकैषणाय प्रतिपन्नपरमहंसपारिव्राज्याय शमदमदयादियुक्ताय शास्त्रप्रसिद्धशिष्यगुणसंपन्नाय शुचये ब्राह्मणाय विधिवदुपसन्नाय शिष्याय जातिकर्मवृत्तविद्याऽभिजनैः परीक्षिताय ब्रूयात् पुनः पुनः यावद्ग्रहणं दृढीभवति ॥ २ ॥ श्रुतिश्च–'परीक्ष्य लोकान्', 'तत्त्वतो ब्रह्मविद्याम्–' इति । दृढगृहीता हि विद्या आत्मनः श्रेयसे संतत्यै च भवति । विद्यासंततिश्च प्राण्यनुग्रहाय भवति नौरिव नदीं तितीर्षोः । शास्त्रं च–'यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यात् एतदेव ततो भूयः' इति । अन्यथा च ज्ञानप्राप्त्यभावात्–'आचार्यवान् पुरुषो वेद', 'आचार्याद्धैव विद्या विदिता', 'आचार्यः प्लावयिता' सम्यग्ज्ञानं प्लव इहोच्यते । इत्यादिश्रुतिभ्यः, 'उपदेक्ष्यन्ति ते ज्ञानं' इत्यादिस्मृतेश्च ॥ ३ ॥ शिष्यस्य ज्ञानाग्रहणं च लिङ्गैर्बुध्वा अग्रहणे हेतून् अधर्म–लौकिक–प्रमाद–नित्यानित्यविवेकविषयासंजातदृढपूर्वश्रुतत्व–लोकचिन्तावेक्षण–जात्याद्यभिमानादीन् तत्प्रतिपक्षैः श्रुतिस्मृतिविहितैः अपनयेत् अक्रोधादिभिरहिंसादिभिश्च यमैः ज्ञानाविरुद्धैश्च नियमैः ॥ ४ ॥ अमानित्वादिगुणं च ज्ञानोपायं सम्यक् ग्राहयेत् ॥ ५ ॥ आचार्यस्तूहापोहग्रहणधारणशमदमदयानुग्रहादि-

संपन्नो लब्धागमो दृष्टादृष्टभोगेष्वनासक्तः त्यक्तसर्वशरी
धनो ब्रह्मवित् ब्रह्मणि स्थितोऽभिन्नवृत्तो दम्भदर्पकुहकमिच
मायामात्सर्यानृताहंकारममत्वादिदोषवर्जितः केवलपरानुग्रह
योजनो विद्योपयोगार्थी पूर्वमुपदिशेत्–'सदेव सोम्येदमग्र
सीदेकमेवाद्वितीयम्', 'यत्र नान्यत्पश्यति', 'आत्मैवेदं
'आत्मा वा इदमेक एवाग्र आसीत्', 'सर्वं खल्विदं ब्रह्म'
इत्याद्याः आत्मैक्यप्रतिपादनपराः श्रुतीः ॥ ६ ॥ उपदि
ग्राहयेत् ब्रह्मणो लक्षणम्–'य आत्माऽपहतपाप्मा', यत्
दपरोक्षाद्ब्रह्म', 'योऽशनायापिपासे', 'नेति नेति', 'अस्
नणु', 'स एष नेति', 'अदृष्टं द्रष्टृ',' विज्ञानमानन्दम्',
ज्ञानमनन्तम्', 'अदृश्येऽनात्म्ये', 'स वा एष महानज आ
'अप्राणो ह्यमनाः', 'सबाह्याभ्यन्तरो ह्यजः', 'विज्ञानघन
'अनन्तरमबाह्यम्', 'अन्यदेव तद्विदितादथो अविदिताद्
काशो वै नाम' इत्यादिश्रुतिभिः ॥७॥ स्मृतिभिश्च–'न
म्रियते वा', 'नादत्ते कस्यचित्पापम्', 'यथाऽकाश
नित्यम्', 'क्षेत्रज्ञं चापि मां विद्धि', 'न सत्तन्नासदुच्यते'
दित्वान्निर्गुणत्वात्', 'समं सर्वेषु भूतेषु', 'उत्तमः पुरुषः'
दिभिः श्रुत्युक्तलक्षणाविरुद्धाभिः परमात्मासंसारित्वप्रति
नपराभिः तस्य सर्वेणानन्यत्वप्रतिपादनपराभिश्च ॥ ८ ॥
श्रुतिस्मृतिभिः गृहीतपरमात्मलक्षणं शिष्यं संसारसागरा
तीर्षुं पृच्छेत् कस्त्वमसि सोम्येति ॥ ९ ॥ स यदि ब्रू
ब्राह्मणपुत्रः अदोन्वयः ब्रह्मचार्यासम्–गृहस्थो वा, इदानीं
परमहंसपरिव्राट् संसारसागरात् जन्ममृत्युमहाग्राहात् उ
पुरिति ॥ १० ॥ आचार्यो ब्रूयात् इहैव तव सोम्य

शरीरं वयोभिरद्यते मृद्भावं वापद्यते तत्र कथं संसारादुद्धर्तुमिच्छसीति । नहि नद्याः अवरे कूले भस्मीभूते नद्याः पारं तरिष्यसीति ॥ ११ ॥ स यदि ब्रूयात् अन्योऽहं शरीरात् । शरीरं तु जायते म्रियते वयोभिरद्यते शस्त्राग्न्यादिभिश्च विनाश्यते व्याध्यादिभिश्च प्रयुज्यते । तस्मिन् अहं स्वकृतधर्माधर्मवशात् पक्षी नीडमिव प्रविष्टः पुनःपुनः शरीरविनाशे धर्माधर्मवशात् शरीरान्तरं यास्यामि पूर्वनीडविनाशे पक्षीव नीडान्तरम्, एवमेवाहमनादौ संसारे देवमनुष्यतिर्यङ्निरयस्थानेषु स्वकर्मवशादुपात्तमुपात्तं शरीरं त्यजन् नवं नवं च अन्यदुपाददानो जन्ममरणप्रबन्धचक्रे घटीयन्त्रवत् स्वकर्मणा भ्राम्यमाणः क्रमेणेदं शरीरमासाद्य संसारचक्रभ्रमणात् अस्मान्निर्विण्णो भगवन्तमुपसन्नोऽस्मि संसारचक्रभ्रमणप्रशमाय । तस्मान्नित्य एवाहं शरीरादन्यः शरीराणि आगच्छन्त्यपगच्छन्ति च वासांसीव पुरुषस्येति ॥ १२ ॥ आचार्यो ब्रूयात् साध्ववादीः सम्यक्पश्यसि कथं मृषाऽवादीः ब्राह्मणपुत्रोऽदोन्वयो ब्रह्मचार्यासम्, गृहस्थो वा इदानीमस्मि परमहंसपरिव्राडिति ॥ १३ ॥ तं प्रति ब्रूयादाचार्यः स यदि ब्रूयात्—भगवन्, कथमहं मृषाऽवादिषमिति ॥ १४ ॥ यतस्त्वं भिन्नजात्यन्वयसंस्कारं शरीरं जात्यन्वयवर्जितस्यात्मनः प्रत्यभ्यज्ञासीः ब्राह्मणपुत्रोऽदोन्वय इत्यादिना वाक्येनेति ॥ १५ ॥ स यदि पृच्छेत् कथं भिन्नजात्यन्वयसंस्कारं शरीरं, कथं वा अहं जात्यन्वयसंस्कारवर्जित इति ॥ १६ ॥ आचार्यो ब्रूयात् शृणु सोम्य, यथेदं शरीरं त्वत्तो भिन्नं भिन्नजात्यन्वयसंस्कारं त्वं च जात्यन्वयसंस्कारवर्जितः इत्युक्त्वा तं स्मारयेत्—स्मर्तुमर्हसि सोम्य, परमात्मानं सर्वात्मानं

यथोक्तलक्षणं श्रावितोऽसि 'सदेव सोम्येदम्' इत्यात्म
श्रुतिभिः स्मृतिभिश्च । लक्षणं च तस्य श्रुतिभिः स्मृ
॥ १७ ॥ लब्धपरमात्मलक्षणस्मृतये ब्रूयात्—योऽसावा
नामा नामरूपाभ्यामर्थान्तरभूतः अशरीरः अस्थूलादि
अपहतपाप्मादिलक्षणश्च सर्वैः संसारधर्मैः अना
'यत्साक्षादपरोक्षाद्ब्रह्म', 'य आत्मा सर्वान्तरः', 'अदृ
अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता' नित्य
स्वरूपः 'अनन्तरः अबाह्यः विज्ञानघन एव' परिपूर्णः
वत् अनन्तशक्तिः आत्मा सर्वस्य अशनायादिवर्जितः
र्भावतिरोभाववर्जितश्च स्वात्मविलक्षणयोः नामरूपयोः
जभूतयोः स्वात्मस्थयोः तत्त्वान्यत्वाभ्यामनिर्वचनीययोः
वेद्ययोः सद्भावमात्रेणाचिन्त्यशक्तित्वाद्व्याकर्ता अव्या
॥ १८ ॥ ते नामरूपे अव्याकृते सती व्याक्रियमाणे
तस्मादात्मन आकाशनामाकृती संवृत्ते । तच्चाकाशा
मनेन प्रकारेण परमात्मनः संभूतं प्रसन्नादिव सलिला
फेनम् । न सलिलं न च सलिलादत्यन्तभिन्नं फेनम् ।
लव्यतिरेकेणादर्शनात् । सलिलं तु स्वच्छं अन्यत्फेना
पात् । एवं परमात्मा नामरूपाभ्यामन्यः फेनस्थानी
शुद्धः प्रसन्नः तद्विलक्षणः ते नामरूपे अव्याकृते सती
यमाणे फेनस्थानीये आकाशनामाकृती संवृत्ते ॥ १९
ऽपि स्थूलभावमापद्यमाने नामरूपे व्याक्रियमाणे वायु
पद्येते ततोऽप्यग्निभावं अग्नेरब्भावं ततः पृथ्विभावं इत्ये
पूर्वपूर्वानुप्रवेशेन पञ्चमहाभूतानि पृथिव्यन्तान्युत्प
ततः पञ्चमहाभूतगुणविशिष्टा पृथ्वी । पृथ्व्याश्च

स्तस्मक्यो व्रीहियवाद्या ओषधयो जायन्ते ताभ्यो भक्षिताभ्यो लोहितं च शुक्रं च स्त्रीपुंसशरीरसंबन्धि जायते । तदुभयमृतुकाले अविद्याप्रयुक्तकामखजनिर्मथनोद्धृतं मन्त्रसंस्कृतं गर्भाशये निषिच्यते । तत्स्वयोनिरसानुप्रवेशेन विवर्धमानं गर्भीभूतं नवमे दशमे वा मासि संजायते ॥ २० ॥ तज्जातं लब्धनामाकृतिकं जातकर्मादिभिः मन्त्रसंस्कृतं पुनः उपनयनसंस्कारयोगेन ब्रह्मचारिसंज्ञं भवति। तदेव शरीरं पत्नीयोगसंस्कारयोगेन गृहस्थसंज्ञं भवति । तदेव वनस्थसंस्कारेण तापससंज्ञं भवति । तदेव क्रियाविनिवृत्तिनिमित्तसंस्कारेण परिव्राट्संज्ञं भवति । इत्येवं त्वत्तो भिन्नं भिन्नजात्यन्वयसंस्कारं शरीरम् ॥ २१ ॥ मनश्चेन्द्रियाणि च नामरूपात्मकान्येव 'अन्नमयं हि सोम्य मनः' इत्यादिश्रुतिभ्यः ॥ २२ ॥ कथं चाहं भिन्नजात्यन्वयसंस्कारवर्जित इत्येतच्छृणु । योऽसौ नामरूपयोर्व्याकर्ता नामरूपधर्मविलक्षणः स एव नामरूपे व्याकुर्वन् सृष्ट्वेदं शरीरं स्वयं संस्कारधर्मवर्जितो नामरूपे इह प्रविष्टः अन्यैरदृष्टः स्वयं पश्यन् तथाऽश्रुतः शृण्वन्—अमतो मन्वानो—अविज्ञातो विजानन् 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' इति । अस्मिन्नर्थे श्रुतयः सहस्रशः 'तत्सृष्ट्वा तदेवानुप्राविशत्', 'अन्तः प्रविष्टः शास्ता जनानाम्', 'स एष इह प्रविष्टः', 'एष त आत्मा', 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत', 'एष सर्वेषु भूतेषु गूढोत्मा', 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः' इत्याद्याः ॥ २३ ॥ स्मृतयोऽपि 'आत्मैव देवताः सर्वाः', 'नवद्वारे पुरे देही', 'क्षेत्रज्ञं चापि मां विद्धि', 'समः सर्वेषु भूतेषु', 'उपद्रष्टानुमन्ता

चं', 'उत्तमः पुरुषस्त्वन्यः', 'अशरीरं शरीरेषु' इत्या
तस्मात् जात्यन्वयसंस्कारवर्जितस्त्वमिति सिद्धम् ॥ २४ ॥
यदि ब्रूयात्—अन्य एवाहमज्ञः सुखी दुःखी बद्धः संसा
न्योऽसौ मद्विलक्षणः असंसारी देवः तमहं बल्युपहारन
रादिभिः वर्णाश्रमकर्मभिश्चाराध्य संसारसागरादुत्तितीर्षा
कथमहं स एवेति ॥ २५ ॥ आचार्यो ब्रूयात्—'नैवं त्वम
प्रतिपत्तुमर्हसि प्रतिषिद्धत्वाद्भेदप्रतिपत्तेः' कथं प्रतिषिद्धा इत्ये
प्रतिपत्तिरित्यत आह—'अन्योऽसावन्योऽहमस्मीति न स
'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद', 'मृत्योः स मृत्यु
मोति य इह नानेव पश्यति' इत्येवमाद्या ॥ २६ ॥ एता
श्रुतयो भेदप्रतिपत्तेः संसारगमनं दर्शयन्ति ॥ २७ ॥ अ
तिपत्तेश्च मोक्षं दर्शयन्ति सहस्रशः 'स आत्मा तत्त्वमसि'
परमात्मभावं विधाय 'आचार्यवान्पुरुषो वेद' इत्युक्त्वा
तावदेव चिरम्' इति मोक्षं दर्शयन्त्यभेदविज्ञानादेव सत्या
संधस्यातस्करस्येव दाहाद्यभाववत् संसाराभावं दर्शयन्ति
न्तेन—भेददर्शनादसत्याभिसंधस्य संसारगमनं दर्शयन्ति त
रस्येव दाहादिदृष्टान्तेन ॥ २८ ॥ 'त इह व्याघ्रो वा' इत्या
ना च अभेददर्शनात् 'स स्वराट् भवति' इत्युक्त्वा तद्विपर्य
भेददर्शनेन संसारगमनं दर्शयन्ति—'अथ येऽन्यथाऽतो विदु
राजानस्तेऽक्षय्यलोका भवन्ति' इति प्रतिशाखम्। तस्मात्
वमवादीः ब्राह्मणपुत्रोऽदोन्वयः संसारी परमात्मविलक्षणः
॥२९॥ तस्मात् प्रतिषिद्धत्वाद्भेददर्शनस्य भेदविषयत्वाच्च
पादानस्य कर्मसाधनत्वाच्च यज्ञोपवीतादेः कर्मसाधनोपादा
परमात्माऽभेदप्रतिपत्त्या प्रतिषेधः कृतो वेदितव्यः।

तत्साधनानां च यज्ञोपवीतादीनां परमात्माभेदप्रतिपत्तिविरुद्धत्वात्। संसारिणो हि कर्माणि विधीयन्ते तत्साधनानि च यज्ञोपवीतादीनि। न परमात्मनोऽभेददर्शिनः। भेददर्शनमात्रेण च ततोऽन्यत्वम्॥३०॥यदि कर्माणि कर्तव्यानि न निवर्तयिषितानि कर्मसाधनासंबन्धिनः कर्मनिमित्तजात्याश्रमाद्यसंबन्धिनश्च परमात्मनश्च आत्मनैवाभेदप्रतिपत्तिं नावक्ष्यत् 'स आत्मा तत्त्वमसि' इत्येवमादिभिर्निश्चितरूपैर्वाक्यैः, भेदप्रतिपत्तिनिन्दां च नाभ्यधास्यत् 'एष नित्यो महिमा ब्राह्मणस्य', 'अनन्वागतं पुण्येनानन्वागतं पापेन, अत्र स्तेनोऽस्तेनः' इत्यादिना ॥ ३१ ॥ कर्मासंबन्धिस्वरूपत्वं कर्मनिमित्तवर्णाद्यसंबन्धरूपतां च नाभ्यधास्यत् कर्माणि च कर्मसाधनानि च यज्ञोपवीतादीनि यद्यपरित्याजयिषितानि तस्मात् ससाधनं कर्म परित्यक्तव्यं मुमुक्षुणा परमात्माऽभेददर्शनविरोधात् आत्मा च पर एवेति प्रतिपत्तव्यो यथाश्रुत्युक्तलक्षणः ॥३२ ॥ स यदि ब्रूयात् भगवन्, दह्यमाने छिद्यमाने वा देहे प्रत्यक्षा वेदना—अशनायादिनिमित्तं च प्रत्यक्षं दुःखं मम। परश्चायमात्मा, 'अयमात्माऽपहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासः सर्वगन्धरसवर्जितः' श्रूयते सर्वश्रुतिषु स्मृतिषु। कथं तद्विलक्षणः अनेकसंसारधर्मसंयुक्तः परमात्मानमात्मत्वेन च मां संसारिणं परमात्मत्वेन अग्निमिव शीतत्वेन प्रतिपद्येयम्। संसारी च सन् सर्वाभ्युदयनिःश्रेयससाधने अधिकृतः अभ्युदयनिःश्रेयससाधनानि कर्माणि तत्साधनानि च यज्ञोपवीतादीनि कथं परित्यजेयमिति ॥ ३३ ॥ तं प्रति ब्रूयात्—यदवोचो दह्यमाने छिद्यमाने वा देहे प्रत्यक्षा वेदनोपलभ्यते ममेति तदसत्। कस्मात्। दह्यमाने

छिद्यमान इव वृक्षे उपलब्धुरुपलभ्यमाने कर्मणि शरीरादौ च्छेदवेदनाया उपलभ्यमानत्वात् दाहादिसमानाश्रयैव यत्र हि दाहः छेदो वा क्रियते तत्रैव व्यपदिशति दाहकृतां वेदनां लोकः न वेदनां दाहाद्युपलब्धरीति । कथं । क्व ते वेदनेति पृष्टः शिरसि मे वेदना उरसि उदरे इति वा यत्र दाहादिस्तत्रैव व्यपदिशति न तूपलब्धरीति । यद्युपलब्धरि स्यात् वेदनानिमित्तं वा दाहच्छेदादि वेदनाश्रयत्वेन दिशेद्दाहाद्याश्रयवत् ॥ ३४ ॥ स्वयं च नोपलभ्येत चक्षूरूपवत् । तस्मात् दाहच्छेदादिसमानाश्रयत्वेन उपलभ्यमानत्वाद्दाहादिवत् कर्मभूतैव वेदना । भावरूपत्वाच्च साश्रया तण्डुलपाकवत् । वेदनासमानाश्रय एव तत्संस्कारः । स्मृतिकाल एवोपलभ्यमानत्वात् वेदनाविषयः । तन्निमित्तश्च द्वेषोऽपि संस्कारसमानाश्रय एव । तथा चोक्तम् 'रूपसंस्कारतुल्याऽऽधी रागद्वेषौ भयं च यत् । गृह्यते धीश्रयं तस्माज्ज्ञाता शुद्धोऽभयः सदा' ॥ ३५ ॥ किमाश्रयाः पुनः रूपादिसंस्कारादय इति । उच्यते । यत्र कामादयः । क्व पुनस्ते कामादयः 'कामः संकल्पो विचिकित्सा' इत्यादिश्रुतेः बुद्धावेव । रूपादिसंस्कारादयोऽपि 'कस्मिन्नु रूपाणि प्रतिष्ठितानि हृदये' इति श्रुतेः—'कामा येऽस्य हृदि श्रिताः', 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य', 'असङ्गो ह्ययम्', 'तद्वा अस्यैतदतिच्छन्दाः' इत्यादिश्रुतिभ्यः, 'अविकार्योऽयमुच्यते', 'अनादित्वान्निर्गुणत्वात्' इत्यादि । इच्छाद्वेषादि च क्षेत्रस्यैव विक्रियाधर्मो नात्मन इति स्मृतिभ्यश्च कर्मस्थैवाशुद्धिः नात्मस्था ॥ ३६ ॥ अतो रूपादिसंस्काराद्यशुद्धिसंबन्धाभावात् न

ादात्मनो विलक्षणस्त्वमिति प्रत्यक्षादिविरोधाभावात् युक्तं र एवात्माऽहमिति प्रतिपत्तुम्—'तदात्मानमेवावेदहं ब्रह्मास्मि', एकधैवानुद्रष्टव्यम्', 'अहमेवाऽधस्तात्', 'आत्मैवाऽधस्तात्', सर्वमात्मानं पश्येत्' 'यत्र त्वस्य सर्वमात्मैव', 'इदं सर्वं यदय- आत्मा', 'स एषोऽकलः', 'अनन्तरमबाह्यम्', 'सबाह्याभ्यन्तरो जः', 'ब्रह्मैवेदम्', 'एतया द्वारा प्रापद्यत', 'प्रज्ञानस्य नाम- यानि', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'तस्माद्वा', 'तत्सृष्ट्वा तदे- ानुप्राविशत्', 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी', 'अश- रं शरीरेषु', 'न जायते म्रियते', 'स्वप्नान्तं जागरितान्तम्', स म आत्मेति विद्यात्', 'यस्तु सर्वाणि भूतानि', 'तदेजति नैजति', 'वेनस्तत्पश्यन्', 'तदेवाग्निः', अहं मनुरभवं सूर्यश्च', अन्तः प्रविष्टः शास्ता जनानाम्', 'सदेव सोम्य', 'तत्सत्यं स आत्मा तत्त्वमसि' इत्यादिश्रुतिभ्यः ॥ ३७ ॥ स्मृतिभ्यश्च—'पूः ाणिनः सर्वगुहाशयम्', 'आत्मैव देवताः', 'नवद्वारे पुरे', समं सर्वेषु भूतेषु', 'विद्याविनयसंपन्ने', 'अविभक्तं विभक्ते- ', 'वासुदेवः सर्वम्' इत्यादिभ्यः एक एवात्मा परं ब्रह्म सर्व- संसारधर्मविनिर्मुक्तस्त्वमिति सिद्धम् ॥ ३८ ॥ स यदि ब्रूयात् यदि भगवन्, 'अनन्तरोऽबाह्यः' 'सबाह्याभ्यन्तरो ह्यजः' कृत्स्नः प्रज्ञानघन एव' सैन्धवघनवदात्मा सर्वमूर्तिभेदवर्जितः आकाशवदेकरसः तर्हि किमिदं दृश्यते श्रूयते वा साध्यं साधनं ा साधकश्चेति श्रुतिस्मृतिलोकप्रसिद्धं वादिशतविप्रतिपत्तिविषय ति ॥ ३९ ॥ आचार्यो ब्रूयात्—अविद्याकृतमेतद्यदिदं दृश्यते श्रूयते वा, परमार्थतस्त्वेक एवात्मा अविद्यादृष्टेः अनेकवत् आभासते, तिमिरदृष्ट्या अनेकचन्द्रवत् 'यत्र वा अन्यदिव

स्यात्', 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति', 'मृत्योः स मृत्युमाप्नोति', 'अथ यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पम् अथ यदल्पं तन्मर्त्यमिति', 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्,' 'अन्योऽसावन्योऽहमस्मि' इति भेददर्शननिन्दोपपत्तेरविद्याकृतं द्वैतम् 'एकमेवाद्वितीयम्', 'यत्र त्वस्य', 'को मोहः कः शोकः' इत्याद्येकत्वविधिश्रुतिभ्यश्चेति ॥ ४० ॥ यद्येवं भगवन्, किमर्थं श्रुत्या साध्यसाधनादिभेद उच्यते उत्पत्तिः प्रलयश्चेति ॥ ४१ ॥ उच्यते-अविद्यावत उपात्तशरीरादिभेदस्य इष्टानिष्टयोगिनमात्मानं मन्यमानस्य साधनैरेवेष्टानिष्टप्राप्तिपरिहारोपायक्रमजानतः इष्टप्राप्तिं चानिष्टपरिहारं चेच्छतः शनैस्तद्विषयाज्ञानं निवर्तयितुं शास्त्रं न साध्यसाधनादिभेदं विधत्ते । अनिष्टरूपः संसारो हि स इति तद्भेददृष्टिमेवाविद्यां संसारमूलं वियोजयति उत्पत्तिप्रलयाद्येकत्वोपपत्तिप्रदर्शनेन ॥ ४२ ॥ अविद्यायामुन्मूलितायां श्रुतिस्मृतिन्यायेभ्यः 'अनन्तरमबाह्यम्', 'सबाह्याभ्यन्तरो ह्यजः', 'सैन्धवघनवत्', 'प्रज्ञानघन एवायमात्मा', 'आकाशवत्परिपूर्णः' इत्यत्रैव एका प्रज्ञाप्रतिष्ठा परमार्थदर्शिनो भवति न साध्यसाधनोत्पत्तिप्रलयादिभेदेनाशुद्धिगन्धोऽभ्युपपद्यते ॥ ४३ ॥ तच्चैतत् परमार्थदर्शनं प्रतिपत्तुमिच्छता वर्णाश्रमाद्यभिमानकृतपाङ्क्तरूप-पुत्रवित्तलोकैषणादिभ्यो व्युत्थानं कर्तव्यम् । सम्यक्प्रत्ययविरोधात्तदभिमानस्य भेददर्शनप्रतिषेधार्थोपपत्तिश्चोपपद्यते । नह्येकस्मिन्नात्मन्यसंसारित्वबुद्धौ शास्त्रन्यायोत्पादितायां तद्विपरीता बुद्धिर्भवति नह्यग्नौ शीतत्वबुद्धिः शरीरे वा अजरामरणबुद्धिः । तस्मा-

त्माकार्यत्वात् सर्वकर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमार्थदर्शननिष्ठेन त्यागः कर्तव्यः ॥ ४४ ॥

॥ इति शिष्यप्रतिबोधनविधिर्नाम प्रथमप्रकरणं विवृतम् ॥ १ ॥

## कूटस्थाद्वयात्मबोधप्रकरणम् ॥ २ ॥

सुखमासीनं ब्राह्मणं ब्रह्मनिष्ठं कश्चिद्ब्रह्मचारी जन्ममरणलक्षणात् संसारात् निर्विण्णो मुमुक्षुः विधिवदुपसन्नः पप्रच्छ—भगवन्, कथमहं संसारान्मोक्षिष्ये शरीरेन्द्रियविषयवेदनावान् जागरिते दुःखमनुभवामि तथा स्वप्नेऽनुभवामि च पुनः पुनः सुषुप्तिप्रतिपत्त्या विश्रम्य विश्रम्य, किमयमेव मम स्वभावः किंवा अन्यस्वभावस्य सतो नैमित्तिकः इति । यदि स्वभावः न मोक्षाशा स्वभावस्यावर्जनीयत्वात् । अथ नैमित्तिक निमित्तपरिहारे स्यान्मोक्षोपपत्तिः ॥ ४५ ॥ तं गुरुरुवाच—शृणु वत्स, न तवायं स्वभावः । नैमित्तिकः ॥ ४६ ॥ इति उक्तः शिष्य उवाच—किं निमित्तं, किं वा तस्य निवर्तकम्, को वा मम स्वभावः यस्मिन्निमित्ते निवर्तिते नैमित्तिकाभावः रोगनिमित्तनिवृत्ताविव रोगी स्वभावं प्रपद्येयेति ॥ ४७ ॥ गुरुरुवाच—अविद्यानिमित्तं, विद्या तस्य निवर्तिका, अविद्यायां निवृत्तायां तन्निमित्ताभावात् मोक्ष्यसे जन्ममरणलक्षणात्, स्वप्नजाग्रद्दुःखं च नानुभविष्यसीति ॥ ४८ ॥ शिष्य उवाच—का सा अविद्या, किंविषया वा, विद्या च का यया स्वभावं प्रतिपद्येयेति ॥ ४९ ॥ गुरुरुवाच—त्वं परमात्मानं सन्तं असंसारिणं संसार्यहमस्मीति विपरीतं प्रतिपद्यसे, अकर्तारं सन्तं कर्तेति, अभोक्तारं सन्तं भोक्तेति, विद्यमानं च अविद्यमानमिति, इयमविद्या ॥ ५० ॥ शिष्य उवाच—यद्यप्यहं विद्य-

मानः तथापि न परमात्मा, कर्तृत्वभोक्तृत्वलक्षणः संसा
स्वभावः, प्रत्यक्षादिभिः प्रमाणैः अनुभूयमानत्वात् । न
द्यानिमित्तः अविद्यायाः स्वात्मविषयत्वानुपपत्तेः ।
नाम अन्यस्मिन् अन्यधर्माध्यारोपणा—यथा प्रसिद्धं रजत
द्धायां शुक्तिकायां, यथा प्रसिद्धं पुरुषं स्थाणावध्यारो
प्रसिद्धं वा स्थाणुं पुरुषे । नाप्रसिद्धं प्रसिद्धे प्रसिद्धं चाप्र
नत्वात्मन्यनात्मानमध्यारोपयति आत्मनः अप्रसिद्ध
तथा आत्मानं अनात्मनि आत्मनोऽप्रसिद्धत्वादेव ॥
तं गुरुरुवाच—न, व्यभिचारात् । नहि वत्स, प्रसिद्धं
एवाध्यारोपयतीति नियन्तुं शक्यम् । आत्मन्यध्यारोप
नात् । गौरोऽहं कृष्णोऽहमिति देहधर्मस्य अहंप्रत्य
आत्मनि, अहंप्रत्ययविषयस्य च आत्मनः देहे अयम
॥ ५२ ॥ शिष्य आह—प्रसिद्ध एव तर्ह्यात्मा अहंप्रत्य
यतया देहश्च अयमिति । तत्रैवंसति प्रसिद्धयोरेव देहात्म
तरेतराध्यारोपणात् स्थाणुपुरुषयोः शुक्तिकारजतयोरि
कं विशेषमाश्रित्य भगवतोक्तं प्रसिद्धयोरितरेतराध्या
नियन्तुं न शक्यते इति ॥ ५३ ॥ गुरुराह—शृणु
प्रसिद्धौ देहात्मानौ नतु स्थाणुपुरुषाविव विविक्तप्रत्य
तया सर्वलोकप्रसिद्धौ । कथं तर्हि नित्यमेव निरंतरा
प्रत्ययविषयतया । नहि अयं देहः, अयमात्मा, इति वि
भ्यां प्रत्ययाभ्यां देहात्मानौ गृह्णाति यतः कश्चित्
हि मोमुह्यते लोकः आत्मानात्मविषये एवमात्मा नै
इति । इमं विशेषमाश्रित्यावोचं नैवं नियन्तुं शक्यमिति
ननु अविद्याऽध्यारोपितं यत्र यत् तदसत् तत्र दृष्टं यथा

शुक्तिकायां, स्थाणौ पुरुषं, रज्ज्वां सर्पः, आकाशे तलमलिनत्वमित्यादि, तथा–देहात्मनोरपि नित्यमेव निरन्तराविविक्तप्रत्ययतया इतरेतराध्यारोपणा कृता स्यात् तदितरेतरयोः नित्यमेव असत्त्वे स्यात् । यथा शुक्तिकादिषु अविद्याध्यारोपितानां रजतादीनां नित्यमेव अत्यन्तासत्त्वं तद्विपरीतानां च विपरीतेषु तद्वत् देहात्मनोरविद्ययैव इतरेतराध्यारोपणा कृता स्यात् । तत्रैवंसति देहात्मनोरसत्त्वं प्रसज्येत । तच्चानिष्टं वैनाशिकपक्षत्वात् । अथ तद्विपर्ययेण देहः आत्मन्यविद्ययाऽध्यारोपितः देहस्यात्मनि सति असत्त्वं प्रसज्येत । तच्चानिष्टं प्रत्यक्षादिविरोधात् । तस्माद्देहात्मानौ नाविद्यया इतरेतरस्मिन् अध्यारोपितौ कथं तर्हि वंशस्तम्भवन्नित्यसंयुक्तौ ॥ ५५ ॥ न । अनित्यत्वपरार्थप्रसङ्गात्–संहतत्वात् परार्थत्वं अनित्यत्वं च वंशस्तम्भादिवदेव । किंच यस्तु परैर्देहेन संहतः कल्पित आत्मा स संहतत्वात् परार्थः । तेन असंहतः परोऽन्यो नित्यः सिद्धस्तावत् ॥ ५६ ॥ तस्यासंहतस्य देहे देहमात्रतया अध्यारोपितत्वेन असत्त्वानित्यत्वादिदोषप्रसङ्गो भवति । तत्र निरात्मको देह इति वैनाशिकपक्षप्राप्तिदोषः स्यात् ॥ ५७ ॥ न स्वत एवात्मनः आकाशस्येव असंहतत्वाभ्युपगमात् सर्वेणासंहतः स च आत्मेति न निरात्मको देहादिः सर्वः स्यात् । तथाच आकाशं सर्वेणासंहतमिति सर्वं न निराकाशं भवति एवम् । तस्मान्न वैनाशिकपक्षप्राप्तिदोषः स्यात् ॥ ५८ ॥ यत्पुनरुक्तं देहस्यात्मन्यसत्त्वे प्रत्यक्षादिविरोधः स्यादिति । तन्न । प्रत्यक्षादिभिः आत्मनि देहस्य सत्त्वानुपलब्धेः । नह्यात्मनि कुण्डे बदरं क्षीरे सर्पिः तिले तैलं भित्तौ चित्रमिव च प्रत्यक्षा-

दिभिः देह उपलभ्यते । तस्मान्न प्रत्यक्षादिविरोधः ॥
कथं तर्हि प्रत्यक्षाद्यप्रसिद्धात्मनि देहाध्यारोपणा, दे
आत्मारोपणा ॥ ६० ॥ नायं दोषः । स्वभावप्रसिद्धत्वा
नः । नहि कादाचित्कसिद्धावेव अध्यारोपणा न नित्य
इति नियन्तुं शक्यं, आकाशे तलमलाद्यध्यारोपणा
॥ ६१ ॥ किं भगवन्, देहात्मनोः इतरेतराध्यारोपणा
दिसंघातकृता अथवा आत्मकृतेति ॥ ६२ ॥ गुरुरुवाच
देहादिसंघातकृता यदि वा आत्मकृता किं तत्र स्यात् ॥
इत्युक्तः शिष्य आह- यद्यहं देहादिसंघातमात्रः ततो
तनत्वात् परार्थत्वमिति न मत्कृता देहात्मनोः इतरेतरा
पणा । अथाहमात्मा परोऽन्यः संघातात् चितिमत्त्वात्
इति मयैव चितिमता आत्मनि अध्यारोपणा क्रियते स
बीजभूता ॥ ६४ ॥ इत्युक्तो गुरुरुवाच–अनर्थबीजभूतां
मिथ्याध्यारोपणां जानीषे मा कार्षीस्तर्हि ॥६५॥ नैव भ
शक्नोमि न कर्तुम् । अन्येन केनचित् प्रयुक्तोऽहं न
इति ॥ ६६ ॥ न तर्हि अचितिमत्त्वात् स्वार्थः त्वम्
प्रयुक्तः अस्वतन्त्रः प्रवर्तसे स चितिमान् स्वार्थः संघात
त्वम् ॥ ६७ ॥ यद्यचेतनोऽहं कथं सुखदुःखवेदनां भवदु
जानामि ॥ ६८ ॥ गुरुरुवाच–किं सुखदुःखवेदनाया
च्चान्यस्त्वं, किं वा अनन्य एवेति ॥ ६९ ॥ शिष्य उ
नाहं तावदनन्यः । कस्मात् । यस्मात्तदुभयं कर्मभूतं घटा
मिव जानामि, यद्यनन्योऽहं तेन तदुभयं न जानीयां,
जानामि तस्मादन्यः । सुखदुःखवेदनाविक्रिया च
प्राप्नोति त्वदुक्तं च स्यात् । अनन्यत्वे न च तयोः

युक्ता । नहि चन्दनकण्टककृते सुखदुःखे चन्दनकण्टकार्थे घटोपयोगो वा घटार्थः । तस्मात् तद्विज्ञातुर्मम चन्दनादिकृतः अर्थः । अहं हि ततोऽन्यः समस्तमर्थं जानामि बुद्ध्यारूढम् ॥ ७० ॥ तं गुरुरुवाच—एवं तर्हि स्वार्थस्त्वं चितिमत्त्वान्न परेण प्रयुज्यसे । नहि चितिमान् परतन्त्रः परेण प्रयुज्यते—चितिमतश्चितिमदर्थत्वानुपपत्तेः समत्वात्प्रदीपप्रकाशयोरिव । नापि अचितिमदर्थत्वं चितिमतो भवति, अचितिमतोऽचितिमत्त्वादेव स्वार्थसंबन्धानुपपत्तेः । नापि अचितिमतोः अन्योन्यार्थत्वं दृष्टम् । नहि काष्ठकुड्ये अन्योन्यार्थं कुर्वाते ॥ ७१ ॥ ननु चितिमत्त्वे समेऽपि भृत्यस्वामिनोः अन्योन्यार्थत्वं दृष्टम् ॥७२॥ नैवं—अग्नेरुष्णप्रकाशवत् तव चितिमत्त्वस्य विवक्षितत्वात् प्रदर्शितश्च दृष्टान्तः प्रदीपप्रकाशयोरिति । तत्रैवंसति स्वबुद्ध्यारूढमेव सर्वमुपलभसे अग्न्युष्णप्रकाशतुल्येन कूटस्थनित्यचैतन्यस्वरूपेण यदि चैवमात्मनः सर्वदा निर्विशेषत्वमुपगच्छसि । किमित्यूचिवान् सुषुप्ते विश्रम्य विश्रम्य जाग्रत्स्वप्नयोः दुःखमनुभवामि इति । किं अयमेव मम स्वभावः किंवा नैमित्तिकः इति च । किमसौ व्यामोहोऽपगतः किंवा नेति ॥ ७३ ॥ इत्युक्तः शिष्य आह—भगवन्, अपगतः त्वत्प्रसादात् व्यामोहः किंतु मम कूटस्थतायां संशयः कथम्—शब्दादीनां स्वतः सिद्धिर्नास्ति अचेतनत्वात्—शब्दाद्याकारप्रत्ययोत्पत्तेस्तु तेषाम् प्रत्ययानामितरेतरव्यावृत्तविशेषणानां नीलपीताद्याकारवतां स्वतः सिद्ध्यसंभवात् । तस्माद्बाह्याकारनिमित्तत्वं गम्यते इति बाह्याकारवत् शब्दाद्याकारत्वसिद्धिः । तथा प्रत्ययानामपि अहंप्रत्ययालम्बनवस्तुभेदानां संहतत्वात् अचैतन्योपपत्तेः स्वार्थत्वासं-

भवात्–स्वरूपव्यतिरिक्तग्राहकग्राह्यत्वेन सिद्धिः शब्दादिफ
असंहतत्वे सति चैतन्यात्मकत्वात् स्वार्थोऽपि अहंप्रत्ययक्रि
नीलपीताद्याकाराणामुपलब्धेति विक्रियावानेव कूटस्थ कथं
संशयः ॥ ७४ ॥ तं गुरुरुवाच–न युक्तस्तव संशयः । यस्मा
पां प्रत्ययानां नियमेन अशेषतः उपलब्धेरेव अपरिणामित्व
कूटस्थत्वसिद्धौ निश्चयहेतुमेव अशेषचित्तप्रचारोपलब्धिं संशय
हेतुमात्थ । यदि हि तव परिणामित्वं स्यात् अशेषस्वविषयचि
त्तप्रचारोपलब्धिर्न स्यात् चित्तस्येव स्वविषये । यथा चेन्द्रिया
णां स्वविषयेषु । नच तथाऽऽत्मनस्तव स्वविषयैकदेशोपलब्धिः
अतः कूटस्थतैव तवेति ॥ ७५ ॥ तत्राह—उपलब्धिर्नाम धात्व
र्थो विक्रियैव उपलब्धुः कूटस्थात्मता चेति विरुद्धम् ॥ ७६ ॥
न धात्वर्थविक्रियायां उपलब्ध्युपचारात् । यो हि बौद्धः प्रत्य
यः स धात्वर्थो विक्रियात्मकः आत्मनः उपलब्ध्याभासफला
वसान इति उपलब्धिशब्देन उपचर्यते । यथा छिदिक्रिया
द्वैधीभावफलावसानेति धात्वर्थेन उपचर्यते तद्वत् ॥ ७७ ॥
इत्युक्तः शिष्य आह–ननु भगवन्, मम कूटस्थत्वप्रतिपादनं
प्रति असमर्थो दृष्टान्तः कथम्, छिदिः छेद्यविक्रियावसाना
उपचर्यते–यथा धात्वर्थत्वेन तथा उपलब्धिशब्दोऽपचरितः
धात्वर्थो बौद्धप्रत्ययः आत्मनः उपलब्धिविक्रियावसानः
नात्मनः कूटस्थतां प्रतिपादयितुं समर्थः ॥ ७८ ॥ गुरुराह
–सत्यमेवं स्यात् यदि उपलब्ध्युपलब्धोः विशेषः । नित्योपल
ब्धिमात्र एव हि उपलब्धा नतु तार्किकसमय इव अन्या उप
लब्धिः अन्यः उपलब्धा च ॥ ७९ ॥ ननु उपलब्धिफलावसा
नो धात्वर्थः कथमिति ॥ ८० ॥ उच्यते–शृणु–उपलब्ध्या

सफलावसान इत्युक्तं किं न श्रुतं तत् त्वया, नतु आत्मा विक्रियोत्पादनावसान इति मयोक्तम् ॥ ८१ ॥ शिष्य उवाच–कथं तर्हि कूटस्थे मयि अशेषस्वविषयचित्तप्रचारोपलब्धृत्वमित्यात्थ ॥ ८२ ॥ तं गुरुरुवाच–सत्यमवोचं, तेनैव कूटस्थतामब्रुवं तव ॥ ८३ ॥ यद्येवं भगवन्, कूटस्थनित्योपलब्धिस्वरूपे मयि शब्दाद्याकारबौद्धप्रत्ययेषु च मत्स्वरूपोपलब्ध्याभासफलावसानवत्सु उत्पद्यमानेषु कस्त्वपराधो मम ॥ ८४ ॥ सत्यम् नास्त्यपराधः किंतु अविद्यामात्रस्तु अपराध इति प्रागेवावोचम् ॥ ८५ ॥ यदि भगवन्, सुषुप्त इव मम विक्रिया नास्ति कथं स्वप्नजागरिते ॥ ८६ ॥ तं गुरुरुवाच–किंत्वनुभूयेते त्वया सततम् ॥ ८७ ॥ बाढम् अनुभवामि, किंतु विच्छिद्यविच्छिद्य नतु सततम् ॥ ८८ ॥ तं गुरुरुवाच—तर्हि आगन्तुके त्वेते न तवात्मभूते, यदि तवात्मभूते चैतन्यस्वरूपवत् स्वतःसिद्धे संतते एव स्याताम् । किंच स्वप्नजागरिते न तव आत्मभूते व्यभिचारित्वात् वस्त्रादिवत् । नहि यस्य यत्स्वरूपं तत् तद्व्यभिचारि दृष्टम् । स्वप्नजागरिते तु चैतन्यमात्रत्वाद्व्यभिचरतः । सुषुप्ते चेत् स्वरूपं व्यभिचरेत् तन्नष्टं नास्तीति वा बाध्यमेव स्यात् आगन्तुकानां अतद्धर्माणां उभयात्मकत्वदर्शनात् यथा धनवस्त्रादीनां नाशो दृष्टः स्वप्नभ्रान्तिलब्धानां तु अभावो दृष्टः ॥८९॥ नन्वेवं भगवन्, चैतन्यस्वरूपमपि आगन्तुकं प्राप्तम् । स्वप्नजागरितयोरिव सुषुप्ते अनुपलब्धेः । अचैतन्यस्वरूपो वा स्यामहम् ॥ ९० ॥ न पश्य तदनुपपत्तेः । चैतन्यस्वरूपं चेत् आगन्तुकं पश्यसि, पश्य । नैतद्वर्षशतेनापि उपपत्त्या कलयितुं शक्नुमो वयम्, अन्यो वाऽचैतन्योऽपि संहतत्वात् पारार्थ्यं अनेकत्वं

नाशित्वं च न केनचित् उपपत्त्या वारयितुं शक्यम् ।
स्य स्वतःसिद्धभावादित्यवोचाम । चैतन्यस्वरूपस्य तु
स्वतःसिद्धेः अन्यानपेक्षत्वं न केनचित् वारयितुं शक्यम्
व्यभिचारात् ॥ ९१ ॥ ननु व्यभिचारो दर्शितो मया
पश्यामीति ॥ ९२ ॥ न व्याहतत्वात् । कथं व्याघातः
तस्तत्र न पश्यामि इति व्याहतं वचनम् । नहि कदाचित्
वन्, सुषुप्ते मया चैतन्यं अन्यद्वा किंचित् दृष्टम् । पश्य
सुषुप्ते त्वम् यस्मात् दृष्टमेव प्रतिषेधसि न दृष्टिम् । या तव
तत् चैतन्यमिति मयोक्तम् । यया त्वं विद्यमानया न
दृष्टमिति प्रतिषेधसि सा दृष्टिः त्वच्चैतन्यम् । तर्हि सर्वत्र
भिचारात् कूटस्थनित्यत्वं सिद्धं स्वत एव न प्रमाणापे
स्वतःसिद्धस्य हि प्रमातुः अन्यस्य प्रमेयस्य परिच्छि
प्रमाणापेक्षा । या तु अन्या नित्यापरिच्छित्तिः अपेक्ष्यते
स अपरिच्छित्तिरूपस्य परिच्छेदाय सा हि नित्यैव
स्वयंज्योतिःस्वभावा, आत्मनि प्रमाणत्वे प्रमातृत्वे वा
प्रति प्रमाणापेक्षा, तत्स्वभावत्वात् । यथा प्रकाशनं उष्ण
लोहोदकादिषु परतः अपेक्षते अग्न्यादित्यादिभ्यः
तत्स्वभावत्वात् न अग्न्यादित्यादीनां तदपेक्षा सर्वदा
भावत्वात् ॥ ९३ ॥ अनित्यत्वे एव प्रमा स्यात् न
इति चेत् ॥ ९४ ॥ न । अवगतेः नित्यत्वानित्यत्वयोः
नुपपत्तेः । नहि अवगतेः प्रमात्वे अनित्या अवगतिः
नित्या इति विशेषः अवगम्यते ॥ ९५ ॥ नित्यायां
अपेक्षाभावः । अनित्यायां तु यत्नान्तरितत्वात् अवगतिः
क्ष्यत इति विशेषः स्यात् इति चेत् ॥ ९६ ॥ सिद्धा तर्हि

त्मनः प्रमातुः स्वतःसिद्धिः प्रमाणनिरपेक्षतयैवेति ॥ ९७ ॥ अभावेऽपि अपेक्षाऽभावः नित्यत्वात् इति चेत् न । अवगतेरेव आत्मनि सद्भावादिति परिहृतमेतत् ॥ ९८ ॥ प्रमातुश्चेत् प्रमाणापेक्षासिद्धिः कस्य प्रमित्सा स्यात् । यस्य प्रमित्सा स एव प्रमाता अभ्युपगम्यते तदीया च प्रमित्सा प्रमेयविषयैव न प्रमातृविषया । प्रमातृविषयत्वे अनवस्थाप्रसङ्गात् । प्रमातुः तदिच्छायाश्च तस्याप्यन्यः प्रमाता तस्याप्यन्य इति एवमेव इच्छायाः प्रमातृविषयत्वे प्रमातुरात्मनः अव्यवहितत्वाच्च प्रमेयत्वानुपपत्तिः । लोके हि प्रमेयं नाम प्रमातुः इच्छा–स्मृति–प्रयत्न–प्रमाणजन्म–व्यवहितं सिद्ध्यति नान्यथा । अवगतिः प्रमेयविषया दृष्टा । नच प्रमातुः प्रमाता स्वस्य स्वयमेव केनचित् व्यवहितः कल्पयितुं शक्यः इच्छादीनामन्यतमेनापि । स्मृतिश्च स्मर्तव्यविषया न स्मर्तृविषया । तथा इच्छायाः इष्टविषयत्वमेव न इच्छावद्विषयत्वम् स्मर्त्रिच्छावद्विषयत्वेऽपि हि उभयोः अनवस्था पूर्ववदपरिहार्या स्यात् ॥ ९९ ॥ ननु प्रमातृविषयावगत्यनुत्पत्तौ अनवगत एव प्रमाता स्यादिति चेत् ॥ १०० ॥ न, अवगन्तुः अवगतेः अवगन्तव्यविषयत्वात् अवगन्तृविषयत्वे च अनवस्था पूर्ववत् स्यात् । अवगतिश्च आत्मनि कूटस्थनित्यात्मज्योतिः अन्यतः अन्यतः अनपेक्षैव सिद्धा अग्न्यादित्याद्युष्णप्रकाशवदिति पूर्वमेव प्रसाधितम् । अवगतेः चैतन्यात्मज्योतिषः स्वात्मनि अनित्यत्वे आत्मनः स्वार्थतानुपपत्तिः कार्यकारणसंघातवत् संहतत्वात् पारार्थ्यं दोषवत्त्वं च अवोचाम । कथम् । चैतन्यात्मज्योतिषः स्वात्मनि अनित्यत्वे स्मृत्यादिव्यवधानात् सान्तरत्वम् । ततश्च तस्य चैतन्यज्योतिषः प्रागुत्प-

त्तेः प्रध्वंसाच्चोर्ध्व आत्मन्येव अभावात् चक्षुरादीनामिव
त्वात् पारार्थ्यं स्यात् । यदा च तत् उत्पन्नं आत्मनि सिद्ध
तदा आत्मनः स्वार्थत्वम् तद्भावाभावापेक्षा हि आत्मान
स्वार्थत्वपरार्थत्वसिद्धिः । तस्मात् आत्मनः अन्यनि
नित्यचैतन्यज्योतिष्ट्वं सिद्धम् ॥ १०१ ॥ ननु एवं सति
प्रमाऽश्रयत्वे कथं प्रमातुः प्रमातृत्वम् ॥ १०२ ॥ उच्यते
प्रमायाः नित्यत्वे अनित्यत्वे च रूपविशेषाभावात् ।
हिं प्रमा तस्याः स्मृतीच्छादिपूर्विकायाः अनित्यायाः
त्याया वा न स्वरूपविशेषो विद्यते । यथा धात्वर्थस्य
फलस्य गत्यादिपूर्वकस्य अनित्यस्य अपूर्वस्य नित्यस्य
विशेषो नास्तीति तुल्यो व्यपदेशो दृष्टः तिष्ठन्ति मनुष्याः
ष्ठन्ति पर्वताः इत्यादि । तथा नित्यावगतिस्वरूपेऽपि
प्रमातृत्वव्यपदेशो न विरुध्यते फलसामान्यादिति ॥
अत्राह शिष्यः—नित्यावगतिस्वरूपस्य आत्मनः अविक्रि
कार्यकरणैः असंहत्य तक्षादीनामिव वास्यादिभिः कर्तृ
पद्यते, असंहतस्वभावस्य च कार्यकरणोपादाने अनव
ज्यते, न तु तक्षादीनां कार्यकरणैः नित्यमेव संहतत्वा
त्युपादाने नानवस्था स्यादिति ॥ १०४ ॥ इह तु अस
भावस्य करणानुपादाने कर्तृत्वं नोपपद्यत इति करणं उपा
—तदुपादानमपि विक्रियैवेति तत्कर्तृत्वे करणान्तरमुपा
तदुपादानेऽपि अन्यदिति प्रमातुः स्वातन्त्र्ये अनवस्था
हार्या स्यात् इति । नच क्रियैव आत्मानं कारयति अनि
तायाः स्वरूपाभावात् । अथ अन्यत् आत्मानं उपेत्य
कारयतीति चेत् । न । अन्यस्य स्वतःसिद्धत्वाविषयत्वादि

ः । नहि आत्मनः अन्यत् अचेतनं वस्तु स्वप्रमाणकं दृष्टम् ।
ब्दादिसर्वमेव अवगतिफलावसानप्रत्ययप्रमितं सिद्धं स्यात्
वगतिश्चेदात्मनोऽन्यस्य स्यात् सोऽपि आत्मैव असंहतः स्वार्थः
नात् न परार्थः । नच देहेन्द्रियविषयाणां स्वार्थतां अवगन्तुं
क्नुमः । अवगत्यवसानप्रत्ययाऽपेक्षसिद्धिदर्शनात् ॥ १०५ ॥
नु देहस्यावगतौ न कश्चित् प्रत्यक्षादिप्रत्ययान्तरं अपेक्षते
॥ १०६ ॥ बाढम् । जाग्रति एवं स्यात् । मृतिसुषुप्त्योस्तु देह-
ापि प्रत्यक्षादिप्रमाणापेक्षैव सिद्धिः तथैव इन्द्रियाणां बाह्या
व हि शब्दादयो देहेन्द्रियाकारपरिणता इति प्रत्यक्षादिप्रमा-
ापेक्षैव हि सिद्धिः । सिद्धिरिति च प्रमाणफलं अवगतिं अवो-
ाम । सा च अवगतिः कूटस्था स्वयंसिद्धाऽत्मज्योतिःस्वरूपेति
॥ १०७ ॥ अत्राह चोदकः । अवगतिः प्रमाणानां फलं
टस्थनित्यात्मज्योतिःस्वरूपेति च विप्रतिषिद्धम् इत्युक्तवन्त-
ाह—न विप्रतिषिद्धम् । कथं तर्हि कूटस्था नित्यापि सती
त्यक्षादिप्रत्ययान्ते लक्ष्यते तादर्थ्यात् । प्रत्यक्षादिप्रत्ययस्य
नित्यत्वे अनित्येव भवति तेन प्रमाणानां फलं इति उपचर्य-
॥ १०८ ॥ यद्येवं भगवन्! कूटस्थनित्यावगतिः आत्मज्यो-
तिःस्वरूपैव स्वयंसिद्धा आत्मनि प्रमाणनिरपेक्षत्वात् ततोऽन्यतः
अचेतनं संहत्यकारित्वात् परार्थं येन च सुखदुःखमोहप्रत्यया-
गतिरूपेण पारार्थ्यं तेनैव स्वरूपेण अनात्मनः अस्तित्वं ना-
न्येन रूपान्तरेण, अतो नास्तित्वमेव परमार्थतः । यथा हि
लोके रज्जुसर्पमरीच्युदकादीनां तदवगतिव्यतिरेकेण अभावो
दृष्टः एवं जाग्रत्स्वप्नद्वैतभावस्यापि तदवगतिव्यतिरेकेण अभावो
युक्तः एवमेव परमार्थतः भगवन्, अवगतेः आत्मज्योतिषः

मनजात्रु...



नैरन्तर्यभावात् कूटस्थनित्यता अद्वैतभावश्च सर्वप्रत्य
अव्यभिचारात् प्रत्ययभेदाश्च अवगतिं व्यभिचरन्ति ।
स्वप्ने नीलपीताद्याकारभेदरूपाः प्रत्ययाः तदवगतिं व्यभि
न्तः परमार्थतो न सन्तीत्युच्यन्ते एवं जाग्रत्यपि नील
प्रत्ययभेदाः तामेवावगतिं व्यभिचरन्तः असत्यरूपाः भ
र्हन्ति । तस्याश्च अवगतेः अन्यः अवगन्ता नास्तीति
स्वरूपेण स्वयं उपादातुं हातुं वा शक्यते अन्यस्य च अ
॥ १०९ ॥ तथैवेति । एषा अविद्या यन्निमित्तः संसारो
त्स्वप्नलक्षणः । तस्याः अविद्यायाः विद्या निवर्तिका ।
त्वं अभयं प्राप्तोपि नातः परं जाग्रत्स्वप्नदुःखमनुभ
संसारदुःखान्मुक्तोसीति ॥ ११० ॥ ओमिति ॥ ११
इति कूटस्थाद्वयात्मबोधनामकं अवगतिप्रकरणं द्वितीयं विवृतम्

अथ परिसंख्यानप्रकरणं तृतीयम् ॥ ३ ॥

मुमुक्षूणां उपात्तपुण्यापुण्यक्षपणपराणां अपूर्वानुपचय
परिसंख्यानमिदमुच्यते अविद्याहेतवो दोषाः वाङ्मनःका
त्तिहेतवः-प्रवृत्तेश्च इष्टानिष्टमिश्रफलानि कर्माणि उप
इति तन्मोक्षार्थम् ॥ ११२ ॥ तत्र शब्दस्पर्शरूपरसग
श्रोत्रादिग्राह्यत्वात् स्वात्मनि परेषु वा विज्ञानाभावः,
परिणतानां यथा लोष्टादीनां श्रोत्रादिद्वारैश्च ज्ञायन्ते,
ज्ञायन्ते सः ज्ञातृत्वात् अतज्जातीयः, ते हि शब्दाद
न्योन्यसंसर्गित्वात् जन्मवृद्धिविपरिणामापक्षयनाशसंयोग
गाविर्भावतिरोभावविकारविकारिक्षेत्रबीजाद्यनेकधर्माणः
मान्येन च सुखदुःखाद्यनेककर्माणः तद्विज्ञातृत्वादेव त
सर्वशब्दादिधर्मविलक्षणः ॥ ११३ ॥ तत्र शब्दादिभिः

(ल)भ्यमानैः पीड्यमानो विद्वान् एवं परिसंचक्षीत ॥ ११४ ॥ (श)ब्दस्तु ध्वनिसामान्यमात्रेण विशेषधर्मैर्वा षड्जादिभिः प्रियैः (स्)तुत्यादिभिः इष्टैः अनिष्टैश्च असत्यबीभत्सपरिभवाऽऽक्रोशादि-(भि)र्वचनैः मां दृक्स्वभावं असंसर्गिणं अविक्रियं अचलं अनि-(ध)नं अभयं अत्यन्तसूक्ष्मं अविषयं गोचरीकृत्य स्प्रष्टुं नैवार्हति (अ)संसर्गित्वादेव माम् । अतएव न शब्दनिमित्ता हानिः वृद्धिर्वा (अ)तो मां किं करिष्यति स्तुतिनिन्दादिप्रियाप्रियत्वादिलक्षणः (श)ब्दः। अविवेकिनं हि शब्दं आत्मत्वेन गतं प्रियः शब्दो वर्धयेत् (अ)प्रियश्च क्षपयेत् अविवेकित्वात्, नतु मम विवेकिनो वाला-(ग्र)मात्रमपि कर्तुमुत्सहत इति, एवमेव स्पर्शसामान्येन तद्विशेषैश्च (श)ीतोष्णमृदुकर्कशादि–ज्वरोदरशूलादिलक्षणैश्च अप्रियैः प्रियैश्च (क)श्चित् शरीरसमवायिभिः बाह्यागन्तुकनिमित्तैश्च न मम का-(चि)त् विक्रिया वृद्धिहानिलक्षणा अस्पर्शत्वात् क्रियते व्योम्न (इ)व मुष्टिघातादिभिः । तथा रूपसामान्येन तद्विशेषैश्च प्रिया-(प्रि)यैः स्त्रीव्यञ्जनादिलक्षणैः अरूपत्वात् न मम काचित् हानिः (वृ)द्धिर्वा क्रियते। तथा रससामान्येन तद्विशेषैश्च प्रियाप्रियैः मधु-(रा)म्ललवणकटुतिक्तकषायैः मूढबुद्धिभिः परिगृहीतैः अरसा-(त्)मकस्य मम न काचित् हानिः वृद्धिर्वा क्रियते । तथा गन्ध-(स)ामान्येन तद्विशेषैः प्रियाप्रियैः पुष्पाद्यनुलेपनादिलक्षणैः (अ)गन्धात्मकस्य न मम काचित् हानिः वृद्धिर्वा क्रियते–'अश-(ब्)दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्' इति (श्र)ुतेः ॥ ११५ ॥ किंच य एव बाह्याः शब्दादयः ते शरीरा-(का)रेण संस्थिताः तद्ग्राहकैश्च श्रोत्राद्याकारैः अन्तःकरणद्वयतद्वि-(ष)याकारेण च अन्योन्यसंसर्गित्वात् संहतत्वाच्च सर्वक्रियासु तत्र

एवं सति विदुषो मम न कश्चित् शत्रुः मित्रं उदासीनो पुनः
अस्ति, तत्र यदि कश्चित् मिथ्याज्ञानाभिमानेन प्रियं वा
वा प्रयुयुक्षेत क्रियाफललक्षणं तन्मृषैव प्रयुयुक्षते सः तद्विनिः
पयत्वान्मम—'अव्यक्तोऽयमचिन्त्योऽयं, इति स्मृतेः तत
सर्वेषां पञ्चानामपि भूतानां अविकार्यः अविषयत्वात् द्वेष
द्योऽयमदाह्योऽयं' इति स्मृतेः । यापि शरीरेन्द्रियसंस्थान
मुपलक्ष्य मद्भक्तानां विपरीतानां च क्रियाऽक्रियादि
तज्जा च धर्माधर्मादिप्राप्तिः सा तेषामेव नतु मयि अजरे
अभये 'नैनं कृताकृते तपतः', 'न कर्मणा वर्धते नो
न्—', 'स बाह्याभ्यन्तरो ह्यजः', 'न लिप्यते लोकदुःखेन
इत्यादिश्रुतिस्मृतिभ्यः अनात्मवस्तुनश्च असत्त्वात् इति
हेतुः । आत्मनश्च अद्वयत्वविषयाणि द्वयस्यासत्वात् यानि
उपनिषद्वाक्यानि विस्तरशः समीक्षितव्यानि समी
नीति ॥ ११६ ॥ इति श्रीमच्छंकरभगवत्पादकृतौ उप
हस्र्यां गद्यप्रबन्धः समाप्तः ॥

---

## उपदेशसाहस्री (पद्यप्रबन्धः) ॥ ३३ ॥

### उपोद्घातप्रकरणम् ॥ १ ॥

चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् । यत्सर्वविष
तस्मै सर्वविदे नमः ॥ १ ॥ समापय्य क्रियाः सर्वा दा
धानपूर्विकाः । ब्रह्मविद्यामथेदानीं वक्तुं वेदः प्रचक्रमे
कर्माणि देहयोगार्थं देहयोगे प्रियाप्रिये । ध्रुवे स्यातां ततो
द्वेषश्चैव ततः क्रियाः ॥ ३ ॥ धर्माधर्मौ ततो ज्ञस्य देहयो

पुनः । एवं नित्यप्रवृत्तोऽयं संसारश्चक्रवद्भृशम् ॥ ४ ॥ अज्ञानं तस्य मूलं स्यादिति तद्धानमिष्यते । ब्रह्मविद्यात आरब्धा ततो निःश्रेयसं भवेत् ॥ ५ ॥ विद्यैवाज्ञानहानाय न कर्माप्रतिकूलतः । नाज्ञानस्याप्रहाणे हि रागद्वेषक्षयो भवेत् ॥ ६ ॥ रागद्वेषक्षयाभावे कर्म दोषोद्भवं ध्रुवम् । तस्मान्निःश्रेयसार्थाय विद्यैवात्र विधीयते ॥ ७ ॥ ननु कर्म तथा नित्यं कर्तव्यं जीवने सति । विद्यायाः सहकारित्वं मोक्षं प्रति हि तद्व्रजेत् ॥ ८ ॥ यथा विद्या तथा कर्म चोदितत्वाविशेषतः । प्रत्यवायस्मृतेश्चैव कार्यं कर्म मुमुक्षुभिः ॥९॥ ननु ध्रुवफला विद्या नान्यत्किंचिदपेक्षते । नाग्निष्टोमो यथैवान्यद्ध्रुवकार्योऽप्यपेक्षते ॥ १० ॥ तथा ध्रुवफला विद्या कर्म नित्यमपेक्षते । इत्येवं केचिदिच्छन्ति न कर्म प्रतिकूलतः ॥ ११ ॥ विद्यायाः प्रतिकूलं हि कर्म स्यात्साभिमानतः । निर्विकारात्मबुद्धिश्च विद्येतीह प्रकीर्तिता ॥ १२ ॥ अहं कर्ता ममेदं स्यादिति कर्म प्रवर्तते । वस्त्वधीना भवेद्विद्या कर्त्रधीनो भवेद्विधिः ॥ १३ ॥ कारकाण्युपमृद्नाति विद्या बुद्धिमिवोषरे । इति तत्सत्यमादाय कर्म कर्तुं व्यवस्यति ॥ १४ ॥ विरुद्धत्वादतः शक्यं कर्म कर्तुं न विद्यया । सहैव विदुषा तस्मात्कर्म हेयं मुमुक्षुणा ॥ १५ ॥ देहाद्यैरविशेषेण देहिनो ग्रहणं निजम् । प्राणिनां तदविद्योत्थं तावत्कर्मविधिर्भवेत् ॥ १६ ॥ नेतिनेतीति देहादीनपोह्यात्मावशेषितः । अविशेषात्मबोधार्थं तेनाविद्या निवर्तिता ॥ १७ ॥ निवृत्ता सा कथं भूयः प्रसूयेत प्रमाणतः । असत्येवाविशेषेऽपि प्रत्यगात्मनि केवले ॥ १८ ॥ न चेद्भूयः प्रसूयेत कर्ता भोक्तेति धीः कथम् । सदस्मीति च विज्ञाने तस्माद्विद्याऽसहायिका ॥ १९ ॥

अत्यरेचयदित्युक्तो न्यासः श्रुत्यात एव हि । कर्मभ्यो
न्तेभ्य एतावदिति वाजिनाम् ॥ २० ॥ अमृतत्वं श्रुतं
त्याज्यं कर्म मुमुक्षुभिः । अग्निष्टोमवदित्युक्तं तत्रेदमभि
॥ २१ ॥ नैककारकसाध्यत्वात्फलान्यत्वाच्च कर्मणः ।
तद्विपरीततो दृष्टान्तो विषमो भवेत् ॥ २२ ॥ कृष्यादि
लार्थत्वादन्यकर्मोपबृंहणम् । अग्निष्टोमस्त्वपेक्षेत विद्यान्या
पेक्षते ॥ २३ ॥ प्रत्यवायस्तु तस्यैव यस्याहंकार इष्यते ।
कारफलार्थित्वे विद्येते नात्मवेदिनः ॥ २४ ॥ तस्मादज्ञा
नाय संसारविनिवृत्तये । ब्रह्मविद्याविधानाय प्रारब्धो
त्त्वियम् ॥ २५ ॥ सदेरुपनिपूर्वस्य क्विपि चोपनिपद्भवेत् ।
करणभावाच्च गर्भादेः शातनात्तथा ॥ २६ ॥ इति प्रथ
द्धातप्रकरणम् ॥ १ ॥

प्रतिषेधप्रकरणम् ॥ २ ॥

प्रतिषेद्धुमशक्यत्वान्नेतिनेतीति शेषितम् । इदं नाहमिदं
मित्यद्धा प्रतिपद्यते ॥ १ ॥ अहंधीरिदमात्मोत्था वाच
णगोचरा । निषिद्धात्मोद्भवत्वात्सा न पुनर्मानतां व्रजेत्
पूर्वबुद्धिमबाधित्वा नोत्तरा जायते मतिः । दृशिरेकः स्वयं
फलत्वात्स न बाध्यते ॥ ३ ॥ इदं वनमतिक्रम्य शोक
दिदूषितम् । वनाद्गान्धारको यद्वत्स्वात्मानं प्रतिपद्यते ॥
इति द्वितीयं आत्मज्ञानोत्पत्तिविधिप्रकरणम् ॥ २ ॥

ईश्वरात्मप्रकरणम् ॥ ३ ॥

ईश्वरश्चेदनात्मा स्यान्नासावस्मीति धारयेत् । आत्मा
श्वरोऽस्मीति विद्या सान्यनिवर्तिका ॥ १ ॥ आत्मनो

चेद्धर्मा अस्थूलत्वादयो मताः । अज्ञेयत्वेऽस्य किं तैः स्यादात्मत्वे ह्यन्यधीह्नुतिः ॥ २ ॥ मिथ्याध्यासनिषेधार्थं ततोऽस्थूलादि गृह्यताम् । परत्र चेन्निषेधार्थं शून्यतावर्णनं हि तत् ॥ ३ ॥ बुभुत्सोर्यदि चान्यत्र प्रत्यगात्मन इष्यते । अप्राणो ह्यमनाः शुभ्र इति चानर्थकं वचः ॥ ४ ॥ इति तृतीयं ईश्वरात्मप्रकरणम् ॥ ३ ॥

## तत्त्वज्ञानस्वभावप्रकरणम् ॥ ४ ॥

अहंप्रत्ययबीजं यदहंप्रत्ययवत्स्थितम् । नाहंप्रत्ययवद्दुष्टं कथं कर्म प्ररोहति ॥ १ ॥ दृष्टवच्चेत्प्ररोहः स्यान्नान्यकर्मा स इष्यते । तन्निरोधे कथं तत्स्यात्पृच्छामो वस्तदुच्यताम् ॥ २ ॥ देहाद्यारम्भसामर्थ्याज्ज्ञानं सद्विषयं त्वयि । अभिभूय फलं कुर्यात्कर्मान्ते ज्ञानमुद्भवेत् ॥ ३ ॥ आरब्धस्य फले ह्येते भोगो ज्ञानं च कर्मणः । अविरोधस्तयोर्युक्तो वैधर्म्यं चेतरस्य तु ॥ ४ ॥ देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् । आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते । ततः सर्वमिदं सिद्धं प्रयोगोऽस्माभिरीरितः ॥ ५ ॥ इति चतुर्थं तत्त्वज्ञानस्वभावप्रकरणम् ॥ ४ ॥

## बुद्ध्यपराधप्रकरणम् ॥ ५ ॥

मूत्राशङ्को यथोदङ्को नाग्रहीदमृतं यथा । कर्मनाशभयाज्जन्तोरात्मज्ञानाग्रहस्तथा ॥ १ ॥ बुद्धिस्थश्चलतीवात्मा ध्यायतीव च दृश्यते । नौगतस्य यथा वृक्षास्तद्वत्संसारविभ्रमः ॥ २ ॥ नौस्थस्य प्रातिलोम्येन नगानां गमनं यथा । आत्मनः संसृतिस्तद्वद्ध्यायतीवेति हि श्रुतिः ॥ ३ ॥ चैतन्यप्रतिबिम्बेन व्याप्तो बोधो हि जायते । बुद्धेः शब्दादिभिर्भासस्तेन मोमुह्यते जगत्

॥ ४ ॥ चैतन्यभास्वताहमस्तादर्थ्यं च तदस्य यत् । द्रष्टा
ग्रहाणेन परः सोऽनुभवो भवेत् ॥ ५ ॥ इति पंचमं बुद्ध्युद्बो-
धप्रकरणम् ॥ ५ ॥

## विशेषापोहप्रकरणम् ॥ ६ ॥

छित्त्वा त्यक्तेन हस्तेन स्वयं नात्मा विशिष्यते । वि-
शिष्टेन सर्वेण येन येन विशेष्यते ॥ १ ॥ तस्मात्त्यक्तेन
तुल्यं सर्वं विशेषणम् । अनात्मत्वेन तस्माज्ज्ञो मुक्तः सर्वविशे-
षणैः ॥ २ ॥ विशेषणमिदं सर्वं साध्वलंकरणं यथा । अवि-
द्याध्यासतः सर्वं ज्ञात आत्मन्यसद्भवेत् ॥ ३ ॥ ज्ञातैव
सदा ग्राह्यो ज्ञेयमुत्सृज्य केवलः । अहमित्यपि यद्ग्राह्यं
ङ्गसमं हि तत् ॥ ४ ॥ यावान्स्यादिदमंशो यः स स्वतो
विशेषणम् । विशेषप्रक्षयो यत्र सिद्धो ज्ञश्चित्रगुर्यथा ॥
इदमंशोऽहमित्यत्र त्याज्यो नात्मेति पण्डितैः । अहं
शिष्टांशो भूतपूर्वगतेर्भवेत् ॥ ६ ॥ इति षष्ठं विशेषापोहप्र-
करणम् ॥ ६ ॥

## बुद्ध्यारूढप्रकरणम् ॥ ७ ॥

बुद्ध्यारूढं सदा सर्वं दृश्यते यत्र तत्र वा । मया त
ब्रह्म सर्वज्ञश्चास्मि सर्वगः ॥ १ ॥ यथात्मबुद्धिचाराणां
तद्वत्परेष्वपि । नैवापोढुं न वा दातुं शक्यस्तस्मात्परो
॥ २ ॥ विकारित्वमशुद्धत्वं भौतिकत्वं न चात्मनः ।
बुद्धिसाक्षित्वाद्बुद्धिवच्चाल्पवेदना ॥ ३ ॥ मणौ प्रकाश्य
द्रक्ताद्याकारतातपे । मयि संदृश्यते सर्वमातपेनेव तन्मया
बुद्धौ दृश्यं भवेद्बुद्धौ सत्यां नास्ति विपर्यये । द्रष्टा यस्मा

द्रष्टा तस्माद्द्वैतं न विद्यते ॥ ५॥ अविवेकात्पराभावं यथा बुद्धिरवैत्तथा। विवेकात्तु परादन्यः स्वयं चापि न विद्यते ॥ ६ ॥ इति सप्तमं बुद्ध्यारूढप्रकरणम् ॥ ७ ॥

## मतिविलापनप्रकरणम् ॥ ८॥

चितिस्वरूपे स्वत एव मे मते रसादियोगस्तव मोहकारितः। अतो न किंचित्तव चेष्टितेन मे फलं भवेत्सर्वविशेषहानतः॥१॥ विमुच्य मायामयकार्यतामिह प्रशान्तिमायाह्यसदीहितात्सदा। अहं परंब्रह्म सदा विमुक्तवत्तथाजमेकं द्वयवर्जितं यतः ॥ २ ॥ सदा च भूतेषु समोऽस्मि केवलो यथा च खं सर्वगमक्षरं शिवं। निरंतरं निष्कलमक्रियं परं ततो न मेऽस्तीह फलं तवेहितैः॥३॥ अहं ममैको न तदन्यदिष्यते तथा न कस्याप्यहमस्म्यसङ्गतः। असङ्गरूपोऽहमतो न मे त्वया कृतेन कार्यं तव चाद्वयत्वतः ॥ ४ ॥ फले च हेतौ च जनो विषक्तवानिति प्रचिन्त्याहमतो विमोक्षणे। जनस्य संवादमिमं प्रक्लृप्तवान्स्वरूपतत्त्वार्थविबोधकारणम् ॥ ५ ॥ संवादमेतं यदि चिन्तयन्नरो विमुच्यते ज्ञानमहाभयागमात्। विमुक्तकामश्च तथा जनः सदा चरत्यशोकः सम आत्मवित्सुखी ॥ ६ ॥ इति अष्टमं मतिविलापनप्रकरणम् ॥ ८ ॥

## सूक्ष्मताव्यापिताप्रकरणम् ॥ ९ ॥

सूक्ष्मताव्यापिते ज्ञेये गन्धादेरुत्तरोत्तरम्। प्रत्यगात्मावसानेषु पूर्वपूर्वप्रहाणतः ॥ १ ॥ शारीरा पृथिवी तावद्यावद्बाह्या प्रमाणतः। अम्ब्वादीनि च तत्त्वानि तावज्ज्ञेयानि कृत्स्नशः ॥ २ ॥ वाय्वादीनां यथोत्पत्तेः पूर्वं खं सर्वगं तथा। अहमेकः

अस्तोसीखां ...



सदा सर्वश्चिन्मात्रः सर्वगोऽद्वयः ॥ ३ ॥ ब्रह्माद्याः स्थावरा
ये प्राणिनो मम पूः स्मृताः । कामक्रोधादयो दोषा वकर्म
कुतोऽन्यतः ॥ ४ ॥ भूतदोषैः सदाऽस्पृष्टं सर्वभूतस्थमलिप्त
नीलं व्योम यथा वालो दुष्टं मां वीक्षते जनः ॥ ५ ॥ सम
न्यावभास्यत्वात्सर्वप्राणिधियां सदा । पूर्मम प्राणिनस्तथ
सर्वज्ञस्य विपाप्मनः ॥ ६ ॥ जनिमज्ज्ञानविज्ञेयं स्वप्नभाव
दिष्यते । नित्यं निर्विषयं ज्ञानं तस्माद्वैतं न विद्यते ॐ दिश
ज्ञातुर्ज्ञातिर्हि नित्योक्ता सुषुप्ते त्वन्यशून्यतः ॥ जाग्रज्ज्ञा ॥ ७
विद्यातस्तद्ग्राह्यं चासदिष्यताम् ॥ ८ ॥ रूपवत्त्वाच्छ्रुते
दृष्यादेः कर्मता यथा । एवं विज्ञानकर्मत्वं भूम्नो दृश्य
गम्यते ॥ ९ ॥ इति नवमं सूक्ष्मताव्यापिताप्रकरणम् ॥ न
चा

## दृशिस्वरूपपरमार्थदर्शनप्रकरणम् ॥ १० ॥

दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकम् तत्र
अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्त ॐ वेद
दृशिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषय द्वयं
वतः । पुरस्तिरश्चोर्ध्वमधश्च सर्वतः संपूर्णभूमा त्वज यः
स्थितः ॥२॥ अजोऽमरश्चैव तथाजरोऽमृतः स्वयंप्रभः मा
ऽहमद्वयम् । न कारणं कार्यमतीव निर्मलः सदैकतृप्तश्च तदा न्या
क्त ॐ ॥३॥ सुषुप्तजाग्रत्स्वपतश्च दर्शनं न मेऽस्ति किंचिन्न इति
मोहनम् । स्वतश्च तेषां परतोऽप्यसत्वतस्तुरीय एवास्मि
गद्वयः ॥ ४ ॥ शरीरबुद्धीन्द्रियदुःखसंततेर्न मे न च त्व
निर्विकारतः । असत्त्वहेतोश्च तथैव संततेरसत्त्वमस्याः किं
हि दृश्यवत् ॥ ५ ॥ इदं तु सत्यं मम नास्ति विक्रिया घटे
रहेतुर्न हि मेऽद्वयत्वतः । न पुण्यपापे न च मोक्षबन्ध

चास्ति वर्णाश्रमताऽशरीरतः ॥ ६ ॥ अनादितो निर्गुणतो न
कर्म मे फलं च तस्मात्परमोऽहमद्वयः । यथा नभः सर्वगतं न
लिप्यते तथा ह्यहं देहगतोऽपि सूक्ष्मतः ॥ ७ ॥ सदा च भूतेषु
समोऽहमीश्वरः क्षराक्षराभ्यां परमो ह्यथोत्तमः । परात्मतत्त्वश्च
तथाद्वयोऽपि सन्विपर्ययेणाभिमतस्त्वविद्यया ॥ ८ ॥ अविद्यया
भावनया च कर्मभिर्विविक्त आत्माऽव्यवधिः सुनिर्मलः । दृगा-
दिशक्तिप्रचितोऽहमद्वयः स्थितः स्वरूपे गगनं यथा चलम्
॥ ९ ॥ अहं परं ब्रह्म विनिश्चयात्मदृङ् न जायते भूय इति
श्रुतेर्वचः । न चैव बीजे त्वसति प्रजायते फलं न जन्मास्ति ततो
ह्यमोहता ॥१०॥ ममेदमित्थं च तथेदमीदृशं तथाहमेवं न परो
न चान्यथा । विमूढतैवं न जनस्य कल्पना सदा समे ब्रह्मणि
चाद्वये शिवे ॥ ११ ॥ यदद्वयं ज्ञानमतीव निर्मलं महात्मनां
तत्र न शोकमोहता । तयोरभावे न हि कर्म जन्म वा भवेदयं
वेदविदां विनिश्चयः ॥ १२ ॥ सुषुप्तवज्जाग्रति यो न पश्यति
द्वयं तु पश्यन्नपि चाद्वयत्वतः । तथा च कुर्वन्नपि निष्क्रियश्च
यः स आत्मविन्नान्य इतीह निश्चयः ॥ १३ ॥ इतीदमुक्तं पर-
मार्थदर्शनं मया हि वेदान्तविनिश्चितं परम् । विमुच्यतेऽस्मि-
न्यदि निश्चितो भवेन्न लिप्यते व्योम इवेह कर्मभिः ॥ १४ ॥
इति दशमं दृशिस्वरूपपरमार्थदर्शनप्रकरणम् ॥ १० ॥

## ईक्षितृत्वप्रकरणम् ॥ ११ ॥

ईक्षितृत्वं स्वतःसिद्धं जन्तूनां च ततोऽन्यता । अज्ञानादि-
त्यतोऽन्यत्वं सदसीति निवर्त्यते ॥ १ ॥ एतावद्ध्यमृतत्वं न
किंचिदन्यत्सहायकम् । ज्ञानस्येति ब्रुवच्छास्त्रं सलिङ्गं कर्म बा-
धते ॥ २ ॥ सर्वेषां मनसो वृत्तमविशेषेण पश्यतः । तस्य मे

निर्विकारस्य विशेषः स्यात्कथंचन ॥ ३ ॥ मनोवृत्तं म
स्वप्नवज्जाग्रतीक्षितुः । संप्रसादे द्वयासत्त्वाच्चिन्मात्रः सर्वो
यः ॥ ४ ॥ स्वप्नः सत्यो यथा बोधाद्देहात्मत्वं तथैव
प्रत्यक्षादेः प्रमाणत्वं जाग्रत्स्यादात्मवेदनात् ॥ ५ ॥
त्सर्वभूतस्थो भूतदोषैर्विवर्जितः । साक्षी चेताऽगुणः शुद्धो
चास्मीति केवलः ॥ ६ ॥ नामरूपक्रियाभ्योऽन्यो नित्य
स्वरूपवान् । अहमात्मा परं ब्रह्म चिन्मात्रोऽहं सदाद्वयः ।
अहं ब्रह्मास्मि कर्ता च भोक्ता चास्मीति ये विदुः । ते
ज्ञानकर्मभ्यां नास्तिकाः स्युर्न संशयः ॥ ८ ॥ धर्माधर्म
योग इष्टो दृष्टो यथात्मनः । शास्त्राद्ब्रह्मत्वमप्यस्य मोक्षो
त्तथेष्यताम् ॥ ९ ॥ या महारजनाद्यास्ता वासनाः स्वप्न
भिः । अनुभूयन्त एवेह ततोऽन्यः केवलो दृशिः ॥ १
कोशादिव विनिष्कृष्टः कार्यकारणवर्जितः । यथासिर्दृश्यते
तद्वद्बोद्धा स्वयंप्रभः ॥ ११ ॥ आपेपात्प्रतिबुद्धस्य ज्ञस्य
विकं पदम् । उक्तं नेत्यादिवाक्येन कल्पितस्यापनेतृणा ॥
महाराजादयो लोका मयि यद्वत्प्रकल्पिताः । स्वप्ने त
विद्याद्रूपं वासनया सह ॥ १३ ॥ देहलिङ्गात्मना कार्या
नारूपिणा क्रियाः । नेतिनेत्यात्मरूपत्वान्न मे कार्या
कचित् ॥ १४ ॥ न ततोऽमृतताशास्ति कर्मणोऽज्ञानहे
मोक्षस्य ज्ञानहेतुत्वान्न तदन्यदपेक्षते ॥ १५ ॥ अमृतं
नार्तं नेतीत्यात्मा प्रियो मम । विपरीतमतोऽन्यद्यस्त्यजे
क्रियं ततः ॥ १६ ॥ इति एकादशमीक्षितृत्वप्रकरणम् ॥

## प्रकाशप्रकरणम् ॥ १२ ॥

प्रकाशस्थं यथा देहं सालोकमभिमन्यते । द्रष्टाभासं

चित्तं द्रष्टाहमिति मन्यते ॥ १ ॥ यदेव दृश्यते लोके तेनाभिन्नत्वमात्मनः । प्रपद्यते ततो मूढस्तेनात्मानं न विन्दति ॥२॥ दशमस्य नवात्मत्वप्रतिपत्तिवदात्मनः । दृश्येषु तद्वदेवायं मूढो लोको न चान्यथा ॥ ३ ॥ त्वं कुरु त्वं तदेवेति प्रत्ययावेककालिकौ । एकनीडौ कथं स्यातां विरुद्धौ न्यायतो वद ॥ ४ ॥ देहाभिमानिनो दुःखं नादेहस्य स्वभावतः । स्वापवत्तत्प्रहाणाय तत्त्वमित्युच्यते दृशेः ॥ ५ ॥ दृशेश्छाया यदारूढा मुखच्छायेव दर्शने । पश्यंस्तं प्रत्ययं योगी दृष्ट आत्मेति मन्यते ॥ ६ ॥ तं च मूढं च यद्यन्यं प्रत्ययं वेत्ति नो दृशेः । स एव योगिनां श्रेष्ठो नेतरः स्यान्न संशयः ॥ ७ ॥ विज्ञातेर्यस्तु विज्ञाता स त्वमित्युच्यते यतः । स स्यादनुभवस्तस्य ततोऽन्योऽनुभवो मृषा ॥ ८ ॥ दृशिरूपे सदानित्ये दर्शनादर्शने मयि । कथं स्यातां ततो नान्य इष्यतेऽनुभवस्ततः ॥ ९ ॥ यत्स्थस्तापो रवेर्देहे दृशेः स विषयो यथा । सत्त्वस्थस्तद्वदेवेह दृशेः स विषयस्तथा ॥१०॥ प्रतिषिद्धे दृगंशोऽज्ञः स्वमिवैकरसोऽद्वयः । नित्यमुक्तः सदाशुद्धः सोऽहं ब्रह्मास्मि केवलः ॥ ११ ॥ विज्ञातुर्नैव विज्ञाता परोऽन्यः संभवत्यतः । विज्ञाताहं परो मुक्तः सर्वभूतेषु सर्वदा ॥१२॥ यो वेदालुप्तदृष्टित्वमात्मनोऽकर्तृतां तथा । ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः ॥१३॥ ज्ञातैवाहमविज्ञेयः शुद्धो मुक्तः सदेत्यपि । विवेकी प्रत्ययो बुद्धेर्दृश्यत्वान्नाशवान्यतः ॥१४॥ अलुप्ता त्वात्मनो दृष्टिर्नोत्पाद्या कारकैर्यतः । दृश्यया चान्यया दृष्ट्या जन्यतास्याः प्रकल्पिता ॥१५॥ देहात्मबुद्ध्यपेक्षत्वादात्मनः कर्तृता मृषा । नैव किंचित्करोमीति सत्या बुद्धिः प्रमाणजा॥१६॥ कर्तृत्वं कारकापेक्षमकर्तृत्वं स्वभावतः । कर्ता भोक्तेति विज्ञानं

मृषैवेति सुनिश्चितम् ॥ १७ ॥ एवं शास्त्रानुमानाभ्यां
पेऽवगते सति । नियोज्योऽहमिति ह्येषा सत्या बुद्धिः
भवेत् ॥ १८ ॥ यथा सर्वान्तरं व्योम व्योम्नोऽप्यन्तः
ह्यहम् । निर्विकारोऽचलः शुद्धोऽजरो मुक्तः सदाद्वयः ॥
इति द्वादशं प्रकाशप्रकरणम् ॥ १२ ॥

## अचक्षुष्ट्वप्रकरणम् ॥ १३ ॥

अचक्षुष्ट्वान्न दृष्टिर्मे तथाऽश्रोत्रस्य का श्रुतिः । अवाक्त्वा
तु वक्तिः स्यादमनस्त्वान्मतिः कुतः ॥ १ ॥ अप्राणस्य
कर्मास्ति बुद्ध्यभावे न वेदिता । विद्याविद्ये ततो न स्तश्चि
त्रज्योतिषो मम ॥ २ ॥ नित्यमुक्तस्य शुद्धस्य कूटस्थस्या
लिनः । अमृतस्याक्षरस्यैवमशरीरस्य सर्वदा ॥ ३ ॥ जि
वा पिपासा वा शोकमोहौ जरामृती । न विद्यन्तेऽशरी
व्योमवद्व्यापिनो मम ॥ ४ ॥ अस्पर्शत्वान्न मे स्पृष्टिर्नाजि
द्रसज्ञता । नित्यविज्ञानरूपस्य ज्ञानाज्ञाने न मे सदा ॥
या तु स्यान्मानसी वृत्तिश्चाक्षुष्का रूपरञ्जना । नित्यमेवा
दृष्ट्या नित्यया दृश्यते हि सा ॥ ६ ॥ तथान्येन्द्रिययुक्ता
वृत्तयो विषयाञ्जनाः । स्मृती रागादिरूपा च केवलान्त
स्यपि ॥ ७ ॥ मानसस्तद्वदन्यस्य दृश्यन्ते स्वप्नवृत्तयः ।
ष्टिस्ततो नित्या शुद्धानन्ता च केवला ॥ ८ ॥ अनित्या
ऽविशुद्धेति गृह्यतेऽत्राविवेकतः । सुखी दुःखी तथा चाहं
योपाधिभूतया ॥ ९ ॥ मूढया मूढ इत्येवं शुद्धया शुद्ध इत्
मन्यते सर्वलोकोयं येन संसारमृच्छति ॥ १० ॥ अचक्षु
दिशास्त्रोक्तं सबाह्याभ्यन्तरं त्वजम् । नित्यमुक्तमिहात्मानं
क्षुश्चेत्सदा स्मरेत् ॥ ११ ॥ अचक्षुष्कादिशास्त्राच्च नेन्द्रि

दा मम । अप्राणो ह्यमनाः शुभ्र इति चाथर्वणेर्वचः ॥ १२ ॥
ब्दादीनामभावश्च श्रूयते मम काठके । अप्राणो ह्यमना यस्मा-
विकारी सदा ह्यहम् ॥ १३ ॥ विक्षेपो नास्ति तस्मान्मे न
माधिस्ततो मम । विक्षेपो वा समाधिर्वा मनसः स्याद्विका-
रिणः ॥ १४ ॥ अमनस्कस्य शुद्धस्य कथं तत्स्याद्द्वयं मम ।
मनस्त्वाविकारित्वे विदेहव्यापिनो मम ॥ १५ ॥ इत्येतद्या-
दज्ञानं तावत्कार्यं ममाभवत् । नित्यमुक्तस्य शुद्धस्य बुद्धस्य
सदा मम ॥ १६ ॥ समाधिर्वाऽसमाधिर्वा कार्यं चान्यत्कुतो
वेत् । मां हि ध्यात्वा च बुद्ध्वा च मन्यन्ते कृतकृत्यताम्
१७ ॥ अहं ब्रह्मास्मि सर्वोऽस्मि शुद्धो बुद्धोऽस्म्यतः सदा ।
जः सर्वत एवाहमजरश्चाक्षयोऽमृतः ॥ १८ ॥ मदन्यः सर्व-
भूतेषु बोद्धा कश्चिन्न विद्यते । कर्माध्यक्षश्च साक्षी च चेता
नित्योऽगुणोऽद्वयः ॥ १९ ॥ न सच्चाहं न चासच्च नोभयं
केवलः शिवः । न मे संध्या न रात्रिर्वा नाहर्वा सर्वदा दृशेः
। २० ॥ सर्वमूर्तिवियुक्तं यद्यथा खं सूक्ष्ममद्वयम् । तेनाप्यस्मि
विनाभूतं ब्रह्मैवाहं तथाद्वयम् ॥ २१ ॥ ममात्मा स्वत आत्मेति
भेदो व्योम्नो यथा भवेत् । एकस्य सुषिभेदेन तथा मम विक-
ल्पितः ॥ २२ ॥ भेदोऽभेदस्तथा चैको नाना चेति विक-
ल्पितः । ज्ञेयं ज्ञाता गतिर्गन्ता मय्येकस्मिन्कुतो भवेत् ॥ २३ ॥
न मे हेयं न चादेयमविकारी यतो ह्यहम् । सदा मुक्तस्तथा
शुद्धः सदा बुद्धोऽगुणोऽद्वयः ॥ २४ ॥ इत्येवं सर्वदात्मानं
विद्यात्सर्वं समाहितः । विदित्वा मां स्वदेहस्थमृषिर्मुक्तो ध्रुवो
भवेत् ॥ २५ ॥ कृतकृत्यश्च सिद्धश्च योगी ब्राह्मण एव च ।
य एवं वेद तत्त्वार्थमन्यथा ह्यात्महा भवेत् ॥ २६ ॥ वेदार्थो

निश्चितो ह्येप समासेन मयोदितः । संन्यासिभ्यः प्र
शान्तेभ्यः शिष्टबुद्धिना ॥ २७ ॥ इति त्रयोदश
प्रकरणम् ॥ १३ ॥

### स्वप्नस्मृतिप्रकरणम् ॥ १४ ॥

स्वप्नस्मृत्योर्घटादेर्हि रूपाभासः प्रदृश्यते । पुरा नूनं
कारा धीर्दृष्टेत्यनुमीयते ॥ १ ॥ भिक्षामटन्यथा स्वप्ने
देहो न स स्वयम् । जाग्रद्दृश्यात्तथा देहाद्द्रष्टृत्वादन्य
॥ २ ॥ मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ।
न्व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥ ३ ॥ व्यञ्जको वा
लोको व्यङ्ग्यस्याकारतामियात् । सर्वार्थव्यञ्जकत्वाद्धीरर्था
प्रदृश्यते ॥ ४ ॥ धीरेवार्थस्वरूपा हि पुंसा दृष्टा पुरा
न चेत्स्वप्ने कथं पश्येत्स्मरतो वा कृतिः कुतः ॥ ५ ॥
कत्वं तदेवास्या रूपाद्याकारदृश्यता । द्रष्टृत्वं च दृशेस्तद्व
स्याद्धिय उद्भवे ॥ ६ ॥ चिन्मात्रज्योतिषा सर्वाः स
बुद्धयः । मया यस्मात्प्रकाश्यन्ते सर्वस्यात्मा ततो ह्यहम्
करणं कर्म कर्ता च क्रिया स्वप्ने फलं च धीः । जाग्रत्ये
दृष्टा द्रष्टा तस्मादतोऽन्यथा ॥८॥ बुद्ध्यादीनामनात्मत्वं हे
यरूपतः । हानोपादानकर्तात्मा न त्याज्यो न च गृह्य
सबाह्याभ्यन्तरे शुद्धे प्रज्ञानैकरसे घने । बाह्यमाभ्यन्तरं
त्कथं हेयं प्रकल्प्यते ॥ १० ॥ य आत्मा नेतिनेतीति
हेन शेषितः । स चेद्ब्रह्मविदात्मेष्टो यतेतातः परं कथम्
अशनायाद्यतिक्रान्तं ब्रह्मैवास्मि निरन्तरम् । कार्यवान्स्यां
चाहं विमृशेदेवमञ्जसा ॥ १२ ॥ पारगस्तु यथा नद्याः
पारं यियासति । आत्मज्ञश्चेत्तथा कार्यं कर्तुमन्यदिहे

॥ १३ ॥ आत्मज्ञस्यापि यस्य स्याद्धानोपादानता यदि । न मोक्षार्हः स विज्ञेयो वान्तोऽसौ ब्रह्मणा ध्रुवम् ॥ १४ ॥ सादित्यं हि जगत्प्राणस्तस्मान्नाहर्निशैव वा । प्राणज्ञस्यापि न स्यातां कुतो ब्रह्मविदोऽद्वये ॥ १५ ॥ न स्मरत्यात्मनो ह्यात्मा विस्मरेद्वाप्यलुप्तचित् । मनोऽपि स्मरतीत्येतज्ज्ञानमज्ञानहेतुजम् ॥ १६ ॥ ज्ञातुर्ज्ञेयः परो ह्यात्मा सोऽविद्याकल्पितः स्मृतः । अपोढे विद्यया तस्मिन्रज्ज्वां सर्प इवाद्वयः ॥ १७ ॥ कर्तृकर्मफलाभावात्सबाह्याभ्यन्तरं ह्यजम् । ममाहं वेत्ति यो भावस्तस्मन्कस्य कुतो भवेत् ॥ १८ ॥ आत्मा ह्यात्मीय इत्येष भावोऽविद्याप्रकल्पितः । आत्मैकत्वे ह्यसौ नास्ति बीजाभावे कुतः फलम् ॥ १९ ॥ द्रष्टृ श्रोतृ तथा मन्तृ विज्ञात्रेव तदक्षरम् । द्रष्ट्राद्यन्यन्न तद्यस्मात्तस्माद्द्रष्टाहमक्षरम् ॥ २० ॥ स्थावरं जंगमं चैव द्रष्टृत्वादिक्रियायुतम् । सर्वमक्षरमेवातः सर्वस्मात्माक्षरं ह्यहम् ॥ २१ ॥ अकार्यशेषमात्मानमक्रियात्म क्रियाफलम् । निर्ममं निरहंकारं यः पश्यति स पश्यति ॥ २२ ॥ ममाहंकारयत्नेच्छाः शून्या एव स्वभावतः । आत्मनीति यदि ज्ञातमाध्वं स्वस्थाः किमीहितैः ॥ २३ ॥ योऽहंकर्तारमात्मानं तथा वेत्तारमेव च । वेत्ति नात्मज्ञ एवासौ योऽन्यथाज्ञः स आत्मवित् ॥ २४ ॥ यथान्यत्वेऽपि तादात्म्यं देहादिष्वात्मनो मतम् । तथाकर्तुरविज्ञानात्फलकर्मात्मतात्मनः ॥ २५ ॥ दृष्टिः श्रुतिर्मतिर्ज्ञातिः स्वप्ने दृष्टा जनैः सदा । तासामात्मस्वरूपत्वादतः प्रत्यक्षतात्मनः ॥ २६ ॥ परलोकभयं यस्य नास्ति मृत्युभयं तथा । तस्यात्मज्ञस्य शोच्याः स्युः सब्रह्मेन्द्रा अपीश्वराः ॥ २७ ॥ ईश्वरत्वेन किं तस्य ब्रह्मेन्द्रत्वेन वा पुनः । तृष्णा

चेत्सर्वतश्छिन्ना सर्वदैन्योद्भवाऽशुभा ॥ २८ ॥ अहमि धीर्या च ममेत्यात्मीयधीरपि । अर्थशून्ये यदा यस्य स तमज्ञो भवेत्तदा ॥ २९ ॥ बुद्ध्यादौ सत्युपाधौ च तथा शेपता । यस्य चेदात्मनो ज्ञाता तस्य कार्यं कथं भवेत् ॥ प्रसन्ने विमले व्योम्नि प्रज्ञानैकरसेऽद्वये । उत्पन्नात्मधि किमन्यत्कार्यमिष्यते ॥ ३१ ॥ आत्मानं सर्वभूतस्थं चात्मनोऽपि यः । पश्यन्निच्छत्यसौ नूनं शीतीकर्तुं वि सुम् ॥ ३२ ॥ प्रज्ञाप्राणानुकार्यात्मा छायेवाक्षादिगो ध्यायतीवेति चोक्तो हि शुद्धो मुक्तः स्वतो हि सः ॥ अप्राणस्यामनस्कस्य तथाऽसंसर्गिणो दृशेः । व्योमवद्व्या ह्यस्य कथं कार्यं भवेन्मम ॥ ३४ ॥ असमाधिं न प निर्विकारस्य सर्वदा । ब्रह्मणो मे विशुद्धस्य शोध्यं नान्य प्मनः ॥ ३५ ॥ गन्तव्यं च तथा नैव सर्वगस्याचलस्य नोर्ध्वं नाधस्तिरो वापि निष्कलस्यागुणत्वतः ॥ ३६ ॥ त्रज्योतिषो नित्यं तमस्तस्मिन्न विद्यते । कथं कार्यं म नित्यमुक्तस्य शिष्यते ॥ ३७ ॥ अमनस्कस्य का चिन्ता वानिन्द्रियस्य का । अप्राणो ह्यमनाः शुभ्र इति सत्यं श्रु ॥ ३८ ॥ अकालत्वाददेशत्वाददिक्त्वादनिमित्ततः । अ नैव कालादेरपेक्षा ध्यायतः सदा ॥ ३९ ॥ यस्मिन्देवाश्च पवित्रं कृत्स्नमेकताम् । व्रजेत्तन्मानसं तीर्थं यस्मिन्स्नाता भवेत् ॥ ४० ॥ न चास्ति शब्दादिरनन्यवेदनः परस्प न चैव दृश्यते । परेण दृश्यास्तु यथा रसादयस्तथैव एव दैहिकाः ॥ ४१ ॥ अहंममेत्येषणयत्नविक्रियासुखादि द्वदिह प्रदृश्यतः । दृश्यत्वयोगाच्च परस्परेण ते न

यान्ति ततः परो भवान् ॥ ४२ ॥ अहंक्रियाद्या हि समस्तविक्रिया सकर्तृका कर्मफलेन संहता । चितिस्वरूपेण समन्ततोऽर्कवत्प्रकाश्यमानाऽसिततात्मनो ह्यतः ॥ ४३ ॥ दृशिस्वरूपेण हि सर्वदेहिनां वियद्यथा व्याप्य मनांस्यवस्थितः । अतो न तस्मादपरोऽस्ति वेदिता परोऽपि तस्मादत एक ईश्वरः ॥ ४४ ॥ शरीरबुद्ध्योर्यदि चान्यदृश्यता निरात्मवादाः सुनिराकृता मया । परश्च शुद्धो ह्यविशुद्धिकर्मतः सुनिर्मलः सर्वगतोऽसितोऽद्वयः ॥ ४५ ॥ घटादिरूपं यदि तेन गृह्यते मनः प्रवृत्तं बहुधा स्ववृत्तिभिः । अशुद्ध्यचिद्रूपविकारदोषता मतेर्यथा वारयितुं न पार्यते ॥ ४६ ॥ यथा विशुद्धं गगनं निरन्तरं न सज्जते नापि च लिप्यते तथा । समस्तभूतेषु सदैव तेष्वयं समः सदात्मा ह्यजरोऽमरोऽभयः ॥ ४७ ॥ अमूर्तमूर्तानि च कर्मवासना दृशिस्वरूपस्य बहिः प्रकल्पिताः । अविद्यया ह्यात्मनि मूढदृष्टिभिरपोह्य नेतीत्यवशेषितो दृशि ॥ ४८ ॥ प्रबोधरूपं मनसोऽर्थयोगजं स्मृतौ च सुप्तस्य च दृश्यतोऽर्थवत् । तथैव देहप्रतिमानतः पृथग्दृशेः शरीरं च मनश्च दृश्यतः ॥ ४९ ॥ स्वभावशुद्धे गगने घनादिके मलेऽपयाते सति चाविशेषता । यथाच तद्वच्छ्रुतिवारितद्वये सदाऽविशेषो गगनोपमे दृशौ ॥ ५० ॥ इति चतुर्दशं स्वप्नस्मृतिप्रकरणम् ॥ १४ ॥

## नान्यदन्यत्प्रकरणम् ॥ १५ ॥

नान्यदन्यद्भवेद्यस्मान्नान्यत्किंचिद्विचिन्तयेत् । अन्यस्यान्यत्वभावे हि नाशस्तस्य ध्रुवो भवेत् ॥ १ ॥ स्मरतो दृश्यते दृष्टं पटे चित्रमिवार्पितम् । यत्र येन च तौ ज्ञेयौ सत्त्वक्षेत्रज्ञसंज्ञकौ ॥ २ ॥ फलान्तं चानुभूतं यद्युतं कर्त्रादिकारकैः । स्मर्यमाणं

हि कर्मस्थं पूर्वं कर्मैव तच्चितः॥ ३ ॥ द्रष्टुश्चान्यद्भवेद्दृश्‍
त्वाद्धटवत्सदा । दृश्याद्द्रष्टा सजातीयो न धीवत्साक्षि
॥ ४ ॥ स्वात्मबुद्धिमपेक्ष्यासौ विधीनां स्यात्प्रयोजकः
त्यादिः शववत्तेन तद्धानात्मतान्यथा ॥ ५ ॥ न
इत्युक्तेर्नादेहत्वं क्रियाफलम् । देहयोगः क्रियाहेतुस्त
न्क्रियास्त्यजेत् ॥ ६ ॥ कर्मस्वात्मा स्वतन्त्रश्चेन्निवृत्तं च
ताम् । अदेहत्वे फलेऽकार्ये ज्ञाते कुर्यात्कथं क्रियाः ।
जात्यादीन्संपरित्यज्य निमित्तं कर्मणां बुधः । कर्म हे
यत्स्वरूपं शास्त्रतः स्मरेत् ॥ ८ ॥ आत्मैकः सर्वभूतेषु
तस्मिंश्च खे यथा । पर्यगाद्व्योमवत्सर्वं शुक्रं दीप्तिमदित्यव
व्रणस्नाय्वोरभावेन स्थूलं देहं निवारयेत् । शुद्धापाप
लिङ्गं चाकायमित्युत ॥ १० ॥ वासुदेवो यथाश्वत्थे
चाब्रवीत्समम् । तद्वद्वेत्ति य आत्मानं समं स ब्रह्म
॥ ११ ॥ यथा ह्यन्यशरीरेषु ममाहन्ता न चेष्यते । अ
तथा देहे धीसाक्षित्वाविशेषतः ॥ १२ ॥ रूपसंस्कारतु
रागद्वेषौ भयं च यत् । गृह्यते धीश्रयं तस्माज्ज्ञाता शुद्धो
सदा ॥ १३ ॥ यन्मनास्तन्मयोऽन्यत्वे नात्मत्वात्तौ क्रिया
आत्मत्वे चानपेक्षत्वात्सापेक्षं हि न तत्स्वयम् ॥ १४ ॥
वैकरसा ज्ञप्तिरविभक्ताजराऽमला । चक्षुराद्युपधानात्सा
रीता विभाव्यते ॥ १५ ॥ दृश्यत्वादहमित्येषो नात्मधर्मो
दिवत् । तथान्ये प्रत्यया ज्ञेया दोषाश्चात्माऽमलो ह्यतः ।
सर्वप्रत्ययसाक्षित्वादविकारी च सर्वगः । विक्रियेत यदि
बुद्ध्यादीवाल्पविद्भवेत् ॥ १७ ॥ न दृष्टिर्लुप्यते द्रष्टुश्चक्षु
थैव तत् । नहि द्रष्टुरिति ह्युक्तं तस्माद्द्रष्टा सदैकदृक् ॥ १

ंघातो वास्मि भूतानां करणानां तथैव च । व्यस्तं वान्यतमो
ास्मि को वास्मीति विचारयेत् ॥ १९ ॥ व्यस्तं नाहं समस्तं
ा भूतमिन्द्रियमेव वा । ज्ञेयत्वात्करणत्वाच्च ज्ञातान्योऽस्माद्धटा-
देवत् ॥ २० ॥ आत्माग्नेरिन्धना बुद्धिरविद्याकामकर्मभिः
ीपिता प्रज्वलत्येषा द्वारैः श्रोत्रादिभिः सदा ॥ २१ ॥ दक्षि-
ाक्षिप्रधानेषु यदा बुद्धिर्विचेष्टते । विषयैर्हविषा दीप्ता
ात्माग्निः स्थूलभुक्तदा ॥ २२ ॥ हूयन्ते तु हवींषीति
ूपादिग्रहणे स्मरन् । अरागद्वेष आत्माग्नौ जाग्रद्दोषैर्न लिप्यते
। २३ ॥ मानसे तु गृहे व्यक्तः सोऽविद्याकर्मवासनाम् ।
श्यंस्तैजस आत्मोक्तः स्वयंज्योतिः प्रकाशिता ॥ २४ ॥ विषया
ासना वापि चोद्यन्ते नैव कर्मभिः । यदा बुद्धौ तदा ज्ञेयः
ाज्ञ आत्मा ह्यनन्यदृक् ॥ २५ ॥ मनोबुद्धीन्द्रियाणां या अ-
स्थाः कर्मचोदिताः । चैतन्येनैव भास्यन्ते रविणेव घटादयः
। २६ ॥ तत्रैवंसति बुद्धीज्ञ आत्मभासावभासयन् । कर्ता
ासां यदर्थास्ता मूढैरेवाभिधीयते ॥ २७ ॥ सर्वज्ञोऽप्यतएव
्यात्स्वेन भासावभासयन् । सर्वं सर्वक्रियाहेतोः सर्वकृत्त्वं तथा-
त्मनः ॥ २८ ॥ सोपाधिश्चैवमात्मोक्तो निरुपाख्योऽनुपाधि-
कः । निष्कलो निर्गुणः शुद्धस्तं मनो वाक्च नाप्नुतः ॥ २९ ॥
चेतनोऽचेतनो वापि कर्ताकर्ता गतोऽगतः । बद्धो मुक्तस्तथा
चैकोऽनेकः शुद्धोऽन्यथेति वा ॥ ३० ॥ अप्राप्यैव निवर्तन्ते
वचोधीभिः सहैव तु । निर्गुणत्वात्क्रियाभावाद्विशेषाणामभा-
वतः ॥ ३१ ॥ व्यापकं सर्वतो व्योम मूर्तैः सर्वैर्वियोजितम् ।
यथा तद्वदिहात्मानं विन्द्याच्छुद्धं परं पदम् ॥ ३२ ॥ दृष्टं
हित्वा स्मृतिं तस्मिन्सर्वग्रन्थं तमस्त्यजेत् । सर्वदृग्ज्योतिषा युक्तो

दिनकृच्छार्वरं यथा ॥ ३३ ॥ रूपस्मृत्यन्धकारार्थाः
यस्य गोचराः । स एवात्मा समो द्रष्टा सर्वभूतेषु सर्व
आत्मबुद्धिमनश्चक्षुर्विषयालोकसंगमात् । विचित्रो जा
प्रत्ययोऽज्ञानलक्षणः ॥ ३५ ॥ विविच्यास्मात्स्वमात्मानं
च्छुद्धं परं पदम् । द्रष्टारं सर्वभूतस्थं समं सर्वभयातिग
समस्तं सर्वगं शान्तं विमलं व्योमवत्स्थितम् । निष्कलं
सर्वं नित्यं द्वन्द्वैर्विवर्जितम् ॥ ३७ ॥ सर्वप्रत्ययसाक्षी
ज्ञेयो मयेत्युत । विमृश्यैवं विजानीयाज्ज्ञानकर्म न
॥ ३८ ॥ अदृष्टं द्रष्टृविज्ञातं दृष्टमित्यादि शासनात् ।
मयान्यैर्वा परं ब्रह्म कथंचन ॥ ३९ ॥ स्वरूपाव्यव
ज्ञानालोकस्वभावतः । अन्यज्ञानानपेक्षत्वाज्ज्ञातं
मया ॥ ४० ॥ नान्येन ज्योतिषा कार्यं रवेरात्मप्र
स्वबोधान्नान्यबोधेच्छा बोधस्यात्मप्रकाशने ॥ ४१ ॥
वान्यतोपेक्षा स्वरूपं यस्य यद्भवेत् । प्रकाशान्तरदृश्यो न
ह्यस्ति कश्चन ॥ ४२ ॥ व्यक्तिः स्यादप्रकाशस्य प्रका
मागमात् । प्रकाशस्त्वर्ककार्यः स्यादिति मिथ्या व
॥ ४३ ॥ यतोऽभूत्वा भवेद्यच्च तस्य तत्कार्यमिष्यते ।
त्वादभूत्वा न प्रकाशो जायते रवेः ॥ ४४ ॥ सत्तामात्रे
शस्य कर्तादित्यादिरिष्यते । घटादिव्यक्तितो यद्वत्तद्व
नीष्यताम् ॥ ४५ ॥ बिलात्सर्पस्य निर्याणे सूर्यो
शकः । प्रयत्नेन विना तद्वज्ज्ञातात्मा बोधरूपतः ॥
दग्धैवमुष्णः सत्तायां तद्वद्बोद्धात्मनीष्यताम् । सत्येव
तु ज्ञाते सर्प इवोत्थिते ॥ ४७ ॥ ज्ञाताऽयत्नोऽपि तद्व
भ्रामकवद्भवेत् । स्वरूपेण स्वयं नात्मा ज्ञेयोऽज्ञेयोऽथवा

ॐ॥ ॐ॥ ॐ

॥ ४८ ॥ विदिताविदिताभ्यां तदन्यदेवेति शासनात् । बन्धमोक्षादयो भावास्तद्वदात्मनि कल्पिताः ॥ ४९ ॥ नाहोरात्रे यथा सूर्ये प्रभारूपाविशेषतः । बोधरूपाविशेषान्न बोधाबोधौ तथात्मनि ॥ ५० ॥ यथोक्तं ब्रह्म यो वेद हानोपादानवर्जितम् । यथोक्तेन विधानेन स सत्यं नैव जायते ॥५१॥ जन्ममृत्युप्रवाहेषु पतितो नैव शक्नुयात् । इत उद्धर्तुमात्मानं ज्ञानादन्येन केनचित् ॥ ५२ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्ट इति श्रुतेः॥५३॥ ममाहमित्येतदपोह्य सर्वतो विमुक्तदेहं पदमम्बरोपमम् । सुदृष्टशास्त्रानुमितिभ्य ईरितं विमुच्यतेऽस्मिन्यदि निश्चितो नरः ॥ ५४ ॥ इति पञ्चदशं नान्यदन्यत्प्रकरणम् ॥ १५ ॥

## पार्थिवप्रकरणम् ॥ १६ ॥

पार्थिवः कठिनो धातुर्द्रवो देहे स्मृतोऽम्मयः । पक्तिश्चेष्टावकाशाः स्युर्वह्निवाय्वम्बरोद्भवाः ॥ १ ॥ घ्राणादीनि तदर्थाश्च पृथिव्यादिगुणाः क्रमात् । रूपालोकवदिष्टं हि सजातीयार्थमिन्द्रियम् ॥ २ ॥ बुद्ध्यर्थान्याहुरेतानि वाक्पाण्यादीनि कर्मणे । तद्विकल्पार्थमन्तस्थं मन एकादशं भवेत् ॥ ३ ॥ निश्चयार्था भवेद्बुद्धिस्तां सर्वार्थानुभाविनीम् । ज्ञातात्मोक्तः स्वरूपेण ज्योतिषा व्यञ्जयन्सदा ॥ ४ ॥ व्यञ्जकस्तु यथालोको व्यङ्ग्यस्याकारतां गतः । व्यतिकीर्णोऽप्यसंकीर्णस्तद्वज्ज्ञः प्रत्ययैः सदा ॥ ५ ॥ स्थितो दीपो यथायत्नः प्राप्तं सर्वं प्रकाशयेत् । शब्दाद्याकारबुद्धीर्ज्ञः प्राप्तास्तद्वत्प्रपश्यति ॥ ६ ॥ शरीरेन्द्रियसंघात आत्मत्वेन गतां धियम् । नित्यात्मज्योतिषा दीप्तां विशिंषन्ति सुखादयः ॥ ७ ॥ शिरोदुःखादिनात्मानं दुःख्य-

स्मीति हि पश्यति । द्रष्टान्यो दुःखिनो दृश्याद्द्रष्टृत्वाद्
स्व्यसौ ॥ ८ ॥ दुःखी स्याद्दुःख्यहंमानाद्दुःखिनो द
वा । संहतेऽङ्गादिभिर्द्रष्टा दुःखी दुःखस्य नैव सः ॥
चक्षुर्वत्कर्मकर्तृत्वं स्याच्चेन्नानेकमेव तत् । संहतं च ततो
द्रष्टृत्वात्कर्मतां व्रजेत् ॥ १० ॥ ज्ञानयत्नाद्यनेकत्वमात्म
मतं यदि । नैकज्ञानगुणत्वात्तु ज्योतिर्वत्तस्य कर्मता ॥
ज्योतिषो द्योतकत्वेऽपि यद्वन्नात्मप्रकाशनम् । भेदेऽप्येवं
त्वाज्ज्ञ आत्मानं नैव पश्यति ॥ १२ ॥ यद्धर्मा यः पदा
तस्यैवेयात्स कर्मताम् । न ह्यात्मानं दहत्यग्निस्तथा नैव
श्रयेत् ॥ १३ ॥ एतेनैवात्मनात्मानो ग्रहो बुद्धेर्निरा
अंशोऽप्येवं समत्वाद्धि निर्भेदत्वान्न युज्यते ॥ १४ ॥
न युक्तं वै बुद्धेरन्येन दृश्यता । युक्तातो घटवत्तस्याः
द्धेश्च विकल्पतः ॥ १५ ॥ अविकल्पं तदस्त्येव यत्पूर्वं
कल्पतः । विकल्पोत्पत्तिहेतुत्वाद्यद्यस्यैव तु कारणम् ॥
यज्ञानं कल्पनामूलं संसारस्य नियामकम् । हित्वात्मानं
विन्द्यान्मुक्तं सदाभयम् ॥ १७ ॥ जाग्रत्स्वप्नं तयोर्बीजं
क्षाख्यं तमोमयम् । अन्योन्यस्मिन्नसत्त्वाच्च नास्तीत्येतत्त्रयं
॥ १८ ॥ आत्मबुद्धिमनश्चक्षुरालोकार्थादिसंकरात् ।
स्यादात्मकर्मेति क्रियाणां संनिपाततः ॥ १९ ॥ निर्मले
लने स्थाने वायव्ये तेन चक्षुषः । प्रकाशत्वान्मनस्येवं
स्तः प्रकाशतः ॥ २० ॥ संकल्पाध्यवसायौ तु मनोबु
क्रमात् । नेतरेतरधर्मत्वं सर्वं चात्मनि कल्पितम् ॥
स्थानावच्छेददृष्टिः स्यादिन्द्रियाणां तदात्मताम् । गता
हि पश्यञ्ज्ञो देहमात्र इवेक्ष्यते ॥ २२ ॥ क्षणिकं हि

धर्ममात्रं निरन्तरम् । सादृश्यादीपवत्तद्धीस्तच्छान्तिः पुरुषार्थता ॥ २३ ॥ स्वाकारान्यावभासं च येषां रूपादि विद्यते । येषां नास्ति ततश्चान्यत्पूर्वासंगतिरुच्यते ॥ २४ ॥ बाह्याकारत्वतो ज्ञप्तेः स्मृत्यभावः सदा क्षणात् । क्षणिकत्वाच्च संस्कारं नैवाधत्ते क्वचित्तु धीः ॥ २५ ॥ आधारस्याप्यसत्त्वाच्च तुल्यता निर्निमित्ततः । स्थाने वा क्षणिकत्वस्य हानं स्यान्न तदिष्यते ॥ २६ ॥ शान्तेश्चायत्नसिद्धत्वात्साधनोक्तिरनर्थिका । एकस्मिन्समाप्तत्वाच्छान्तेरन्यानपेक्षता ॥ २७ ॥ अपेक्षा यदि भिन्नेऽपि परसंतान इष्यताम् । सर्वार्थे क्षणिके कस्मिंस्तथाप्यन्यानपेक्षता ॥ २८ ॥ तुल्यकालसमुद्भूताविवतरेतरयोगिनौ । योगाच्च संस्कृतो यस्तु सोऽन्यं हीक्षितुमर्हति ॥ २९ ॥ मृषाध्यासस्तु यत्र स्यात्तन्नाशस्तत्र नो मतः । सर्वनाशो भवेद्यस्य मोक्षः कस्य फलं वद ॥ ३० ॥ अस्ति तावत्स्वयं नाम ज्ञानं वात्मान्यदेव वा । भावाभावज्ञतस्तस्य नाभावस्त्वधिगम्यते ॥ ३१ ॥ येनाधिगम्यतेऽभावस्तत्सत्स्यात्तन्न चेद्भवेत् । भावाभावानभिज्ञत्वं लोकस्य स्यान्न चेष्यते ॥ ३२ ॥ सदसत्सदसच्चेति विकल्पात्प्राग्यदिष्यते । तदद्वैतं समत्वात्तु नित्यं चान्यद्विकल्पितात् ॥ ३३ ॥ विकल्पोद्भवताऽसत्त्वं स्वप्नदृश्यवदिष्यताम् । द्वैतस्य प्रागसत्त्वाच्च सदसत्त्वादिकल्पनात् ॥ ३४ ॥ वाचारम्भणशास्त्राच्च विकाराणां ह्यभावता । मृत्योः स मृत्युमित्यादेर्मम मायेति च स्मृतेः ॥ ३५ ॥ विशुद्धिश्चात एवास्य विकल्पाच्च विलक्षणः । उपादेयो न हेयोऽत्त आत्मा नान्यैरकल्पितः ॥ ३६ ॥ अप्रकाशो यथादित्ये नास्ति ज्योतिःस्वभावतः । नित्यबोधस्वरूपत्वान्नाज्ञानं तद्वदात्मनि ॥ ३७॥ तथा-

विक्रियरूपत्वान्नावस्थान्तरमात्मनः । अवस्थान्तरवत्त्वे॥
नाशोऽस्य स्यान्न संशयः ॥ ३८ ॥ मोक्षोऽवस्थान्तं स
कृतकः स चलो ह्यतः । न संयोगो वियोगो वा मोक्षो स्या
कथंचन ॥ ३९ ॥ संयोगस्याप्यनित्यत्वाद्वियोगस्य तथैक
गमनागमने चैव स्वरूपं तु न हीयते ॥ ४० ॥ स्वरूपभे
मित्तत्वात्सनिमित्ता हि चापरे । अनुपात्तं स्वरूपं हि ला
त्यक्तं तथैव च ॥ ४१ ॥ स्वरूपत्वान्न सर्वस्य त्यक्तुं
ह्यनन्यतः । गृहीतुं वा ततो नित्योऽविषयत्वात्पृथक्त्वतः॥ चि
आत्मार्थत्वाच्च सर्वस्य नित्य आत्मैव केवलः । त्यक्त्
त्क्रियाः सर्वाः साधनैः सह मोक्षवित् ॥ ४३ ॥ आत्मन
परो लाभ इति शास्त्रोपपत्तयः । अलाभोऽन्यात्मलाभस्तु
त्तस्मादनात्मताम् ॥ ४४ ॥ गुणानां समभावस्य
ह्युपपद्यते । अविद्यादेः प्रसुप्तत्वान्न चान्यो हेतुरुच्यते ॥
इतरेतरहेतुत्वे प्रवृत्तिः स्यात्सदा न वा । नियमो न प्र
गुणेष्वात्मनि वा भवेत् ॥ ४६ ॥ विशेषो मुक्त
तादर्थ्येन च युज्यते । अर्थार्थिनोस्त्वसंबन्धो नार्थी
रोऽपि वा ॥ ४७ ॥ प्रधानस्य च पारार्थ्ये पुरुषस्याविका
न युक्तं सांख्यशास्त्रेऽपि विकारेऽपि न युज्यते ॥
संबन्धानुपपत्तेश्च प्रकृतेः पुरुषस्य च । मिथो युक्तं तदर्थत्
नस्याचितित्वतः ॥ ४९ ॥ क्रियोत्पत्तौ विनाशित्वं
च पूर्ववत् । निर्निमित्ते त्वनिर्मोक्षः प्रधानस्य प्रसज्यते ॥
न प्रकाश्यं यथोष्णत्वं ज्ञानेनैवं सुखादयः । एकनी
ऽग्राह्याः स्युः कणादादिवर्त्मनाम् ॥ ५१ ॥ युगपत्
सुखविज्ञानयोरपि । मनोयोगैकहेतुत्वादग्राह्यत्वं सुख

॥ ५२ ॥ तथान्येषां च भिन्नत्वाद्युगपज्जन्म नेष्यते । गुणानां समवेतत्वं ज्ञानं चेन्न विशेषणात् ॥ ५३ ॥ ज्ञानेनैव विशेषत्वाज्ज्ञानाप्यत्वं स्मृतेस्तथा । सुखं ज्ञातं मयेत्येवं तवाज्ञानात्मकत्वतः ॥ ५४ ॥ सुखादेर्नात्मधर्मत्वमात्मनस्तेऽविकारतः । भेदादन्यस्य कस्मान्न मनसो वा विशेषतः ॥ ५५ ॥ स्यान्मालाऽपरिहार्या तु ज्ञानं चेज्ज्ञेयता व्रजेत् । युगपद्वापि चोत्पत्तिरभ्युपेतात इष्यते ॥ ५६ ॥ अनवस्थान्तरत्वाच्च बन्धो नात्मनि विद्यते । नाशुद्धिश्चाप्यसङ्गत्वादसङ्गो हीति च श्रुतेः ॥ ५७ ॥ सूक्ष्मकागोचरेभ्यश्च न लिप्यत इति श्रुतेः ॥ ५८ ॥ एवं तर्हि न मोक्षोऽस्ति बन्धाभावात्कथंचन । शास्त्रानर्थक्यमेव स्यान्न बुद्धेर्भ्रान्तिरिष्यते । बन्धो मोक्षश्च तन्नाशः स यथोक्तो न चान्यथा ॥ ५९ ॥ बोधात्मज्योतिषा दीप्ता बोधमात्मनि मन्यते । बुद्धिर्नान्योऽस्ति बोद्धेति सेयं भ्रान्तिर्हि धीगता॥६०॥ बोधस्यात्मस्वरूपत्वान्नित्यं तत्रोपचर्यते । अविवेकोऽप्यनाद्योऽयं संसारो नान्य इष्यते ॥६१॥ मोक्षस्तन्नाश एव स्यान्नान्यथानुपपत्तितः । येषां वस्त्वन्तरापत्तिर्मोक्षो नाशस्तु तैर्मतः ॥६२॥ अवस्थान्तरमप्येवमविकारान्न युज्यते। विकारोऽवयवित्वं स्यात्ततो नाशो घटादिवत् ॥६३॥ तस्माद्भ्रान्तिरतोऽन्या हि बन्धमोक्षादिकल्पनाः। सांख्यकाणादबौद्धानां मीमांसाहतकल्पनाः॥६४॥ शास्त्रयुक्तिविहीनत्वान्नादर्तव्याः कदाचन । शक्यन्ते शतशो वक्तुं दोषास्तासां सहस्रशः ॥६५॥ अपि निन्दोपपत्तेश्च यान्यतोऽन्यानि चेत्यतः । त्यक्त्वातो ह्यन्यशास्त्रोक्तौ मतिं कुर्याद्दृढां बुधः ॥ ६६ ॥ श्रद्धाभक्ती पुरस्कृत्य हित्वा सर्वमनार्जवम् । वेदान्तस्यैव तत्त्वार्थे व्यासस्याभिमतौ तथा ॥ ६७ ॥ इति

अणुत्वा द्वयवादकल्पना निरात्मवादाश्च तथाहि गु
व्यपेतशङ्काः परवादतः स्थिरा मुमुक्षवो ज्ञानपथे स्
॥ ६८ ॥ स्वसाक्षिकं ज्ञानमतीव निर्मलं विकल्पनाभ्यो
रीतमद्वयम् । अवाप्य सम्यग्यदि निश्चितो भवेन्निरन्वयो
तिमेति शाश्वतीम् ॥६९॥ इदं रहस्यं परमं परायणं व्यं
रभिमानवर्जितः । समीक्ष्य कार्या मतिरार्जवे सदा न
क्स्यान्यमतिर्हि कश्चन ॥ ७० ॥ अनेकजन्मान्तरसं
विमुच्यतेऽज्ञाननिमित्तपातकैः । इदं विदित्वा परमं हि
न लिप्यते व्योम इवेह कर्मभिः ॥७१॥ प्रशान्तचित्ताय जि
याय च प्रहीणदोषाय यथोक्तकारिणे । गुणान्विताया
सर्वदा प्रदेयमेतत्सततं मुमुक्षवे ॥ ७२ ॥ परस्य देहे न
भिमानिता परस्य तद्वत्परमार्थमीक्ष्य च । इदं हि विज्ञान
निर्मलं संप्राप्य मुक्तोऽथ भवेच्च सर्वतः ॥७३॥ नहीह
ऽभ्यधिकोऽस्ति कश्चन स्वरूपलाभात्स इतो हि नान्य
देयमैन्द्रादपि राज्यतोऽधिकं स्वरूपलाभं त्वपरीक्ष्य
॥ ७४ ॥ इति षोडशं पार्थिवप्रकरणम् ॥ १६ ॥

सम्यङ्मतिप्रकरणम् ॥ १७ ॥

आत्मा ज्ञेयः परो ह्यात्मा यस्मादन्यन्न विद्यते ।
सर्वदृक् शुद्धस्तस्मै ज्ञेयात्मने नमः ॥ १ ॥ पदवाक्यप्र
दीपभूतैः प्रकाशितम् । ब्रह्म वेदरहस्यं यैस्तान्नित्यं प्रणतो
ऽस्म् ॥ २ ॥ यद्वाक्सूर्यांशुसंपातप्रनष्टध्वान्तकल्मषः ।
तान्गुरून्वक्ष्ये ब्रह्मविद्याविनिश्चयम् ॥ ३ ॥ आत्मला
नान्यो लाभः कश्चन विद्यते । यदर्था वेदवादाश्च स्मा
तु याः क्रियाः ॥ ४ ॥ आत्मार्थोऽपि हि यो लाभः

येष्टो विपर्ययः । आत्मलाभः परः प्रोक्तो नित्यत्वाद्ब्रह्मवेदिभिः ॥ ५ ॥ स्वयं लब्धस्वभावत्वाल्लाभस्तस्य नचान्यतः । अन्यापेक्षस्तु यो लाभः सोऽन्यदृष्टिसमुद्भवः ॥ ६ ॥ अन्यदृष्टिस्त्वविद्या स्यात्तन्नाशो मोक्ष उच्यते । ज्ञानेनैव तु सोऽपि स्याद्विरोधित्वान्न कर्मणा ॥ ७ ॥ कर्मकार्यस्त्वनित्यः स्यादविद्याकामकारणः । प्रमाणं वेद एवात्र ज्ञानस्याधिगमे स्मृतः ॥ ८ ॥ ज्ञानैकार्थपरत्वात्तं वाक्यमेकं ततो विदुः । एकत्वं ह्यात्मनो ज्ञेयं वाक्यार्थप्रतिपत्तितः ॥ ९ ॥ वाच्यभेदात्तु तद्भेदः कल्प्यो वाच्यो हि तच्छ्रुतेः । त्रयं त्वेतत्ततः प्रोक्तं रूपं नाम च कर्म च ॥ १० ॥ असदेतत्त्रयं तस्मादन्योन्येन हि कल्पितम् । कृतो वर्णो यथाशब्दाच्छ्रुतोऽन्यत्र धिया बहिः ॥ ११ ॥ दृष्टं चापि यथारूपं बुद्धेः शब्दाय कल्पते । एवमेतज्जगत्सर्वं भ्रान्तिबुद्धिविकल्पितम् ॥ १२ ॥ असदेतत्ततो युक्तं सच्चिन्मात्रं न कल्पितम् । वेदश्चापि स एवाद्यो वेद्यं चान्यत्तु कल्पितम् ॥ १३ ॥ येन वेत्ति स वेदः स्यात्स्वप्ने सर्वं तु मायया । येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते ॥ १४ ॥ येन स्वप्नगतो वक्ति सा वाग्घ्राणं तथैव च । रसनस्पर्शने चैव मनश्चान्यत्तथेन्द्रियम् ॥ १५ ॥ कल्प्योपाधिभिरेवैतद्भिन्नं ज्ञानमनेकधा । आधिभेदाद्यथा भेदो मणेरेकस्य जायते ॥ १६ ॥ जाग्रतश्च यथा भेदो ज्ञानस्यास्य विकल्पितः । बुद्धिस्थं व्याकरोत्यर्थं भ्रान्त्या तृष्णोद्भवक्रियः ॥ १७ ॥ स्वप्ने तद्वत्प्रबोधे यो बहिश्चान्तस्तथैव च । आलेख्याध्ययने यद्वत्तदन्योन्यधियोद्भवम् ॥ १८ ॥ यदायं कल्पयेद्भेदं तत्कामः सन्यथाक्रतुः । यत्कामस्तत्क्रतुर्भूत्वा कृतं यत्तत्प्रपद्यते ॥ १९ ॥ अविद्याप्रभवं सर्वमसत्तस्मादिदं जगत् ।

तद्वता दृश्यते यस्मात्सुषुप्ते न च गृह्यते ॥ २० ॥ क्रिया
श्रुतिप्रोक्ते एकत्वान्यधियौ हि नः । तस्मात्सर्वप्रयत्नेन च
विद्या विधीयते ॥ २१ ॥ चित्ते ह्यादर्शवद्यस्माच्छुद्धे
प्रकाशते । यमैर्नित्यैश्च यज्ञैश्च तपोभिस्तस्य शोधनम् ॥
शारीरादितपः कुर्यात्तद्विशुद्ध्यर्थमुत्तमम् । मनआदि
तत्तद्देहविशोषणम् ॥ २३ ॥ मनसश्चेन्द्रियाणां च
परमं तपः । तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते
दृष्टं जागरितं विद्यात्स्मृतं स्वप्नं तदेव तु । सुषुप्तं तद
स्वमात्मानं परं पदम् ॥ २५ ॥ सुषुप्त्याख्यं तमोज्ञानं
स्वप्नप्रबोधयोः । स्वात्मबोधप्रदग्धं स्याद्बीजं दग्धं य
॥ २६ ॥ तदेवैकं त्रिधा ज्ञेयं मायाबीजं पुनः क्रमात्
व्यात्माविकारोऽपि बहुधैको जलार्कवत् ॥ २७ ॥
यथा भिन्नं प्राणस्वप्नादिभिस्तथा । स्वप्नजाग्रच्छरीरेषु त
जलेन्दुवत् ॥ २८ ॥ मायाहस्तिनमारुह्य मायाव्येको
व्रजेत् । आगच्छंस्तद्वदेवात्मा प्राणस्वप्नादिगोचरः ॥
न हस्ती न तदारूढो मायाव्यन्यो यथास्थितः । न
न तद्द्रष्टा तथा ज्ञोऽन्यः सदादृशिः ॥ ३० ॥ अबद्ध
नास्ति माया मायाविनोऽपि वा । बद्धाक्षस्यैव सा
मायाव्येव ततो भवेत् ॥ ३१ ॥ साक्षाद्देवः स विज्ञेयः
दात्मेति च श्रुतेः । भिद्यते हृदयग्रन्थिर्न चेदित्यादितः
॥ ३२ ॥ अशब्दादित्वतो नास्य ग्रहणं चेन्द्रियैर्भवेत् ।
दिभ्यस्तथान्यत्वाद्बुद्ध्या वापि कथं भवेत् ॥ ३३ ॥ अ
यथा राहुश्चन्द्रे बिम्बं यथाम्भसि । सर्वगोऽपि तथैवात्मा
वेव स गृह्यते ॥ ३४ ॥ भानोर्बिम्बं यथा चौष्ण्यं जले

चाम्भसः । बुद्धौ बोधो न तद्धर्मस्तथैव स्याद्विधर्मतः ॥ ३५ ॥
चक्षुर्युक्ता धिया वृत्तिर्या तां पश्यन्नलुप्तदृक् । दृष्टेर्द्रष्टा भवेदा-
त्मा श्रुतेः श्रोता तथा भवेत् ॥ ३६ ॥ केवलां मनसो वृत्तिं
पश्यन्मन्ता मतेरजः । विज्ञाताऽलुप्तशक्तित्वात्तथा शास्त्रं नही-
ष्यतः ॥ ३७ ॥ ध्यायतीत्यविकारित्वं तथा लेलायतीत्यपि ।
अत्र स्तेनेति शुद्धत्वं तथानन्वागतं श्रुतेः ॥ ३८ ॥ शक्त्यलो-
पात्सुपुप्ते ज्ञस्तथा बोधेऽविकारतः । ज्ञेयस्यैव विशेषस्तु यत्र वेत्ति
श्रुतेर्वचः ॥ ३९ ॥ व्यवधानाद्धि पारोक्ष्यं लोकदृष्टेरनात्मनः ।
दृष्टेरात्मस्वरूपत्वात्प्रत्यक्षं ब्रह्म तत्स्मृतम् ॥ ४० ॥ नहि दीपा-
न्तरापेक्षा यद्वद्दीपप्रकाशने । बोधस्यात्मस्वरूपत्वान्न बोधोऽन्य-
स्तथेष्यते ॥ ४१ ॥ विपयत्वं विकारित्वं नानात्वं वा नहीष्यते ।
न हेयो नाप्युपादेय आत्मा नान्येन वा ततः ॥ ४२ ॥ सवा-
ह्याभ्यन्तरो जीर्णो जन्ममृत्युजरातिगः । अहमात्मेति यो वेत्ति
कुतोऽन्वेव बिभेति सः ॥ ४३ ॥ प्रागेवैतद्विधेः कर्म वर्णित्वा-
देरपोहनात् । तदस्थूलादिशास्त्रेभ्यस्तत्त्वमेवेति निश्चयात् ॥ ४४ ॥
पूर्वदेहपरित्यागे जात्यादीनां प्रहाणतः । देहस्यैव तु जात्यादि-
स्तस्याप्येवं ह्यनात्मता ॥ ४५ ॥ ममाहं चेत्यतोऽविद्या शरीरा-
दिष्वनात्मसु । आत्मज्ञानेन हेया स्यादसुराणामिति श्रुतेः
॥ ४६ ॥ दशाहाशौचकार्याणां पारिव्राज्ये निवर्तनम् । यथा
ज्ञानस्य संप्राप्तौ तद्वज्जात्यादिकर्मणाम् ॥ ४७ ॥ यत्कामस्तत्क्र-
तुर्भूत्वा कृतं त्वज्ञः प्रपद्यते । यदा स्वात्मदृशः कामाः प्रमुच्य-
न्तेऽमृतस्तदा ॥ ४८ ॥ आत्मरूपविधेः कार्यं क्रियादिभ्यो
निवर्तनम् । न साध्यं साधनं वात्मा नित्यतृप्तः स्मृतेर्मतः
॥ ४९ ॥ उत्पाद्याप्यविकार्याणि संस्कार्यं च क्रियाफलम् ।

नातोऽन्यत्कर्मणा कार्यं त्यजेत्तस्मात्ससाधनम् ॥ ५० ॥
न्तत्वादनित्यत्वादात्मार्थत्वाच्च या बहिः । संहृत्यात्
प्रीतिं सत्यार्थी गुरुमाश्रयेत् ॥ ५१ ॥ शान्तं प्रा
मुक्तं निष्क्रियं ब्रह्मणि स्थितम् । श्रुतेराचार्यवान्वेद त
स्मृतेस्तथा ॥५२॥ स गुरुस्तारयेद्युक्तं शिष्यं शिष्यगुणा
ब्रह्मविद्याप्लवेनाशु स्वान्तध्वान्तमहोदधिम् ॥ ५३ ॥
स्पृष्टिः श्रुतिर्घ्रातिर्मतिर्विज्ञातिरेव च । शक्तयोऽन्याश्च
चिद्रूपत्वेऽप्युपाधिभिः ॥ ५४ ॥ अपायोद्भूतिहीना
दीप्यन्रविर्यथा । सर्वज्ञः सर्वदृक् शुद्धः सर्वं जानाति
॥ ५५ ॥ अन्यदृष्टिः शरीरस्थस्तावन्मात्रो ह्यविद्यया ।
द्युपमाभिस्तु तद्धर्मा च विभाव्यते ॥ ५६ ॥ दृष्ट्वा बा
ल्याथ स्मृत्वा तत्प्रविहाय च । अथोन्मील्यात्मनो
प्राप्नोत्यनध्वगः ॥ ५७ ॥ प्राणाद्येवं त्रिकं हित्वा तीर्णो
महोदधिम् स्वात्मस्थो निर्गुणः शुद्धो बुद्धो मुक्तः स्वतो
॥ ५८ ॥ अजोऽहं चामरोऽमृत्युरजरोऽभय एव च ।
सर्वदृक् शुद्ध इति बुद्धो न जायते ॥ ५९ ॥ पूर्वोक्तं
बीजं तन्नास्तीति विनिश्चयः । तदभावे कुतो जन्म
विजानतः ॥ ६० ॥ क्षीरात्सर्पिर्यथोद्धृत्य क्षिप्तं तस्मि
बुद्ध्यादेर्ज्ञस्तथाऽसत्यान्न देही पूर्ववद्भवेत् ॥ ६१ ॥ सत्यं
मनन्तं च रसादेः पञ्चकात्परम् । स्यामदृश्यादिशा
ब्रह्मेति निर्भयः ॥ ६२ ॥ यस्माद्भीताः प्रवर्तन्ते वाङ्म
कादयः । तदात्मानन्दतत्त्वज्ञो न बिभेति कुतश्चन ॥
नामादिभ्यः परे भूम्नि स्वाराज्ये चेत्स्थितोऽद्वये ।
तदात्मज्ञो न कार्यं कर्मणा तदा ॥ ६४ ॥ विराड्वैश्वानरो

संरन्नन्तः प्रजापतिः । प्रविलीने तु सर्वस्मिन्प्राज्ञोऽव्याकृतमुच्यते ॥ ६५ ॥ वाचारम्भणमात्रत्वात्सुपुप्तादित्रिकं त्वसत् । सत्यो ज्ञश्चाहमित्येवं सत्यसन्धो विमुच्यते ॥ ६६ ॥ भारूपत्वाद्यथा भानोर्नाहोरात्रे तथैव च । ज्ञानाज्ञाने न मे स्यातां चिद्रूपत्वाविशेषतः ॥ ६७ ॥ शास्त्रस्यानतिशङ्क्यत्वाद्ब्रह्मैव स्यामहं सदा । ब्रह्मणो मे न हेयं स्याद्ग्राह्यं चेति च संस्मरेत् ॥ ६८ ॥ अहमेव च भूतेषु सर्वेष्वेको नभो यथा । मयि सर्वाणि भूतानि पश्यन्नेवं न जायते ॥ ६९ ॥ न बाह्यं मध्यतो वान्तर्विद्यतेऽन्यत्स्वतः क्वचित् । अबाह्यान्तःश्रुतेः किंचित्तस्माच्छुद्धः स्वयंप्रभः ॥ ७० ॥ नेतिनेत्यादिशास्त्रेभ्यः प्रपञ्चोपशमोऽद्वयः । अविज्ञातादिशास्त्राच्च नैव ज्ञेयो ह्यतोऽन्यथा ॥ ७१ ॥ सर्वस्मात्माहमेवेति ब्रह्म चेद्विदितं परम् । स आत्मा सर्वभूतानामात्मा ह्येषामिति श्रुतेः ॥ ७२ ॥ जीवश्चेत्परमात्मानं स्वात्मानं देव मञ्जसा । देवोपास्यः स देवानां पशुत्वाच्च [illegible] ॥ ७३ ॥ अहमेव सदात्मज्ञः शून्यस्त्वन्यैर्यथाम्बरम् । इत्येवं सत्यसंधत्वादसद्धाता न बध्यते ॥ ७४ ॥ कृपणास्तेऽन्यथैवातो विदुर्ब्रह्म परं हि ये । स्वराड्योऽनन्यदृक्स्वस्थस्तस्य देवा असन्वशे ॥ ७५ ॥ हित्वा जात्यादिसंबन्धान्वाचोऽन्याः सह कर्मभिः । ओमित्येवं सदात्मानं सर्वं शुद्धं प्रपद्यथ ॥ ७६ ॥ सेतुं सर्वव्यवस्थानामहोरात्रादिवर्जितम् । तिर्यगूर्ध्वमधः सर्वं सकृज्ज्योतिरनामयम् ॥ ७७ ॥ धर्माधर्मविनिर्मुक्तं भूतभव्यात्कृताकृतात् । स्वमात्मानं परं विद्याद्विमुक्तं सर्वबन्धनैः ॥ ७८ ॥ अकुर्वन्सर्वकृच्छुद्धस्तिष्ठन्नत्येति धावतः । मायया सर्वशक्तित्वादजः सन्बहुधा मतः ॥ ७९ ॥ राजवत्साक्षिमात्रत्वात्सांनिध्याद्भ्रामको यथा ।

आमयज्ञगदात्माहं निःक्रियोऽकारकोऽद्वयः ॥ ८० ॥
निष्क्रियं नित्यं निर्द्वन्द्वं यन्निरामयम् । शुद्धं बुद्धं तथा
तद्ब्रह्मासीति धारयेत् ॥ ८१ ॥ बन्धं मोक्षं च सर्वं यत
भयं हेयमेकं द्वयं च ज्ञेयं त्यक्त्वाऽप्यतीतं परममधिगतं त
विशुद्धम् । विज्ञायैतद्यथावच्छ्रुतिमुनिगदितं शोकमोहा
सर्वज्ञः सर्वकृत्स्याद्भवभयरहितो ब्राह्मणोऽवाप्तकृत्यः ॥
न स्वयं स्वस्य नान्यश्च नान्यस्यात्मा च हेयगः । उपा
चाप्येवमिति सम्यङ्मतिः स्मृता ॥ ८३ ॥ आत्मप्रत्य
ह्येषा सर्ववेदान्तगोचरा । ज्ञात्वैतां हि विमुच्यन्ते सर्वसं
न्धनैः ॥ ८४ ॥ रहस्यं सर्ववेदानां देवानां चापि य
पवित्रं परमं ह्येतत्तदेतत्संप्रकाशितम् ॥ ८५ ॥ नैतद्दे
न्ताय रहस्यं ज्ञानमुत्तमम् । विरक्ताय प्रदातव्यं शिष्या
ताय च ॥ ८६ ॥ ददतश्चात्मनो ज्ञानं निष्क्रियोऽन्यो न
ते । ज्ञानमिच्छंस्तरेत्तस्माद्युक्तः शिष्यगुणैः सदा ॥ ८७ ॥
ज्ञेयं तथा ज्ञाता यस्मादन्यो न विद्यते । सर्वज्ञः सर्वशक्ति
ज्ञानात्मने नमः ॥ ८८ ॥ विद्यया तारिताः स्मो यैर्जन्म
महोदधिम् । सर्वज्ञेभ्यो नमस्तेभ्यो गुरुभ्योऽज्ञानसंकुलम् ॥
इति सप्तदशं सम्यङ्मतिप्रकरणम् ॥ १७ ॥

तत्त्वमसिप्रकरणम् ॥ १८ ॥

येनात्मना विलीयन्ते उद्भवन्ति च वृत्तयः । नित्याव
तस्मै नमो धीप्रत्ययात्मने ॥ १ ॥ प्रमथ्य वज्रोपमयुक्ति
श्रुतेररातीञ्शतशो वचोसिभिः । ररक्ष वेदार्थनिधिं विशाल
नमो यतीन्द्राय गुरोर्गरीयसे ॥ २ ॥ नित्यमुक्तः सदैव
स्त्वेवं चेन्न भवेन्मतिः । किमर्थं श्रावयत्येव मातृवच्छ्रुति

रात् ॥ ३ ॥ सिद्धादेवाहमित्यस्माद्युष्मद्धर्मो निषिध्यते । रज्ज्वामिवाहिधीर्युक्त्या तत्त्वमित्यादिशासनैः ॥ ४ ॥ शास्त्रप्रामाण्यतो ज्ञेया धर्मादेरस्तिता यथा । विपापोहो यथा ध्यानाद्भुतिः स्यात्पाप्मनस्तथा ॥ ५ ॥ सद्ब्रह्माहं करोमीति प्रत्ययावात्मसाक्षिकौ । तयोरज्ञानजस्यैव त्यागो युक्ततरो मतः ॥६॥ सदसीति प्रमाणोत्था धीरन्या तन्निभोद्भवा । प्रत्यक्षादिनिभा वापि बाध्यते दिग्भ्रमादिवत् ॥ ७ ॥ कुरु भोक्तेति यच्छास्त्रं लोकबुद्ध्यनुवादि तत् । सदसीति श्रुतेर्जाता बाध्यतेऽन्यैतयैव धीः ॥ ८ ॥ सदेव त्वमसीत्युक्ते नात्मनो मुक्तता स्थिरा । प्रवर्तते प्रसंचक्षामतो युक्त्याऽनुचिन्तयेत् ॥ ९ ॥ सकृदुक्तं न गृह्णाति वाक्यार्थज्ञोऽपि यो भवेत् । अपेक्षते त एवान्यद्वोचाम द्वयं हि तत् ॥ १० ॥ नियोगोऽप्रतिपन्नत्वात्कर्मणां स यथा भवेत् । अविरुद्धो भवेत्तावद्यावत्संवेद्यताऽदृढा ॥ ११ ॥ चेष्टितं च तथा मिथ्या स्वच्छन्दः प्रतिपद्यते । प्रसंख्यानमतः कार्यं यावदात्मानुभूयते ॥ १२ ॥ सदसीति च विज्ञानमक्षजो बाधते ध्रुवम् । शब्दोत्थं दृढसंस्कारो दोषैश्चाकृष्यते बहिः ॥ १३ ॥ श्रुतानुमानजन्मानौ सामान्यविषयौ यतः । प्रत्ययाचक्षजोऽवश्यं विशेषार्थौ निवारयेत् ॥ १४ ॥ वाक्यार्थप्रत्ययी कश्चिन्निर्दुःखो नोपलभ्यते । यदि वा दृश्यते कश्चिद्वाक्यार्थश्रुतिमात्रतः ॥ १५ ॥ निर्दुःखोऽतीतदेहेषु कृतभावोऽनुमीयते । चर्या नोऽशास्त्रसंवेद्या स्यादनिष्टं तथासति ॥ १६ ॥ सदसीति फलं चोक्त्वा विधेयं साधनं यतः । न तदन्यत्प्रसंख्यानात्प्रसिद्धार्थमिहेष्यते ॥ १७ ॥ तस्मादनुभवायैव प्रसंचक्षीत यत्नतः । त्यजन्साधनतत्साध्यविरुद्धं शममादिमान् ॥ १८ ॥ नैतदेवं

रहस्यानां नेतिनेत्यवसानतः । क्रियासाध्यं पुरा श्रआ
मोक्षो नित्यसिद्धतः ॥ १९ ॥ पुत्रदुःखं यथाध्यस्तं पित्रा
स्व आत्मनि । अहंकर्ता तथाध्यस्तो नित्यादुःखे स्व आत्म
॥ २० ॥ सोऽध्यासो नेतिनेतीति प्राप्तवत्प्रतिषिध्यते । प्रा
ऽध्यासविधिः कश्चित्कुतश्चिन्नोपपद्यते ॥ २१ ॥ आत्म
यथाध्यासः प्रतिषेधस्तथैव च । मलाध्यासनिषेधौ खे
च यथाबुधैः ॥ २२ ॥ प्राप्तश्चेत्प्रतिषिध्येत मोक्षोऽनित्यो
ध्रुवम् । अतोऽप्राप्तनिषेधोऽयं दिव्यग्निचयनादिवत् ॥
संभाव्यो गोचरे शब्दः प्रत्ययो वा न चान्यथा । न सं
तदात्मत्वादहं कर्तुस्तथैव च ॥ २४ ॥ अहंकर्त्रात्मनि
चैतन्ये कर्तृतादि यत् । नेति नेतीति तत्सर्वं साहंकर्त्रा
ध्यते ॥ २५ ॥ उपलब्धिः स्वयंज्योतिर्दृशिः प्रत्यक्सदा
साक्षात्सर्वान्तरः साक्षी चेता नित्योऽगुणोऽद्वयः ॥
संनिधौ सर्वदा तस्य स्यात्तदाभोऽभिमानकृत् । आत्मा
द्वयं चातः स्यादहंममगोचरः ॥ २७ ॥ जातिकर्मादिम
तस्मिञ्शब्दास्त्वहंकृति । न कश्चिद्वर्तते शब्दस्तदभावात्स्व
त्मनि ॥ २८ ॥ आभासो यत्र तत्रैव शब्दाः प्रत्यग्दशि
ताः । लक्षयेयुर्न साक्षात्तमभिदध्युः कथंचन ॥ २९ ॥
जात्यादिमान्कश्चिदर्थः शब्दैर्निरूप्यते ॥ ३० ॥ आत्मा
यथाहंकृदात्मशब्दैस्तथोच्यते । उल्मुकादौ यथाग्न्यर्थः
त्वान्न चाञ्जसा ॥ ३१ ॥ मुखादन्यो मुखाभासो यथाद
कारतः । आभासान्मुखमप्येवमादर्शननुवर्तनात् ॥ ३
अहंकृत्यात्मनिर्भासो मुखाभासवदिष्यते । मुखवत्स्मृत आ
न्योऽविविक्तौ तौ तथैव च ॥ ३३ ॥ संसारी च स

आभासो यस्त्वहंकृतिः । वस्तुच्छाया स्मृतेरन्यन्माधुर्यादि च कारणम् ॥ ३४ ॥ ज्ञैकदेशो विकारो वा तदाभासाश्रयः परे । अहंकर्तैव संसारी स्वतन्त्र इति केचन ॥ ३५ ॥ अहंकारादिसंतानः संसारी नान्वयी क्वचित् । इत्येवं सौगता आहुस्तत्र न्यायो विचार्यताम् ॥ ३६ ॥ संसारिणां कथा त्वास्तां प्रकृतं त्वधुनोच्यते । मुखाभासो य आदर्शे धर्मो नान्यतरस्य सः । द्वयोरेकस्य चेद्धर्मो वियुक्तेऽन्यतरे भवेत् ॥ ३७ ॥ मुखेन व्यपदेशात्स मुखस्यैवेति चेन्मतम् । नादर्शानुविधानाच्च मुखे सत्यविभावतः ॥ ३८ ॥ द्वयोरेवेति चेत्तन्न द्वयोरेवाप्यदर्शनात् । अदृश्यस्य सतो दृष्टिः स्याद्राहोश्चन्द्रसूर्ययोः ॥ ३९ ॥ राहोः प्रागेव वस्तुत्वं सिद्धं शास्त्रप्रमाणतः । छायापक्षे त्ववस्तुत्वं तस्य स्यात्पूर्वयुक्तितः ॥ ४० ॥ छायाकान्तेर्निषेधोऽयं नतु वस्तुत्वसाधकः । नह्यर्थान्तरनिष्ठं सद्वाक्यमर्थान्तरं वदेत् ॥ ४१ ॥ माधुर्यादि च यत्कार्यमुष्णद्रव्याद्यसेवनात् । छायाया न त्वदृष्टत्वादपामेव च दर्शनात् ॥ ४२ ॥ आत्माभासाश्रयाश्चैवं मुखाभासाश्रया यथा । गम्यन्ते शास्त्रयुक्तिभ्यामाभासासत्त्वमेव च ॥ ४३ ॥ न दृशेरविकारित्वादाभासस्याप्यवस्तुतः । नाचितित्वादहंकर्तुः कस्य संसारिता भवेत् ॥ ४४ ॥ अविद्यामात्र एवातः संसारोऽस्त्वविवेकतः । कूटस्थेनात्मना नित्यमात्मवानात्मनीव सः ॥ ४५ ॥ रज्जुसर्पो यथा रज्ज्वा सात्मकः प्राग्विवेकतः । अवस्तुसन्नपि ह्येष कूटस्थेनात्मना तथा ॥४६॥ आत्माभासाश्रयश्चात्मा प्रत्ययैः स्वैर्विकारवान् । सुखी दुःखी च संसारी नित्य एवेति केचन ॥४७॥ आत्माभासापरिज्ञानाद्याथात्म्येन विमोहिताः । अहंकर्तारमात्मेति मन्यन्ते ते निरागमाः

॥४८॥ संसारो वस्तुसंस्तेषां कर्तृभोक्तृत्वलक्षणः । आत्मा
श्रयाज्ञानात्संसरन्त्यविवेकतः ॥४९॥ चैतन्याभासता बुद्धे
नस्तत्स्वरूपता। स्याच्चेत्तं ज्ञानशब्दैश्च वेदः शास्तीति युज्यते चैत
प्रकृतिप्रत्ययार्थौ यौ भिन्नावेकाश्रयौ यथा। करोति
त्यादौ दृष्टौ लोकप्रसिद्धितः ॥ ५१ ॥ नानयोर्ह्याश्रयत्वं
दृष्टं स्मृतौ तथा । जानात्यर्थेषु को हेतुर्ह्याश्रयत्वे नि
॥५२॥ आत्माभासस्तु तिङ्वाच्यो धात्वर्थश्च धियः क्रिया।
चाविवेकेन जानातीत्युच्यते मृषा ॥ ५३ ॥ न बुद्धे
ऽस्ति नात्मनो विद्यते क्रिया। अतो नान्यतरस्यापि जा
च युज्यते ॥ ५४ ॥ नाप्यतो भावशब्देन ज्ञप्तिरित्यपि यु
न ह्यात्मा विक्रियामात्रो नित्य आत्मेति शासनात् ॥
न बुद्धेर्बुद्धिवाच्यत्वं करणं न ह्यकर्तृकम्। नापि ज्ञायत
कर्मशब्दैर्निरूप्यते ॥ ५६ ॥ न येषामेक एवात्मा नि
ऽविक्रियः सदा । तेषां स्याच्छब्दवाच्यत्वं ज्ञेयत्वं चात्मन
॥ ५७ ॥ यदाहं कर्तुरात्मत्वं तदा शब्दार्थमुख्यता । ना
यादिमत्त्वात्तु श्रुतौ तस्यात्मतेष्यते ॥ ५८ ॥ हन्त
मुख्यार्थो नापि गौणः कथंचन । जानातीत्यादिशब्दस
वाच्या तथापि तु ॥ ५९ ॥ शब्दानामयथार्थत्वे वेद
माणता । सा च नेष्टा ततो ग्राह्या गतिरस्य प्रसिद्धितः ॥
प्रसिद्धिर्मूढलोकस्य यदि ग्राह्या निरात्मता । लोकाय
द्धान्तः सा चानिष्टा प्रसज्यते ॥ ६१ ॥ अभियुक्तप्रसिद्धि
बह्वविवेकता । गतिशून्यं न वेदोऽयं प्रमाणं संवदत्युत ॥
॥ आदर्शे मुखसामान्यं मुखस्येष्टं हि मानवैः । मुखस्य प्रति
हि मुखाकारेण दृश्यते ॥ ६३ ॥ यत्र यस्यावभासस्तु

ाविवेकतः । जानातीति क्रियां सर्वो लोको वक्ति स्वभावतः ॥ ६४ ॥ बुद्धेः कर्तृत्वमध्यस्य जानातीति ज्ञ उच्यते । तथा चैतन्यमध्यस्य ज्ञत्वं बुद्धेरिहोच्यते ॥ ६५ ॥ स्वरूपं चात्मनो ज्ञानं नित्यं ज्योतिःश्रुतेर्यतः । न बुद्ध्या क्रियते तस्मान्नात्मनान्येन वा सदा ॥ ६६ ॥ देहेऽहंप्रत्ययो यद्वज्जानातीति च लौकिकाः । वदन्ति ज्ञानकर्तृत्वं तद्वद्बुद्धेस्तथात्मनः ॥ ६७ ॥ बौद्धैस्तु प्रत्ययैरेवं क्रियमाणैश्च चिन्निभैः । मोहिताः क्रियते ज्ञानमित्याहुस्तार्किका जनाः ॥ ६८ ॥ तस्माज्ज्ञाभासबुद्धीनामविवेकात्प्रवर्तिताः । जानातीत्यादिशब्दश्च प्रत्ययो या च तत्स्मृतिः ॥ ६९ ॥ आदर्शानुविधायित्वं छायाया अस्यते मुखम् । बुद्धिधर्मानुकारित्वं ज्ञाभासस्य तथेष्यते ॥ ७० ॥ बुद्धेस्तु प्रत्ययास्तस्मादात्माभासेन दीपिताः । ग्राहिका इव भासन्ते दहन्तीवोल्मुकादयः ॥ ७१ ॥ स्वयमेवावभासन्ते ग्राहकाः स्वयमेव च । इत्येवं ग्राहकास्तित्वं प्रतिषिध्यन्ति सौगताः ॥ ७२ ॥ यद्येवं नान्यदृश्यास्ते किं तद्वारणमुच्यताम् । भावाभावौ हि तेषां यौ नान्यग्राह्यौ सता यदि ॥ ७३ ॥ अन्वयी ग्राहकस्तेषामित्येतदपि तत्समम् । अचितित्वस्य तुल्यत्वादन्यस्मिन्ग्राहके सति ॥ ७४ ॥ अध्यक्षस्य समीपे तु सिद्धिः स्यादिति चेन्मतम् । नाध्यक्षेऽनुपकारित्वादन्यत्रापि प्रसङ्गतः ॥ ७५ ॥ अर्थी दुःखी च यः श्रोता सत्वध्यक्षोऽथवेतरः । अध्यक्षस्य च दुःखित्वमर्थित्वं च न ते मतम् ॥७६॥ कर्ताध्यक्षः सदसीति नैव सद्ग्रहमर्हति । सदेवासीति मिथ्योक्तिः श्रुतेरपि न युज्यते ॥ ७७ ॥ अविविच्योभयं वक्ति श्रुतिश्चेत्स्याद्ग्रहस्तथा । असदस्तु विविच्यैव त्वमेवेति वदेद्यदि । प्रत्ययान्वयिनिष्ठत्व-

मुक्तदोषः प्रसज्यते ॥ ७८ ॥ त्वमित्यध्यक्षनिष्ठश्चेदहम
कथम् । संबन्धो वाच्य एवात्र येन त्वमिति लक्षयेत् ॥
द्रष्टृदृश्यत्वसंबन्धो यद्यध्यक्षे क्रियेत्कथम् ॥ ८० ॥
ऽपि तादात्म्यमध्यक्षस्य भवेद्यदि । आत्माध्यक्षो मम
संबन्धाग्रहणेन धीः ॥८१॥ संबन्धग्रहणं शास्त्रादिति चे
नहि । पूर्वोक्ताः स्युस्त्रिधा दोषा ग्रहो वा स्यान्ममेति च
अदृशिर्दृशिरूपेण भाति बुद्धिर्यदा तदा । प्रत्यया अपि
स्युस्तप्तायोविस्फुलिङ्गवत् ॥ ८३ ॥ आभासस्तदभावश्च
सीम्नो न चान्यथा । लोकस्य युक्तितः स्यातां तद्ग्रहश्च
सति ॥ ८४ ॥ नन्वेवं दृशिसंक्रान्तिरयःपिण्डेऽग्नि
मुखाभासवदित्येतदादर्शे तन्निराकृतम् ॥ ८५ ॥ कृष्ण
हिताभासमित्येतद्दृष्टमुच्यते । दृष्टदार्ष्टान्ततुल्यत्वं न
त्मना क्वचित् ॥ ८६ ॥ तथैव चेतनाभासं चित्तं चेतन
चेत् । मुखाभासो यथादर्शे आभासश्चोदितो मृषा ॥
चित्तं चेतनमित्येतच्छास्त्रयुक्तिविवर्जितम् । देहस्यापि
स्याच्चक्षुरादेस्तथैव च ॥ ८८ ॥ तदप्यस्त्विति चेत्तन्न
तिकसंगतेः । न च धीर्दृशिरसीति यद्याभासो न चेतसि
सदसीति धियोऽभावे व्यर्थं स्यात्त्वमस्यपि । युष्मद
गन्ने स्यादर्थवदिदं वचः ॥ ९० ॥ ममेदंप्रत्ययौ ज्ञेयौ
न संशयः । अहमित्यस्मदीष्टः स्यादयमसीति चोभयोः
अन्योन्यापेक्षया तेषां प्रधानगुणतेष्यते । विशेषणवि
तथा ग्राह्यं हि युक्तितः ॥ ९२ ॥ ममेदं द्वयमप्येतन्म
विशेषणम् । धनी गोमान्यथा तद्वद्देहोऽहंकर्तुरेव च ॥
बुद्ध्यारूढं सदा सर्वं साहंकर्ता च साक्षिणः । तस्मात्त

हरि= ॐ॥ ॐ॥ ॐ॥

स्रो ज्ञः किंचिदप्यस्पृशन्सदा ॥ ९४ ॥ प्रतिलोममिदं सर्वं यथोक्तं लोकबुद्धितः । अविवेकधियामस्ति नास्ति सर्वं विवेकिनाम् ॥ ९५ ॥ अन्वयव्यतिरेकौ हि पदार्थस्य पदस्य च । स्यादेतदहमित्यत्र युक्तिरेवावधारणे ॥ ९६ ॥ नाद्राक्षमहमित्यस्मिन्सुषुप्तेऽन्यन्मनागपि । न वारयति दृष्टिं स्वां प्रत्ययं तु निषेधति ॥ ९७ ॥ स्वयंज्योतिर्न हि द्रष्टुरित्येवं संविदोऽस्तिताम् । कौटस्थ्यं च तथा तस्याः प्रत्ययस्य तु लुप्तताम् ॥ स्वयमेवाब्रवीच्छास्त्रं प्रत्ययावगती पृथक् ॥ ९८ ॥ एवं विज्ञातवाक्यार्थे श्रुतिलोकप्रसिद्धितः । श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये ॥ ९९ ॥ ब्रह्मा दाशरथेर्यद्वदुक्त्यैवापानुदत्तमः । तस्य विष्णुत्वसंबोधे न यत्नान्तरमूचिवान् ॥ १०० ॥ अहंशब्दस्य निष्ठा या ज्योतिषि प्रत्यगात्मनि । सैवोक्ता सदसीत्येवं फलं तत्र विमुक्तता ॥ १०१ ॥ श्रुतमात्रेण चेन्न स्यात्कार्यं तत्र भवेद्ध्रुवम् । व्यवहारात्पुरापीष्टः सद्भावः स्वयमात्मनः ॥ १०२ ॥ अशनायादिनिर्मुक्त्यै तत्काला जायते प्रमा । तत्त्वमस्यादिवाक्यार्थे त्रिषु कालेऽप्यसंशयः ॥ १०३ ॥ प्रतिबन्धविहीनत्वात्स्वयं चानुभवात्मनः । जायेतैव प्रमा तत्र स्वात्मन्येव न संशयः ॥ १०४ ॥ किं सदेवाहमस्मीति किंवान्यत्प्रतिपद्यते । सदेव चेदहंशब्दः सता मुख्यार्थ इष्यताम् ॥१०५॥ अन्यच्चेत्सदहंग्राहप्रतिपत्तिर्मृषैव सा । तस्मान्मुख्यग्रहे नास्ति वारणावगतेरिह ॥ १०६ ॥ प्रत्ययी प्रत्ययश्चैव यदाभासौ तदर्थता । तयोरचितिमत्त्वाच्च चैतन्ये कल्प्यते फलम् ॥ १०७ ॥ कूटस्थेऽपि फलं योग्यं राजनीव जयादिकम् । तदनात्मत्वहेतुभ्यां क्रियायाः प्रत्ययस्य च ॥ १०८ ॥ आदर्शस्तु यदाभा-

सो मुखाकारः स एव सः । यथैवं प्रत्ययादर्शो यदाभास्को
ह्यहम् ॥ १०९ ॥ इत्येवं प्रतिपत्तिः स्यात्सदसीति च नान्य
तत्त्वमित्युपदेशोऽपि द्वाराभावादनर्थकः ॥ ११० ॥ अध्य
स्यादुपदेशश्चेदर्थवत्त्वं तथा भवेत् । अध्यक्षस्य न कथं
श्रोतृत्वं कस्य तद्भवेत् ॥ १११ ॥ अध्यक्षस्य समीपे स्या
त्वेति चेन्मतम् । न तत्कृतोपकारोऽस्ति काष्ठाद्यद्वन्न
॥ ११२ ॥ बुद्धौ चेत्तत्कृतः कश्चिन्नन्वेवं परिणामिता ।
भासेऽपि च को दोषः सति श्रुत्याद्यनुग्रहे ॥ ११३ ॥
परिणामश्चेन्न रज्ज्वादिनिभत्ववत् । सर्पादेश्च तथावोचमा
मुखत्ववत् ॥ ११४ ॥ नात्माभासत्वसिद्धिश्चेदात्मनो ग्रह
थक् । मुखादेश्च पृथक्सिद्धिरिह त्वन्योन्यसंश्रयः ॥ ११
अध्यक्षस्य पृथक्सिद्धावाभासस्य तदीयता । आभासस्य
यत्ते ह्यध्यक्षव्यतिरिक्तता ॥ ११६ ॥ नैवं स्वप्ने पृथ
प्रत्ययस्य दृशेस्तथा । रथादेस्तत्र शून्यत्वात्प्रत्ययस्यात्मना
॥ ११७ ॥ अवगत्या हि संव्याप्तः प्रत्ययो विषयाक
जायते स यदाकारः स बाह्यो विषयो मतः ॥ ११८ ॥
प्सिततमत्वात्स तद्वान्कार्ये नियुज्यते । आकारो यत्र
करणं तदिहोच्यते ॥ ११९ ॥ यदाभासेन संव्याप्तः सं
निगद्यते । त्रयमेतद्विविच्यात्र यो जानाति स आत्मवित् ॥१
सम्यक्संशयमिथ्योक्ताः प्रत्यया व्यभिचारिणः । एकैवा
स्तेषु भेदस्तु प्रत्ययार्पितः ॥ १२१ ॥ आधिभेदाद्यथा
मणेरवगतेस्तथा । अशुद्धिः परिणामश्च सर्वं प्रत्ययसं
॥ १२२ ॥ प्रथनं ग्रहणं सिद्धिः प्रत्ययानामिहान्यतः ।
रोक्ष्यात्तदेवोक्तमनुमानं प्रदीपवत् ॥ १२३ ॥ किमन्य

त्कश्चित्प्रमाणेन तु केनचित् । विनैव तु प्रमाणेन निवृत्त्यान्यस्य शेषतः ॥ १२४ ॥ शब्देनैव प्रमाणेन निवृत्तिश्चेदिहोच्यते । अध्यक्षस्याप्रसिद्धित्वाच्छून्यतैव प्रसज्यते ॥ १२५ ॥ चेतनस्त्वं कथं देह इति चेन्नाप्रसिद्धितः । चेतनस्यान्यतः सिद्धावेवं स्यादन्यहानतः ॥ १२६ ॥ अध्यक्षः स्वयमस्त्येव चेतनस्यापरोक्षतः । तुल्य एवं प्रबोधः स्यादन्यस्यासत्त्ववादिना ॥१२७॥ अहमज्ञासिषं चेदमिति लोकस्मृतेरिह । करणं कर्म कर्ता च सिद्धास्त्वेकक्षणे किल ॥ १२८ ॥ प्रामाण्येऽपि स्मृतेः शब्द्यायौगपद्यं विभाव्यते । क्रमेण ग्रहणं पूर्वं स्मृतेः पश्चात्तथैवं च ॥ १२९ ॥ अज्ञासिषमिदं मां चेत्यपेक्षा जायते ध्रुवम् । विशेषोऽपेक्ष्यते यत्र तत्र नैवैककालता ॥ १३० ॥ आत्मनो ग्रहणे चापि त्रयाणामिह संभवात् । आत्मन्यासक्तकर्तृत्वं न स्यात्करणकर्मणोः ॥ १३१ ॥ व्याप्तुमिष्टं च यत्कर्तुः क्रियया कर्म तत्स्मृतम् । अतो हि कर्तृतन्त्रत्वं तस्येष्टं नान्यतन्त्रता ॥ १३२ ॥ शब्दाद्वानुमितेर्वापि प्रमाणाद्वा ततोऽन्यतः । सिद्धिः सर्वपदार्थानां स्यादज्ञंप्रति नान्यथा ॥ १३३ ॥ अध्यक्षस्यापि सिद्धिः स्यात्प्रमाणेन विनैव वा । विना स्वस्य प्रसिद्धिस्तु नाज्ञं प्रत्युपयुज्यते ॥ १३४ ॥ तस्यैवाज्ञत्वमिष्टं चेज्ज्ञानत्वेन्या मतिर्भवेत् । अन्यस्यैवाज्ञतायां च तद्विज्ञाने ध्रुवा भवेत् ॥ १३५ ॥ ज्ञातता स्वात्मलाभो वा सिद्धिः स्यादन्यदेव वा । ज्ञातत्वेऽनन्तरोक्तौ त्वं पक्षौ संस्मर्तुमर्हसि ॥ १३६ ॥ सिद्धिः स्यात्स्वात्मलाभश्चेद्यत्नस्तत्र निरर्थकः । सर्वलोकप्रसिद्धत्वात्स्वहेतुभ्यस्तु वस्तुतः ॥१३७॥ ज्ञानज्ञेयादिवादेऽतः सिद्धिर्ज्ञातत्वमुच्यते । अध्यक्ष्याध्यक्षयोः सिद्धिर्ज्ञेयत्वं नात्मलाभता ॥ १३८ ॥ स्पष्टत्वं कर्म-

कर्त्रादेः सिद्धिता यदि कल्प्यते । स्पष्टतास्पष्टते स्याता
न चात्मनः ॥१३९॥ अद्रष्टुर्नैव चान्धस्य स्पष्टीभावो घ
कर्त्रादेः स्पष्टतेष्टा चेद्द्रष्टृताऽध्यक्षकर्तृका ॥ १४० ॥ अ
किमन्यस्मिन्स्यात्तवापेक्षया वद । अनुभवितरीष्टा स्यात्सो
भूतिरेव नः ॥ १४१ ॥ अभिन्नोऽपि हि बुद्ध्यात्मा विप
तदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ १४
भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते । सत्त्वं नाि
स्याश्चेत्सकर्तृत्वं तथेष्यताम् ॥ १४३ ॥ न कश्चिचेष्यते भ
चेत्पक्षहानता । नन्वस्तित्वादयो धर्मा नास्तित्वादिनिवृ
न भूतेस्तर्हि नाशित्वं स्वालक्ष्ण्यं मतं हि ते ॥ १४४ ॥
क्षणावधिर्नाशोऽनाशोनाशनिवृत्तिता । अगोरसत्वं गो
नतु तद्गोत्वलक्षणम् ॥१४५॥ क्षणवाच्योऽपि योऽर्थः स
ऽप्यन्याभाव एव ते ॥ १४६ ॥ भेदाभावेऽप्यभावस्य
नामभिरिष्यते । नामभेदैरनेकत्वमेकस्य स्यात्कथं तव ॥१
अपोहो यदि भिन्नानां वृत्तिस्तस्य कथं गवि । नाभावा भे
सर्वे विशेषा वा कथंचन ॥ १४८ ॥ नामजात्यादयो व
विदस्तेऽविशेषतः ॥ १४९ ॥ प्रत्यक्षमनुमानं वा व्यवहारे
च्छसि । क्रियाकारकभेदैस्तदभ्युपेयं ध्रुवं भवेत् ॥ १५
तस्मान्नीलं तथा पीतं घटादिर्वा विशेषणम् । संविद
स्याद्येन चाप्यनुभूयते ॥ १५१ ॥ रूपादीनां यथान्यः स
ह्यत्वाद्ग्राहकस्तथा । प्रत्ययस्तत्तथान्यः स्याद्व्यञ्जकत्वात्प्रदी
॥ १५२ ॥ अध्यक्षस्य दृशेः कीदृक्संबन्धः संभविष्यति
अध्यक्षेण तु दृश्येन मुक्त्वान्यो द्रष्टृदृश्यताम् ॥१५३॥ अ
कृता दृष्टिर्दृश्यं व्याप्नोत्यथापि वा । नित्याध्यक्षकृतः कश्चिदु

भवेद्धियाम् ॥ १५४ ॥ स चोक्तस्तन्निभत्वं प्राक्संव्याप्तिश्च घटादिषु । यथालोकादिसंव्याप्तिर्व्यञ्जकत्वाद्धियस्तथा ॥१५५॥ आलोकस्थो घटो यद्वद्बुद्ध्यारूढो भवेत्तथा । धीव्याप्तिः स्याद्घटारोहो धियो व्याप्तौ क्रमो भवेत् ॥ १५६ ॥ पूर्वं स्यात्प्रत्ययव्याप्तिस्ततोऽनुग्रह आत्मनः । कृत्स्नाध्यक्षस्य नो युक्तः कालाकाशादिवत्क्रमः ॥ १५७ ॥ विषयग्रहणं यस्य कारणापेक्षया भवेत् । सत्येव ग्राह्यशेषे च परिणामी स चित्तवत् ॥ १५८ ॥ अध्यक्षोऽहमिति ज्ञानं बुद्धेरेव विनिश्चयः । नाध्यक्षस्याविशेषत्वान्न तस्यास्ति परो यतः ॥ १५९ ॥ कर्त्रा चेदहमित्येवमनुभूयेत मुक्तता । सुखदुःखविनिर्मोको नाहंकर्तरि युज्यते॥१६०॥ बाध्यते प्रत्ययेनेह विवेकेनाविवेकवान् । देहादावभिमानोत्थो दुःखीति प्रत्ययो ध्रुवम् । कुण्डलीप्रत्ययो यद्वत्प्रत्यगात्माभिमानिना ॥ १६१ ॥ विपर्यासे सदन्तं स्यात्प्रमाणस्याप्रमाणतः ॥ १६२ ॥ दाहच्छेदविनाशेषु दुःखित्वं नान्यथात्मनः । नैव ह्यन्यस्य दाहादावन्यो दुःखी भवेत्कचित् ॥ १६३ ॥ अस्पर्शत्वाददेहत्वान्नाहं दाह्यो यतः सदा । तस्मान्मिथ्याभिमानोत्थं मृते पुत्रे मृतिर्यथा ॥ १६४ ॥ कुण्डल्यहमिति ह्येतद्बाध्येतैव विवेकिना । दुःखीति प्रत्ययस्तद्वत्केवलाहंधिया सह ॥१६५॥ सिद्धे दुःखित्व इष्टं स्यात्तच्छक्तिश्छन्दसात्मनः । मिथ्याभिमानतो दुःखी तेनार्थापादनक्षमः ॥ १६६ ॥ अस्पर्शोऽपि यथा स्पर्शमचलश्चलनादि च । अविवेकात्तथा दुःखं मानसं चात्मनीक्षते ॥ १६७ ॥ विवेकात्मधिया दुःखं नुद्यते चलनादिवत् । अविवेकस्वभावेन मनो गच्छत्यनिच्छतः ॥ १६८ ॥ तदानुदृश्यते दुःखं नैश्चल्येनैव तस्य तत् । प्रत्य-

गात्मनि तस्मात्तद्दुःखं नैवोपपद्यते ॥ १६९ ॥ त्वंसतोस्
नीडत्वान्नीलाश्ववदिदं भवेत् ॥ १७० ॥ निर्दुःखवाचिना
गात्त्वंशब्दस्य तदर्थता । प्रत्यगात्माभिधानेन तच्छब्दस
स्तथा ॥ १७१ ॥ दशमस्त्वमसीत्येवं वाक्यं स्यात्प्रत्यगा
॥ १७२ ॥ स्वार्थस्य ह्यप्रहाणेन विशिष्टार्थसमर्पकौ । प्रत्य
त्मावगत्यन्तौ नान्योऽर्थोऽर्थाद्विरोध्यतः ॥ १७३ ॥ नवपु
ह्याराद्धि स्वात्मानं दशपूरणम् । अपश्यञ्ज्ञातुमेवेच्छेत्स्वमा
जनस्तथा ॥ १७४ ॥ अविद्यावद्धचक्षुष्ट्वात्कामापहृतधीः स
विविक्तं दृशिमात्मानं नेक्षते दशमं यथा ॥ १७५ ॥ द
स्त्वमसीत्येवं तत्त्वमस्यादिवाक्यतः । स्वमात्मानं विजा
कृत्स्नान्तःकरणे क्षणम् ॥ १७६ ॥ इदं पूर्वमिदं पश्चा
वाक्यं भवेदिति । अन्वयव्यतिरेकाभ्यां ततो वाक्यार्थबोध
॥१७७॥ वाक्ये हि श्रूयमाणानां पदानामर्थसंस्मृतिः । नि
नैव वेदेऽस्ति पदसांगत्यमर्थतः ॥१७८॥ यदा नित्येषु वा
पदार्थस्तु विविच्यते । वाक्यार्थज्ञानसंक्रान्त्यै तदा प्रश्नो
युज्यते ॥ १७९ ॥ अन्वयव्यतिरेकोक्तिः पदार्थस्मरणाय
स्मृत्यभावे न वाक्यार्थो ज्ञातुं शक्यो हि केनचित् ॥ १८०
तत्त्वमस्यादिवाक्येषु त्वंपदार्थाविवेकतः । व्यज्यते नैव वाक्या
नित्यमुक्तोऽहमित्यतः ॥ १८१ ॥ अन्वयव्यतिरेकोक्तिस्त
काय नान्यथा । त्वंपदार्थविवेके हि पाणावर्पितबिल्व
॥ १८२ ॥ वाक्यार्थो व्यज्यते चैवं केवलोऽहं पदार्थ
दुःखीत्येतदपोहेन प्रत्यगात्मविनिश्चयात् ॥ १८३ ॥ त
संभवत्यर्थे श्रुतहानाश्रुतार्थधीः । नैव कल्पयितुं युक्ता पद
क्यार्थकोविदैः ॥ १८४ ॥ प्रत्यक्षादीनि बाधेरन्कृष्णलादि

पाकवत् । अक्षजादिनिभैरेतैः कथं स्याद्वाक्यबाधनम् ॥१८५॥ दुःख्यस्मीति सति ज्ञाने निर्दुःखीति न जायते । प्रत्यक्षादिनिभत्वेऽपि वाक्यान्न व्यभिचारतः ॥ १८६ ॥ स्वप्ने दुःख्यहमध्यासं दाहच्छेदादिहेतुतः । तत्कालभाविभिर्वाक्यैर्न बाधः क्रियते यदि ॥ १८७ ॥ समाप्तेस्तर्हि दुःखस्य प्राक् तद्बाध इष्यताम् । न हि दुःखस्य संतानो भ्रान्तेर्वा दृश्यते क्वचित् ॥ १८८ ॥ प्रत्यगात्मन आत्मत्वं दुःख्यस्मीत्यस्य बाधया । दशमं नवमस्येव वेद चेदविरुद्धता ॥ १८९ ॥ नित्यमुक्तत्वविज्ञानं वाक्याद्भवति नान्यतः । वाक्यार्थस्यापि विज्ञानं पदार्थस्मृतिपूर्वकम् ॥ १९० ॥ अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् । एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते ॥ १९१ ॥ सदेवेत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत् । दशमस्त्वमसीत्यस्माद्यथैवं प्रत्यगात्मनि ॥ १९२ ॥ प्रबोधेन यथा स्वाप्नं सर्वदुःखं निवर्तते । प्रत्यगात्मधिया तद्वद्दुःखित्वं सर्वदात्मनः ॥ १९३ ॥ कृष्णत्वादौ प्रमाजन्म तदन्यार्थोऽस्मृदुत्वतः । तत्त्वमस्यादिवाक्येषु न त्वेवमविरोधतः ॥ १९४ ॥ वाक्ये तत्त्वमसीत्यस्मिन्ज्ञातार्थं तदसिद्धयम् । त्वमर्थे सत्यसाहाय्याद्वाक्यं नोत्पादयेत्प्रमाम् ॥१९५॥ तत्त्वमोस्तुल्यनीडार्थमसीत्येतत्पदं भवेत् ॥ १९६ ॥ तच्छब्दः प्रत्यगात्मार्थस्तच्छब्दार्थस्त्वमस्तथा । दुःखित्वाप्रत्यगात्मत्वं वारयेतामुभावपि ॥ १९७ ॥ एवं च नेतिनेत्यर्थं गमयेतां परस्परम् ॥ १९८ ॥ एवं तत्त्वमसीत्यस्य गम्यमाने फले कथम् । अप्रमाणत्वमस्योक्त्वा क्रियापेक्षत्वमुच्यते ॥ १९९ ॥ तस्मादाद्यन्तमध्येषु कुर्विंत्येतद्विरोध्यतः । न कल्पामोऽश्रुतत्वाच्च श्रुतत्यागोऽप्यनर्थकः ॥ २०० ॥ यथानुभूयते

तृप्तिर्भुजेर्वाक्यान्न गम्यते । वाक्यस्य विधृतिस्तद्वद्दोशक्त
सीक्रिया ॥२०१॥ सत्यमेवमनात्मार्थवाक्यात्पारोक्ष्यबोधन
प्रत्यगात्मनि न त्वेवं संख्याप्राप्तिवद्ध्रुवम् ॥ २०२ ॥ स्व
घत्वपर्यायः स्वप्रमाणक इष्यताम् । निवृत्तावगमः सिद्धः
त्मनोऽनुभवश्च नः ॥ २०३ ॥ बुद्धीनां विषयो दुःखं नो
विषया मताः । कुतोऽस्य दुःखसंबन्धो दृशेः स्यात्प्रत्यगात्म
॥ २०४ ॥ दृशिरेवानुभूयेत स्वेनैवानुभवात्मना । तदाभा
तया जन्म धियोऽस्यानुभवः स्मृतः ॥ २०५ ॥ अशनाया
निर्मुक्तः सिद्धो मोक्षस्त्वमेव सः । श्रोतव्यादि तवेत्येतद्वि
कथमुच्यते ॥ २०६ ॥ सेत्स्यतीत्येव चेत्तत्स्याच्छ्रवणादि
भवेत् । मोक्षस्यानित्यतैवं स्याद्विरोधे नान्यथा वचः ॥२०७
श्रोतृश्रोतव्ययोर्भेदो यदीष्टः स्याद्भवेदिदम् । इष्टार्थ
एवं स्यान्न युक्तं सर्वथा वचः ॥ २०८ ॥ सिद्धो मोक्षोऽह
त्येव ज्ञात्वात्मानं भवेद्यदि । चिकीर्षुर्यः स मूढात्मा शास्त्रं
द्घाटयत्यपि ॥ २०९ ॥ नहि सिद्धस्य कर्तव्यं सकार्यस्य
सिद्धता । उभयालम्बनं कुर्वन्नात्मानं वञ्चयत्यपि ॥ २१०
सिद्धो मोक्षस्त्वमित्येतद्वस्तुमात्रं प्रदर्श्यते । श्रोतुस्तथात्वविज्ञा
प्रवृत्तिः स्यात्कथं त्विति ॥ २११ ॥ कर्ता दुःख्यहमस्मीति प्रत्य
क्षेणानुभूयते । कर्ता दुःखी च माभूवमिति यत्नो भवेत्
॥ २१२ ॥ तद्विज्ञानाय युक्त्यादि कर्तव्यं श्रुतिरब्रवीत् । कर्तृ
त्वाद्यनुवादेन सिद्धत्वानुभवाय तु ॥ २१३ ॥ निर्दुःखो निष्क्रि
योऽकामः सिद्धो मोक्षोऽहमित्यपि । गृहीत्वैव विरुद्धार्थमाद
ध्यात्कथमेव सः ॥ २१४ ॥ सकामः सक्रियः सिद्ध इति
ऽनुभवः कथम् । अतो मे विपरीतस्य तद्भवान्वक्तुमर्हति ॥२१५

इहैव घटते प्रश्नो न मुक्तत्वानुभूतये । प्रमाणेन विरोधी यः सोऽत्रार्थः प्रश्नमर्हति ॥ २१६ ॥ अहं निर्मुक्त इत्येव सदसीत्यन्यमानजः । प्रत्यक्षाभासजन्यत्वाद्दुःखित्वं प्रश्नमर्हति ॥२१७॥ पृष्टमाकाङ्क्षितं वाच्यं दुःखाभावमभीप्सितम् ॥ २१८ ॥ कथं हीदं निवर्तेत दुःखं सर्वात्मना मम । इति प्रश्नानुरूपं यद्वाच्यं दुःखनिवर्तकम् ॥ २१९ ॥ श्रुतेः स्वात्मनि नाशङ्का प्रामाण्ये सति विद्यते । तस्मादात्मविमुक्तत्वं प्रत्याययति तद्वचः । वक्तव्यं तत्तथार्थं स्याद्विरोधेऽसति केनचित् ॥ २२० ॥ इतोऽन्योऽनुभवः कश्चिदात्मनो नोपपद्यते । अविज्ञातं विजानतां विज्ञातारमिति श्रुतेः ॥ २२१ ॥ त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् । साधनत्वं व्रजत्येव शान्तोदान्तानुशासनात् ॥२२२॥ त्वमर्थं प्रत्यगात्मानं पश्येदात्मानमात्मनि । वाक्यार्थं तत आत्मानं सर्वं पश्यति केवलम् ॥ २२३ ॥ सर्वमात्मेति वाक्यार्थे विज्ञातेऽस्य प्रमाणतः । असत्त्वे ह्यन्यमानस्य विधिस्तं योजयेत्कथम् ॥ २२४ ॥ तस्माद्वाक्यार्थविज्ञानान्नोर्ध्वं कर्मविधिर्भवेत् । नहि ब्रह्मास्मि कर्तेति विरुद्धे भवतो धियौ ॥ २२५ ॥ ब्रह्मासीति च विद्येयं नैव कर्तेति बाध्यते । सकामो बद्ध इत्येवं प्रमाणाभासजा तया ॥ २२६ ॥ शास्त्राद्ब्रह्मास्मि नान्योऽहमिति बुद्धिर्भवेद्दृढा । यदा युक्ता तदैवं धीर्यथा देहात्मधीरिति॥२२७॥ सभयादभयं प्राप्तस्तदर्थं यतते च यः । स पुनः सभयं गन्तुं स्वतन्त्रश्चेन्न गच्छति॥२२८॥ यथेष्टाचरणप्राप्तिः संन्यासादिविधौ कुतः । पदार्थाज्ञानबुद्धस्य वाक्यार्थानुभवार्थिनः ॥ २२९ ॥ अतः सर्वमिदं सिद्धं यत्प्रागस्माभिरीरितम् ॥ २३० ॥ यो हि यस्माद्विरक्तः स्यान्नासौ तस्मै प्रवर्तते । लोकत्रयाद्विरक्तत्वान्मु-

मुक्षुः किमितीहते ॥ २३१ ॥ क्षुधया पीड्यमानोऽपि न हि
ह्यत्तुमिच्छति । मृष्टान्नभ्यस्ततृड् जानन्नामूढस्तज्जिघत्सां
॥ २३२ ॥ वेदान्तवाक्यपुष्पेभ्यो ज्ञानामृतमधूत्तमम् । उज्ज
रालिवद्यो नस्तस्मै सद्गुरवे नमः ॥ २३३ ॥ इत्यष्टादशं त
मसिप्रकरणम् ॥ १८ ॥

अथात्ममनःसंवादप्रकरणम् ॥ १९ ॥

प्रयुज्य तृष्णाज्वरनाशकारणं चिकित्सितं ज्ञानविरागभे
जम् । न याति कामज्वरसन्निपातजां शरीरमालां शतयोगदू
खिताम् ॥ १ ॥ अहं ममेति त्वमनर्थमीहसे परार्थमिच्छ
त्तवान्य ईहितम् । न तेऽर्थबोधो न हि मेऽस्ति चार्थिता त
युक्तः शम एव ते मनः ॥ २ ॥ यतो न चान्यः परमात्म
तनात्सदैव तृप्तोऽहमतो न मेऽर्थिता । सदैव तृप्तश्च न का
हितं यतस्व चेतः प्रशमाय ते हितम् ॥ ३ ॥ षड्मिंमालाभ्य
वृत्त एव यः स एव चात्मा जगतश्च नः श्रुतेः । प्रमाणतश्चा
मया प्रवेद्यते मुधैव तस्माच्च मनस्त्वेहितम् ॥ ४ ॥ त्वयि प्रश
न्ते नहि चास्ति भेदधीर्यतो जगन्मोहमुपैति मायया । ग्रहो
मायाप्रभवस्य कारणं ग्रहाद्विमोके नहि सास्ति कस्यचित् ॥
न मेऽस्ति मोहस्तव चेष्टितेन हि प्रबुद्धतत्त्वस्त्वसितो ह्यवि
यः । न पूर्वतत्त्वोत्तरभेदता हि नो वृथैव तस्माच्च मनस्त्वे
तम् ॥ ६ ॥ यतश्च नित्योऽहमतो न चान्यथा विकारयोगे
भवेदनित्यता । सदा प्रभातोऽहमतो हि चाद्वयो विकल्पि
चाप्यसदित्यवस्थितम् ॥ ७ ॥ अभावरूपं त्वमसीह हे म
निरीक्ष्यमाणे न हि युक्तितोऽस्तिता । सतो ह्यनाशादसतोऽ
जन्मतो द्वयं च चेतस्तव नास्तितेष्यते ॥ ८ ॥ द्रष्टा च

च तथा च दर्शनं भ्रमस्तु सर्वस्तव कल्पितो हि सः । दृशेश्च
भिन्नं न हि दृश्यमीक्ष्यते स्वपनप्रबोधेन तथा न भिद्यते ॥९॥
विकल्पना चापि तथाद्वया भवेदवस्तुयोगात्तदलातचक्रवत् ।
न शक्तिभेदोऽस्ति यतो न चात्मनां ततोऽद्वयत्वं श्रुतितोऽव-
सीयते ॥ १० ॥ मिथश्च भिन्ना यदि ते हि चेतनाः क्षयस्तु
तेषां परिमाणयोगतः । ध्रुवो भवेद्भेदवतां हि दृष्टतो जगत्क्षय-
श्चापि समस्तमोक्षतः ॥ ११ ॥ न मेऽस्ति कश्चिन्न च सोऽस्मि
कस्यचिद्यतोऽद्वयोऽहं न हि चास्ति कल्पितम् । अकल्पितश्चास्मि
पुरा प्रसिद्धितो विकल्पनाया द्वयमेव कल्पितम् ॥ १२ ॥ विक-
ल्पना चाप्यभवे न विद्यते सदन्यदित्येवमतो न नास्तिता ।
यतः प्रवृत्ता तव चापि कल्पना पुरा प्रसिद्धेर्न च तद्विकल्पि-
तम् ॥ १३ ॥ असद्द्वयं तेऽपि हि यद्यदीक्ष्यते न दृष्टमित्येव न
चैव नास्तिता । यतः प्रवृत्ता सदसद्विकल्पना विचारवद्वापि
तथाद्वयं च सत् ॥ १४ ॥ सदभ्युपेतं भवतोपकल्पितं विचा-
रहेतोर्यदि तस्य नास्तिता । विचारहानाच्च तथैव संस्थितं न
चेत्तदिष्टं नितरां सदिष्यते ॥ १५ ॥ असत्समं चैव सदित्य-
पीति चेदनर्थवत्त्वान्नरशृङ्गतुल्यतः । अनर्थवत्त्वं त्वसति ह्यका-
रणं न चैव तस्मान्न विपर्ययेऽन्यथा ॥ १६ ॥ असिद्धतश्चापि
विचारकारणाद्द्वयं च तस्मात्प्रसृतिं च मायया । श्रुतेः स्मृते-
श्चापि तथा हि युक्तितः प्रसिध्यतीत्थं न तु युज्यतेऽन्यथा
॥ १७ ॥ विकल्पनाच्चापि विधर्मकं श्रुतेः पुरा प्रसिद्धेश्च विक-
ल्पतोऽद्वयः । न चेति नेतीति यथा विकल्पितं निषिध्यतेऽत्रा-
प्यवशेषसिद्धये ॥ १८ ॥ अकल्पितेऽप्येवमजेऽद्वयेऽक्षरे विक-
ल्पयन्तः सदसच्च जन्मभिः । स्वचित्तमायाप्रभवं च ते भवं

जरां च मृत्युं च नियान्ति संततम् ॥ १९ ॥ भवाभवत्वं तु
चेदवस्थितिर्न चास्य चान्यस्थितिजन्म नान्यथा । सतो ह
स्यादसतश्च सत्वतो न च क्रियाकारकमित्यतोऽप्यजम्॥२०
अकुर्वदिष्टं यदि वास्य कारकं न किंचिदन्यन्ननु नास्त्यक
कम् । सतो विशेषादसतश्च सच्युतौ तुलां तयोर्यद्वदनिश्च
हि ॥ २१ ॥ न चेत्स इष्टः सदसद्विपर्ययः कथं भवः स्यात्
सद्व्यवस्थितौ । विभक्तमेतद्द्वयमप्यवस्थितं न जन्म तस्माच्च
हि कस्यचित् ॥ २२ ॥ अथाभ्युपेत्यापि भवं तवेच्छतो भ
नार्थस्तव चेष्टितेन मे । न हानवृद्धी न यतः स्वतोऽसतो
ऽन्यतो वा यदि वास्तिता तयोः ॥ २३ ॥ ध्रुवा ह्यनित्याश्च
चान्ययोगिनो मिथश्च कार्यं न च तेषु युज्यते। अतो न कस्य
हि किंचिदिष्यते स्वयं च तत्त्वं न निरुक्तिगोचरम् ॥ २४
समं तु तस्मात्सततं विभातवद्द्वयाद्विमुक्तं सदसद्विकल्पिता
निरीक्ष्य युक्त्या श्रुतितस्तु बुद्धिमानशेषनिर्वाणमुपैति दीप
॥ २५ ॥ अवेद्यमेकं यदनन्यवेदिनां कुतार्किकाणां च सुदं
मन्यथा । निरीक्ष्य चेत्थं त्वगुणग्रहोऽगुणं न याति मोहं ग्र
दोषमुक्तितः ॥ २६ ॥ अतोऽन्यथा न ग्रहनाश इष्यते वि
हबुद्धेर्ग्रह एव कारणम् । ग्रहोऽप्यहेतुस्त्वनलस्त्वनिन्धनो य
प्रशान्ति परमां तथा व्रजेत् ॥ २७ ॥ विमथ्य वेदोदधि
समुद्धृतं सुरैर्महाब्धेस्तु यथा महात्मभिः ॥ तथाऽमृतं ज्ञान
मिदं हि यैः पुरा नमो गुरुभ्यः परमीक्षितं च यैः ॥ २८
इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपा
दशिष्यस्य श्रीशंकरभगवतः कृतिः सकलवेदोपनिषत्सारोपदेश
हस्री समाप्ता ॥

## तोटकाचार्यविरचितं
## श्रुतिसारसमुद्धरणम् ॥ ३४ ॥

ॐ परमात्मने नमः । त्रैलोक्यनाथहरिमीड्यमुदारसत्वं शक्तेस्तनूजतनयं परमेष्ठिकल्पम्। जीमूतमुक्तविमलाम्बरचारुवर्णं वासिष्ठमुग्रतपसं प्रणतोस्मि नित्यम् ॥ १ ॥ सकलं मनसा क्रियया जनितं समवेक्ष्य विनाशितया तु जगत्। निरविद्यत कश्चिदतो निखिलादविनाशिकृतेन न लभ्यमिति ॥ २ ॥ प्रतिपित्सुरसावविनाशिपदं यतिधर्मरतो यतिमेव गुरुम्। विदितात्मसतत्वमुपेत्य कविं प्रणिपत्य निवेदितवान्स्वमतम् ॥ ३ ॥ भगवन्नुदधौ मृतिजन्मजले सुखदुःखझपे पतितं व्यथितम्। कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्य-गतिम् ॥ ४ ॥ विनिवर्त्य रतिं विपये विपमां परिमुच्य शरीरनिबद्धमतिम्। परमात्मपदे भव नित्यरतो जहि मोहमयं भ्रममात्ममतेः ॥ ५ ॥ विसृजान्नमयादिपु पञ्चसु तामहमस्मि ममेति मतिं सततम्। दृशिरूपमनन्तमृतं विगुणं हृदयस्थम-वेहि सदाहमिति ॥ ६ ॥ जलभेदकृता बहुतेव रवेर्घटिकादि-कृता नभसोपि यथा। मतिभेदकृता तु तथा बहुता तव बु-द्धिदृशोऽविकृतस्य सदा ॥ ७ ॥ दिनकृत्प्रभया सदृशेन सदा जनचित्तरतं सकलं स्वचिता। विदितं भवताऽविकृतेन सदा यत एवमतोऽसि स एव सदा ॥ ८ ॥ उपरागमपेक्ष्य मतिर्वि-पर्यविपयावधृतिं कुरुते तु यतः। तत एव मतेर्विदिता विदिता विपयास्तु ततः परिणामवती ॥ ९ ॥ मतिवृत्तय आत्मचिता विदिताः सततं हि यतोऽविकृतस्तु ततः। यदि चात्मचितिः परिणामवती मतयो विदिता विदिताः स्युरिमाः ॥ १० ॥

चरितं तु धियः सकलं सततं विदितं भवता परिशुद्धचिता
मतिभेदगुणो नहि तेऽस्ति ततो यत एवमतोऽसदृशस्तु वि
॥ ११ ॥ विदितत्वमविप्रतिपन्नतया मतिषु प्रगतं विषयं
यथा । यत एवमतः परसंविदिता विदितत्वत एव यथा वि
याः ॥ १२ ॥ परसंविदिताः सततं हि यतो न विदुः स्वम
विषयास्तु ततः । मतयोऽपि तथा परसंविदिता न विदुः स्व
मूर्विषयास्तु यथा ॥ १३ ॥ विषयाकृतिसंस्थितिरेकविधा म
सस्तु सदा व्यवहारविधौ । अहमित्यपि तद्विषया त्वऽपरा म
वृत्तिरवज्वलितात्मचिता ॥ १४ ॥ पुरुषस्य तु धर्मवदुज्ज्व
स्वरसेन मतेः स्वगुणोपि यतः । अत आत्मगुणं प्रतिय
जना मतिवृत्तिमिमामहमित्यबुधाः ॥ १५ ॥ यदि सा
भवेज्जनमोहकरी व्यवहारमिमं न जनोनुभवेत् । विफलश्च त
विषयानुभवो ज्ञगुणो नहि सेति यदा विदिता ॥ १६ ॥ उप
लभ्य घटादिनिभैव भवेन्मनसो यदि संस्थितिरेकविधा । पु
षस्य चितिश्च न विक्रियते मतिवृत्तिमपेक्ष्य घटादिनिभा
॥ १७ ॥ अवगन्त्रवगम्यचिदात्मधियोरहमित्यभिमानविही
नतया । स्थितयोरभिमानपुरःसरकं व्यवहारपथं न जनोऽव
रेत् ॥ १८ ॥ अहमीक्ष इति प्रथमं हि धिया सुविचिन्त्य
ततो विषयाभिमुखम् । नयनं प्रहिणोति तथान्यदपि श्रव
दिवियत्प्रमुखस्य गुणे ॥ १९ ॥ अपहाय न कश्चिदहंक
व्यवहारमुपैति कदाचिदपि । उपपन्नतरा हि मतेस्तु त
व्यवहारपथं प्रति कारणता ॥ २० ॥ चितिशक्तिगुणः किमहं
करणं किमु बुद्धिगुणोऽथ भवेदुभयोः । इति चिन्त्यमिदं मनसा
नलसैरुपपत्तिभिरात्महितं यतिभिः ॥ २१ ॥ उपलभ्यमहं

रणं न भवेत्पुरुषस्य गुणो यदि तर्हि भवेत् । गुणिरूपमथावयवं गुणिनो न विहाय गुणः पृथगस्ति यतः ॥ २२ ॥ न गुणो गुणिनि स्थितवान् गुणिना विषयी क्रियते न च तस्य गुणैः । नहि देशकृता नच वस्तुकृता गुणिनोस्ति गुणस्य भिदा तु यतः ॥ २३ ॥ न परस्परमग्निगुणोग्निगतो विषयत्वमुपैति कदाचिदपि । नहि वह्निरपि स्वगुणं स्वगतं विषयीकुरुते स्वगुणेन भुवि ॥ २४ ॥ कणभुग्यमचीक्ऌपदात्मगुणं गुणपूगमनित्यमनात्मगुणम् । अनयैव दिशा स निराक्रियतां न हि नित्यमनित्यगुणेन गुणि ॥ २५ ॥ वियतः प्रभवं प्रवदंति यतः श्रुतयो बहुशः खमनित्यमतः । उपमानमनित्यगुणं वियतो न हि नित्यमिहास्ति कणादकृते ॥ २६ ॥ मनसा पुरुषः पुरुषेण मनो नभसा मुसलं मुसलेन नभः । नहि योगवियोगमुपैति कुतोऽवयवित्वनिराकरणादमुतः ॥ २७ ॥ इह रज्जुघटादि हि सावयवं समुपैति युजामितरेतरतः । इति दृष्टमतोन्यददृष्टमपि स्वयमूह्यमिदं न परित्यजता ॥ २८ ॥ न हि सावयवं विगतावयवैर्विगतावयवं च न सावयवैः । उपयाति युजामिति दृष्टमिदं यत एवमतः स्थितमुक्तमदः ॥ २९ ॥ न हि कल्पितभागसमागमनं विगतावयवस्य घटेत कुतः । वितथत्वमतिः सुदृढा तु यतः परिकल्पितवस्तुषु नित्यमतः ॥ ३० ॥ इह वेदशिरस्सु तदर्थविदः प्रवदन्ति समस्तजगत्प्रकृतिम् । परमात्मपदं दृशिमात्रवपुर्ध्रुवमेकमतोन्यदनित्यमिति ॥ ३१ ॥ अत एव न किंचिदुदाहरणं ध्रुवमस्ति परस्य विनाशिगुणम् । यत एवमतः स्थितमुक्तमदो न हि नित्यमनित्यगुणेन गुणि ॥ ३२ ॥ उपलभ्यमहं करणं भवितुं क्षमते दृशिरूपगुणो न यतः । विष-

याकृतिरंजितधीगुणवद्विपयत्वमहं करणस्य ततः ॥ ३
विपयप्रकृतिं प्रतिपन्नवतीं मतिवृत्तिमहंकरणं च मतेः ।
परिपश्यति योऽविकृतः परमात्मसदुक्तिरसौ पुरुपः ॥ ३
ननु देहभृदेप कथं भवताऽभिहितः परमात्मसदुक्ति
न विरुद्धमवादिपमेतमहं श्रुतिरप्यमुमर्थमुवाच यतः ॥ ३
अमतं न मतेरमतस्तदिदं यदमुत्र तदेव तु कश्चिदिति ।
प्रतिपादितमस्य दृशेः परमात्मपदत्वममूपु भृशम् ॥ ३६ ॥
नभ्युदितं वदनेन सदा नयने नच पश्यति यन्न सदा ।
णेन च यन्न शृणोति सदा मनसापि च यन्मनुते न
॥ ३७ ॥ वदनं नयनं च तथा श्रवणं मन एव च येन
सततम् । अवगच्छ तदेव पदं परमं त्वमिति श्रुतिरीक्षितु
वती ॥ ३९ ॥ परमात्मपदत्व इयं च मया श्रुतिरल्पक
रिहाभिहिता । अणिमादिगुणं सदिति प्रकृतं तदसि त्व
श्रुतिरभ्यवदत् ॥ ३९ ॥ नभसोवयवो विकृतिश्च यथा
कादि नभो न भवेत्तु तथा । परमात्मन एप न चावयवो
तिश्च शरीरभृदित्यमृपा ॥ ४० ॥ करकादिनिमित्तकमेव
करकाम्वरनाम भवेद्धियतः । परमात्मदृशेरपि नाम तथा
हेतुकमेव तु जीव इति ॥ ४१ ॥ जनितं वियदग्रणि येन
त्परमात्मसदक्षरनामभृता । प्रविवेश स एव जगत्स्वकृतं
वेह घटं घटसृष्टिमनु ॥ ४२ ॥ उदपद्यत खप्रमुखं हि
त्परमात्मन इत्यपि याः श्रुतयः । अवधार्यत आभिरभे
परमात्मसतत्त्वसमर्पणतः ॥ ४३ ॥ यदि सृष्टिविधानपरं
फलशून्यमनर्थकमेव भवेत् । जगदित्थमजायत धातुरिति
पुरुषस्य फलाय नहि ॥ ४४ ॥ अजतत्त्वमवाप्य सकृद्धि

रधारि सदेव तु सत्यमिति । श्रुतिभिर्बहुधैतदतोवगतं जगतो नहि जन्मविधेयमिति ॥ ४५ ॥ न च तत्त्वमसीत्यसकृद्वचनं जगतो जनिमात्रविधौ घटते । परमात्मपदानुमतिं तु यदा जनयेत्पुरुषस्य तदा घटते ॥ ४६ ॥ स्थिरजंगमदेहधियां चरितं परिपश्यति योऽविकृतः पुरुषः । परमात्मसदुक्तिरसाविति यत्फणितं तदधिष्ठितमित्थमहम् ॥ ४७ ॥ पृथगेव यदाक्षरतो मतिविघ्नकरोदकवन्न घटाम्बरवत् । निवरोत्स्यति तत्त्वमसीति तदा वचनं कथमेष त इत्यपि च ॥ ४८ ॥ ननु वस्तु सतत्त्वविबोधनकृद्विनिवर्तयदप्रतिबोधमिदम् । सदुपासनकर्मविधानपरं यत एव मतो न विरोत्स्यति मे ॥ ४९ ॥ मनआदिषु कारणदृष्टिविधिः प्रतिमासु च देवधियां करणम् । स्वमतिमनपोह्य यथा तु तथा त्वमसीह सदात्ममतिर्वचनात् ॥ ५० ॥ अथवा त्वमिति ध्वनिवाच्यमिदं सदसीति वदेद्वचनं गुणतः । विभयं पुरुषं प्रवदन्ति यथा मृगराडयमीश्वरगुप्त इति ॥ ५१ ॥ यदि वा स्तुतये सदसीति वदेन्मघवानसि विष्णुरसीति यथा । त्वमितिश्रुतिवाच्यसतत्त्वकृतामथवा सत एव वदेद्वचनम् ॥५२॥ यदि तत्त्वमिति ध्वनिनाभिहितः परमात्मसतत्त्वक एव सदा । किमिति स्वकमेष न रूपमवेत्प्रतिबोध्यत एव यतो वचनैः ॥ ५३ ॥ अतएव हि जीवसदात्मकतां नहि तत्त्वमसीति वदेद्वचनम् । यदपीदृशमन्यदतो वचनं तदपि प्रथयेदनयैव दिशा ॥ ५४ ॥ त्वदुदाहृतवाक्यविलक्षणता वचनस्य हि तत्त्वमसीति यतः । अतएव न दृष्टिविधानपरं सत एव सदात्मकतागमकम् ॥ ५५ ॥ इति शब्दशिरस्कपदोक्तमतिर्विहिता मनआदिषु तैर्वचनैः । न विधानमिहास्ति तथा वचने सुविलक्ष-

णमेतदतो वचनात् ॥ ५६ ॥ मनसो वियतः सवित्र इत्य
प्रवदन्ति यतोऽक्षरदृष्टियुतम् ॥ ५७ ॥ करको न मृदः पृथ
गस्ति यथा मनआदिसतोस्ति तथा न पृथक् । इति वस्तुयप
त्वकता तु यदा विधिशब्द इतिश्च तदा तु वृथा ॥ ५
मनआदिसमानविभक्तितया विधिशब्दमितिं च विहाय सह
जनकेन सता सहयोगमियादनृतं तदिति स्फुटमुक्तमभूत् ॥ वस
ननु जीवसतोरपि तत्त्वमिति स्फुटमेकविभक्त्यभिधानमिव
कथमस्य शरीरभृतोऽनृतता न भवेदविभक्तविभक्तियुजः ॥ वि
प्रकृतेरभिधानपदेन यथा विकृतेरभिधानमुपैति युजाम् । अरि
तत्वमतिस्तु तदा विकृतौ मृदयं घट इत्यभिधासु यथा ॥ धा
विकृतित्वमवादि मनःप्रभृतेर्बहुशः श्रुतिषु प्रकृतेस्तु सतः । तय
एव समानविभक्तितया मनआदि सुवेद्यमसत्यमिति ॥ ना
जनितत्वमवादि नहि श्रुतिभिर्जनकेन सतास्य शरीर सत
मनआदिविकारविलक्षणतां प्रतियन्ति शरीरभृतस्तु सतो
॥ ६३ ॥ यदजीजनदम्बरपूर्वमिदं जगदक्षरमीक्षणविग्रह
प्रविवेश तदेव जगत्स्वकृतं स च जीवसमाख्य इति स्व
॥ ६४ ॥ परमात्मविकारविभक्तमतिर्न भवत्यत एव धर
भृतः । यत एव विकारविभिन्नमतिर्न भवत्यत एव मृषा क्रि
॥ ६५ ॥ अविभक्तविभक्त्यभिधानकृता परमात्मपदेन ॥
भृतः । न भवेदिह तत्त्वमसिप्रभृतौ लवणं जलमित्य पा
यथा ॥ ६६ ॥ परमात्मविकारनिराकरणं कृतमस्य यत
तस्तु यतः । परमेश्वररूपविलक्षणता न मनागपि देह सु
ततः ॥ ६७ ॥ ननु जीवसतोरणुमात्रमपि स्वगतं न वि ना
मस्ति यदा । वद तत्त्वमसीति तदा वचनं किमु वक्ति त

इत्यपि च ॥ ६८ ॥ स्वगतं यदि भेदकमिष्टमभूदणुमात्रमपीश्वरदेहभृतोः । अपनेतुमशक्यमदोवचनैरमुनास्य पृथक्त्वनिषेधपरैः ॥ ६९ ॥ इह यस्य च यो गुण आत्मगतः स्वत एव न जातु भवेत्परतः । वचनेन न तस्य निराकरणं क्रियते स गुणः सहजस्तु यतः ॥ ७० ॥ वचनं त्ववबोधकमेव यतस्तत एव न वस्तुविपर्ययकृत् । न हि वस्त्वपि शब्दवशात्प्रकृतिं प्रजहात्यनवस्थितिदोषभयात् ॥ ७१ ॥ यत एवमतो विषयस्य गुणं विषयेण सहात्मनि मूढधिया । अधिरोपितमप्स्विव भूमिगुणं प्रतिषेधति तत्त्वमसीति वचः ॥ ७२ ॥ अत एव न दृष्टिविधानपरं गुणवादपरं च न तद्वचनम् । स्तुतिवाद्यपि नैतदुपास्यतया विधिरत्र न देहभृतोस्ति यतः ॥ ७३ ॥ सत एव हि नाम जगत्प्रकृतेरुपधानवशादिह जीव इति । अतएव न जीवसतत्वकतां प्रकृतस्य सतः प्रतिपादयति ॥ ७४ ॥ यदि जीवसतत्वकतां गमयेदणिमादिगुणस्य जगत्प्रकृतेः । अणिमादिगुणोक्तिरतोऽस्य मृषा यदि वास्य शरीरभृदात्मकता ॥ ७५ ॥ न च संसृतिहेतुनिराकरणं कृतमस्य शरीरभृतोभिमतम् । परमेश्वरमात्मतया ब्रुवता वचनेन च तत्त्वमसीत्यमुना ॥ ७६ ॥ त्वमसीति पदद्वयमेति युजां तदिति ध्वनिना सह तत्त्वमिति । क्रियया सह नाम पदं समियान्निरपेक्ष्यमुपैत्यनया हि युजाम् ॥ ७७ ॥ न हि नामसहस्रमपि क्रियया रहितं किमपि प्रतिपादयति । प्रतिपादकमेषु लिङ्गादि भवेद्विहितादिमतेर्जनकं हि यतः ॥ ७८ ॥ भगवानपि मध्यममेव यतो विनियच्छति युष्मदि नित्यमतः । प्रथमं त्वमसीति पदे समितश्चरमं त्वसिना समियात्तदिति ॥ ७९ ॥ पुरुषोभिहितस्त्वमसीति यदा कि-

मसानि वदेति तदाभिमुखः । श्रवणाय भवेदणिमाति
सदिति प्रकृतं तदसीति वदेत् ॥ ८० ॥ त्वमिति ध्वनिना
हितस्य यतस्तदिति श्रुतिवाच्यसदात्मकताम् । अवदद्वचनं
एव सतो नहि जीवसतत्त्वकतां वदति ॥ ८१ ॥ विपर्या
खानि शरीरभृतः स्वरसेन सदा करणानि यतः । स्वकं
रूपमवैति ततः प्रतिबोध्यत एव ततो वचनैः ॥ ८२ ॥
च परांचि पुरःसरकं बहुवदिकमत्र तथा स्मरणम् ।
च नावमिवांभसि यन्मनसेंद्रियरश्मिविनिग्रहवत् ॥ ८३ ॥
हि न देहभृतोस्ति भिदा परमात्मदृशेरिति वाच्यमिदम् ।
तिकाल इहापि च सृष्टिमुखे सदनन्यतया श्रुत एष यतः ॥
द्वयमप्यविरोधि शरीरभृतो वचनीयमिदं रघुनंदनवत् ।
शमपेक्ष्य सदात्ममतिः परमात्मसतत्त्वकता च सदा ॥
सदुपासनमस्य विधेयतया वचनस्य मम प्रतिभाति यतः ।
एव न जीवसदात्मकतां प्रतिबोधयतीत्यवदत्तदसत् ॥
सदुपास्व इति श्रुतिरत्र न ते तदसि त्वमिति श्रुतिरेव
यत एव मतो न विधित्सितता सदुपासनकर्मण इत्यमृषा ॥
यदि तस्य कुतश्चिदिहानयनं क्रियते तदनर्थकमेव भवेत् ।
पेण कृतस्य यतः श्रुतिता न भवेदिति वेदविदां स्मरणम् ॥
किमरे पुरुषं प्रतिबोधयितुं स्वकमर्थमशक्तमिदं वचनम् ।
तोन्यत आनयनं क्रियते भवता श्रवणेन विनापि विधेः ॥
श्रुतहानिरिहाश्रुतकॢप्तिरपि श्रुतिवित्समयो न भवेत्तु
श्रुतिभक्तिमता श्रुतिवक्रगतं ग्रहणीयमतो न तु बुद्धि
॥ ९० ॥ पुरुषस्य शरीरगतात्ममतिं मृतिसंभवहेतु
करीम् । अपनीय सदात्ममतिं दधती महते पुरुषस्य

भवेत् ॥ ९१ ॥ विनिवर्त्तत एव शरीरगता विपरीतमतिः पुरुषस्य तदा । वचनेन तु तत्त्वमसीति यदा प्रतिबोध्यत एष त इत्यपि च ॥ ९२ ॥ यदि नापनयेच्छ्रुतिरात्ममतिं पुरुषस्य शरीरगतामनृताम् । तदहंमतिहेतुककर्मगतिं सुखदुःखफलामवशोऽनुभवेत् ॥ ९३ ॥ यदि तत्त्वमसीति वदेद्वचनं सदुपासनकर्म न तत्त्वमिति । पुरुषस्य फलं सदुपासनतो विमृशामि भविष्यति कीदृगिति ॥ ९४ ॥ पुरुषस्य तु मर्त्यगुणस्य भवेत्सदुपासनया न सदात्मकता । न कथंचिदपि प्रजहाति यतः प्रकृतिं सहजामिह कश्चिदपि ॥ ९५ ॥ यदि देहभृदेष सदात्मकतां प्रगमिष्यति वै सदुपासनया । न जहास्यति रूपमसौ हि निजं यत ऐक्यमतिर्न भवत्युभयोः ॥ ९६ ॥ रसविद्धमयः प्रकृतिं सहजां प्रविहाय यथा कनकत्वमियात् । पुरुषोऽपि तथा सदुपासनया प्रतिपत्स्यत एव सदात्मकताम् ॥ ९७ ॥ अयसोऽवयवानभिभूय रसः स्थितवाननलानुगृहीतिमनु । कनकत्वमतिं जनयत्ययसि प्रतिपन्नमयो न तु कांचनताम् ॥ ९८ ॥ उदकावयवानभिभूय पयो रजतावयवांश्च यथा कनकम् । विपरीतमतिं जनयत्युदके रजते च तथायसि हेममतिम् ॥ ९९ ॥ रसवीर्यविपाकविनाशमनु प्रविनश्यति कांचनताप्ययसः । कृतकं हि न नित्यमिति प्रगतं समवेतमवश्यमपैति यतः ॥ १०० ॥ अमृतत्वमसत्पुरुषस्य यदि क्रियते सदुपासनया यजिवत् । यजिकार्यवदन्तवदेव भवेत्कृतकस्य यतो विदिताऽध्रुवता ॥ १ ॥ पुरुषस्य सतश्च विधर्मकयोः सदुपासनया न भवेत्समितिः । यदि संगतिरिष्यत एव तयोरवियुक्ततया न चिरं वसतः ॥२॥ फलमीदृगिदं सदुपासनतः पुरुषस्य भविष्यति नान्यदतः । न

च तन्निरवद्यतयाभिमतं विदुषां बहुदोपसमीक्षणतः ॥३
सदुपासनकर्मविधानपरं न भवेदत एव हि तद्वचनम् । अहम्
शरीरमिदं च ममेत्यविवेकमतिं विनिवर्त्तयति ॥ ४ ॥ सक
थनिपत्सु शरीरभृतः परमात्मपदैकविभक्तितया । उपदेश
स्यनयैव दिशा गमयेन्मतिमानभियुक्ततया ॥ ५ ॥ द्रविडो
च तत्त्वमसीति वचो विनिवर्त्तकमेव निरूपितवान् । श
विवर्द्धितराजशिशोर्निजजन्मविदुक्तिनिदर्शनतः ॥ ६ ॥
एवमतः स्वशरीरगतामहमित्यविवेकमतिं सुदृढाम् । प्रवि
यदक्षरमद्वयकं समवेहि तदक्षरमात्मतया ॥ ७ ॥ न मनो
मतिः करणानि च नो न रजो न तमो न च सत्त्वमपि
मही न जलं न च वह्निरपि श्वसनो न नभश्च पदं प
॥ ८ ॥ अमनस्कमधीकमनिन्द्रियकं विरजस्कमसत्त्वतमस्क
अमहीजलवह्न्यनिलाम्बरकं परमक्षरमात्मतयाश्रय भोः ॥
करणानि हि यद्विपयाभिमुखं प्रगमय्य मतिर्विपयेषु च
तदु जागरितं प्रवदन्ति बुधा न तदास्ति ममेत्यवगच्छ
॥ १० ॥ करणानि यदोपरतानि तदा विपयानुभवाहितव
नया । विपयेण विना विपयप्रतिमं स्फुरणं स्वपनं प्रवद
बुधाः ॥ ११ ॥ करणस्य धियः स्फुरणेन विना विपयात
केन तु या स्थितता । प्रवदन्ति सुपुप्तिममुं हि बुधा विनि
तृपः श्रुतितत्त्वविदः ॥ १२ ॥ इति जागरितं स्वपनं च
क्रमतोऽक्रमतश्च सुपुप्तिरपि । न कदाचिदपि त्रयमस्ति म
वगच्छ सदास्मि तुरीयमिति ॥ १३ ॥ यदुजागरितप्रभृति
तयं परिकल्पितमात्मनि मूढधिया । अभिधानमिदं तद
भवेत्परमात्मपदस्य तुरीयमिति ॥१४॥तदसत्यमसत्यगुण

परिनिर्मितवारणचेष्टितवत् ॥ १५ ॥ गगनप्रमुखं पृथिवीचरमं विषयेन्द्रियबुद्धिमनःसहितम् । जनिमज्जगदेतदभूतमिति श्रुतयः प्रवदंत्युपमानशतैः ॥ १६ ॥ कफपित्तसमीरणधातुधृतं कुशरीरमिदं सततं हि यथा । प्रभवप्रभृतिप्रलयान्तमिदं जगदग्निरवीन्दुधृतं हि तथा ॥ १७ ॥ जगतः स्थितिकारणमित्थमिदं प्रथितं रविवह्निशशित्रितयम् । स्मृतिवेदजनेषु भृशं प्रथितं श्रुतिरीरितवत्यनृतं तदिति ॥ १८ ॥ यदु रोहितशुक्लसुकृष्णमिदं ज्वलनादिषु रूपमवैति जनः । तदु तैजसमाप्यमथान्नमिति ब्रुवती त्रयमेव तु सत्यमिति ॥ १९ ॥ रुचकप्रमुखं कनकादिमयं रुचकाद्यभिधाननिमित्तमपि । असदित्यवगम्यत एव यतो व्यभिचारवती रुचकादिमतिः ॥ २० ॥ न कदाचिदपि व्यभिचारवती कनकादिमतिः पुरुषस्य यतः । तत एव हि सत्यतयाभिमतं कनकादिविपर्यय एषु नहि ॥ २१ ॥ रुचकादिसमं ज्वलनादि भवेदनृतत्वगुणे न तु सत्यतया । अरुणप्रमुखं ज्वलनप्रभृति प्रकृतित्रितयं कनकादिसमम् ॥२२॥ अनयोपमयानृततामवदच्छ्रुतिरग्निदिवाकरचन्द्रमसाम् । अमृषात्वमपि श्रुतिरुक्तवती त्रितयस्य तु रक्तपुरस्सरिणः ॥ २३ ॥ अनृतत्वमिदं ज्वलनप्रभृतेर्यदवादि भवेत्तदुदाहरणम् । वितथा विकृतिः सततं सकला न तथा प्रकृतिः श्रुतिनिश्चयतः ॥ २४॥ प्रदिदर्शयिषुर्वसनस्य यथा वितथत्वमपास्थाति तन्तुगुणम् । अपकृष्य तु तन्तुसमं त्रितयं ज्वलनप्रमुखस्य तथोक्तवती ॥२५॥ अवनिप्रमुखं वियदंतमिदं विकृतिस्तु परस्य भवत्यपरम् । अनृतं त्वपरं विकृतिस्तु यतोऽवितथं तु परं प्रकृतिस्तु यतः ॥ २६ ॥ अत एतदसेधि सदुक्तिपरं न मृषेति मृषा तु ततोन्यदिति । इति

सिद्धमतो यदवादि मया जनिमज्जगदेतदभूतमिति ॥ २७ ॥
मनसोप्यनृतत्वमसेध्यमुतः प्रतिपादितहेतुत एव भवेत् । चा
च तदीयमसत्यमतः परिनिर्मितवारणचेष्टितवत् ॥ २८ ॥ न
नाभ्यवदच्छ्रुतिरुद्भवनं मनसस्तु सतो न च खप्रमुखा
कथमस्य भवेदनृतत्वगतिर्मनसो भगवन्वद निश्चयतः ॥ २९ ॥
ननु सप्तम आत्मन उद्भवनं मनसोभिदधावसुनापि स
कथमस्य भवेदमृपात्वगतिर्मनसोविकृतित्वगुणस्य वद ॥ ३० ॥
असुना करणैर्गगनप्रमुखैः सह मुण्डक उद्भवनं मनसः । पु
पात्परमात्मन उक्तमतो वितथं मन इत्यवधारय भोः ॥ ३१ ॥
मनसोन्नमयत्वमवादि यतस्तत एव हि भूतमयत्वगतिः । कु
रीरवदेव ततोपि भृशं वितथं मन इत्यवधारय भोः ॥ ३२ ॥
कुरु पक्षमिमं गगनप्रमुखं जनिमत्सकलं न हि सत्यमिति
प्रथमं चरमं च न चास्ति यतो रुचकादिवदित्युपमां च
॥ ३३ ॥ कनके रुचकादि न पूर्वमभूच्चरमं च न विद्यत इत्य
नृतम् । अधुनापि तथैव समस्तमिदं जनिमद्वियदादि भवेद
तत् ॥ ३४ ॥ कनकादिषु यद्युपजातमभूद्रुचकप्रमुखं पृथ
ततः । अधिकं परिमाणममीषु कुतो न भवेदिति वाच्यमवश्य
मिदम् ॥ ३५ ॥ कनकप्रभृतेर्व्यतिरिक्तमतो रुचकादि न वि
एव कुतः । पृथगग्रहणात्कनकप्रभृतेरिति कारणमेव सदन्य
सत् ॥ ३६ ॥ ननु नाम पृथग्विकृतेः प्रकृतेरथ रूपमथापि
कार्यमतः । कथमव्यतिरिक्ततयावगमः प्रकृतेर्विकृतेरिति वा
च्यमिदम् ॥ ३७ ॥ इह वीरणतन्तुसुवर्णमृदः कटशाटकहा
घटाकृतयः । उपलब्धजनैरुपलब्धमतो न भिदास्ति ततः प्र
तेर्विकृतेः ॥ ३८ ॥ विकृतिर्यदि नास्ति पृथक्प्रकृतेर्न घटा

भिदाप्यभिदा प्रकृतेः । इति धीर्विफला तव येन जनैर्विविदे न यनेन मृदाद्यभिदा ॥ ३९ ॥ ननु रूपमथो अपि कार्यमथो अभिधापि नटस्य पृथग्विदिता । न पृथक्त्वमुपैति नटः किमिति प्रतिवाच्यमवश्यमिदं कुशलैः ॥ ४० ॥ असतो न कथंचन जन्म भवेत्तदसत्वत एव खपुष्पमिव । न सतोऽस्ति भवः पुरतोपि भवाद्यत आत्मवदेव सदिष्टमिति ॥ ४१ ॥ कपिलासुरिपंचशिखादिमतं परिगृह्य वदेद्यदि कश्चिदिदम् । न कदाचन जन्म वदामि सतः प्रवदामि तु यच्छृणु तत्त्वमपि ॥ ४२ ॥ प्रकृतावविशिष्टतया यदभूदधुना तु तदेव विशेषयुतम् । निरवद्यमिदं प्रतिभाति मम प्रवदात्र विरोधमवैपि यदि ॥ ४३ ॥ सदयुज्यत येन गुणेन पुरा प्रकृतौ स इहास्ति न वेति वद । यदि विद्यत एव पुरा प्रकृतावधुनापि विशेषयुतत्वमसत् ॥४४॥ यदि नास्ति पुरा स गुणः प्रकृतावसदुद्भवनं भवतोभिमतम् । जननेन च सत्वमुपात्तवतो जनिमत्त्वत एव विनष्टिरपि ॥४५॥ भवतोभिमतं परिहर्तुमिदं न कथंचन शक्यत इत्यमुतः । कणभक्षमतेन समस्तमिदं भवतोभिमतं शनकैरगमत् ॥ ४६ ॥ असतो भवनं नशनं च सतः कणभोजिमतं विदितं कविभिः । उपपत्तिविरुद्धतया सुभृशं तदभाणि मयापि विरुद्धतया ॥४७॥ प्रतिषिद्धमिदं कणभोजिमतं हरिणापि समस्तगुरोर्गुरुणा । वचनेन तु नासत इत्यमुना ब्रुवता च पृथातनयाय हितम् ॥४८॥ असतश्च सतश्च न जन्म भवेदिति पूर्वमवाद्युपपत्तियुतम् । सदसच्च न जायत एव कुतो न हि वस्तु तथाविधमस्ति यतः ॥ ४९ ॥ सदसत्त्वमतीत्य मनःप्रभृतेर्न कथंचन वृत्तिरिहास्ति यतः । तत एव मनःप्रमुखस्य भवो न भवेदिति सर्वसुवेद्यमिति

॥ ५० ॥ यदि नाम कथंचिदमुष्य भवः सदसत्त्वमपे
भविष्यति वः । अमृषात्वममुष्य तथापि न तु श्रुतिरस्य मृ
त्वमुवाच यतः ॥ ५१ ॥ मनसोनृततत्त्वमवादि यतस्तत ए
हि तस्य मृषा चरितम् । यत एव मृषा मनसश्चरितं तत ए
पुरोदितसिद्धिरभूत् ॥ ५२ ॥ यदपेक्ष्य तु नाम भवेत्रितयं प
मात्मपदस्य तुरीयमिति । तदसत्यमसत्यगुणस्तु यतः परि
मितसर्पविसर्पणवत् ॥ ५३ ॥ निखिलस्य मनःप्रमुखस्य
वितथत्वमवादि पुरा तु मया । श्रुतियुक्तिबलेन ततोऽक्ष
परमक्षरमेव सदन्यदसत् ॥ ५४ ॥ यदपूर्वमबाह्यमनन्तरकं
च किंचन तस्य भवत्यपरम् । इति वेदवचोनुशशास यतो
तथं परतोन्यदतः प्रगतम् ॥ ५५ ॥ प्रतिषिध्य यतो बहिरन्त
रपि स्वविलक्षणमात्मन उक्तवती । अवबोधघनत्वमतोन्यदस
वणैकरसत्वनिदर्शनतः ॥ ५६ ॥ लवणैकरसत्वसमं
स्वविलक्षणवस्तुनिषेधनतः । अवबोधघनं परमात्मपदं त्वमवे
तदस्मि सदाहमिति ॥ ५७ ॥ अणुनो न च तद्विपरीतगुणो
च ह्रस्वमतो न च दीर्घमपि । प्रतिषिद्धसमस्तविशेषणकं पर
क्षरमात्मतयाश्रय भोः ॥ ५८ ॥ असुबुद्धिशरीरगुणान्
मानविवेकिजनैर्दृशि धर्मतया । प्रतिपन्नतमान्प्रविहाय शनैर्दृ
मात्रमवेहि सदाहमिति ॥ ५९ ॥ अहिनिर्ल्वयनीमहिरात्मत
जगृहे परिमोक्षणतस्तु पुरा । परिमुच्य तु तामुरगः स्वबिलं
पुनः समवेक्षत आत्मतया ॥ ६० ॥ अविवेकत आत्मत
विदितं कुशरीरमिदं भवताप्यहिवत् । अहिवत्त्यज देहमि
त्वमपि प्रतिपद्य चिदात्मकमात्मतया ॥ ६१ ॥ रजनीदिव
न रवेर्भवतः प्रभया सततं युत एष यतः । अविवेकविवेकगुणा

तौ भवतो न रवेरिव नित्यदृशेः ॥ ६२ ॥ परिशुद्धविबुद्धविमुक्तदृशेरविवेकविवेकविवर्जनतः । मम बन्धविमोक्षगुणौ भवतो न कदाचिदपीत्यवगच्छ भृशम् ॥६३॥ न मम ग्रहणोज्झनमस्ति मया न परेण दृशेरिति निश्चिनु भोः । न हि कस्यचिदात्मनि कर्म भवेन्न च कश्चिदिहास्ति मदन्य इति ॥ ६४ ॥ अहमस्मि चरस्थिरदेहधियां चरितस्य सदेक्षक एक इति । न भवेदत एव मदन्य इति त्वमवेहि सुमेध इदं सुदृढम् ॥ ६५ ॥ गगने विमले जलदादिमले सति वाऽसति वा न भिदास्ति यथा । त्वयि सर्वगते परिशुद्धदृशौ न भिदास्ति तथा द्वयभेदकृता ॥ ६६ ॥ अनृतं द्वयमित्यवदाम पुरा व्यवहारमपेक्ष्य तु गीतमिदम् । अनृतेन न सत्यमुपैति युजां न मरीचिजलेन नदी ह्रदिनी ॥ ६७ ॥ बहुनाभिहितेन किमु क्रियते शृणु संग्रहमत्र वदामि तव । त्वयि जागरितप्रभृतित्रितयं परिकल्पितमित्यसदेव सदा ॥ ६८ ॥ परिकल्पितमित्यसदित्युदितं मन इत्यभिशब्दितमागमतः । उपपत्तिभिरेव च सिद्धमतो भवतोन्यदशेषमभूतमिति ॥ ६९ ॥ यदबाह्यमनन्तरमेकरसं यदकार्यमकारणमद्वयकम् । यदशेषविशेषविहीनतरं दृशिरूपमनन्तमृतं तदसि ॥ ७० ॥ इयदेव मयोपनिषत्सु पदं परमं विदितं न ततोस्त्यधिकम् । इति पिप्पलभक्ष इवाभ्यवददवशिष्टमतिं विनिवारयितुम् ॥७१॥ इतरोपि गुरुं प्रणिपत्य जगौ भगवन्निति तारितवानसि माम् । अवबोधतरेण समुद्रमिमं मृतिजन्मजलं सुखदुःखझषम् ॥७२॥ अधुनास्मि सुनिर्वृत आत्मरतिः कृतकृत्य उपेक्षक एकमनाः । प्रहसन्विषयान्मृगतोयसमान्विचरामि महीं भवता सहितः ॥ ७३ ॥ तव दासमहं भृशमामरणात्प्रतिपद्य शरीरभृतिं भग-

चन् । करवाणि मया शकनीयमिदं तव कर्त्तुमतोन्यदशक्यमि-
ति ॥ ७४ ॥ गुरुशिष्यकथाश्रवणेन मया श्रुतिवच्छ्रुतिसार-
मुद्धरणम् । कृतमित्थमवैति य एतदसौ न पतत्युदधौ मृति-
न्मजले ॥ ७५ ॥ भगवद्भिरिदं गुरुभक्तियुतैः पठितव्यमपा-
मतोन्यजनैः । गुरुभक्तिमतः श्रुति भाति यतो गुरुणोक्तम-
न्यो न भजेन्न पठेत् ॥ ७६ ॥ निगमोपि च यस्य इति प्र-
गुरुभक्तिमतः कथितं गुरुणा । प्रतिभाति महात्मन इत्य-
त्पठितव्यमतो गुरुभक्तियुतैः ॥ ७७ ॥ येषां धीसूर्यदी-
प्रतिहतमगमन्नाशमेकान्ततो मे ध्वान्तं स्वान्तस्य हेतुर्जननम-
संतानदोलाधिरूढैः । येषां पादौ प्रपन्नाः श्रुतिशमविनयै-
ताः शिष्यसंघाः सद्यो मुक्ताः स्थितास्तान्यतिवरमहितान्-
दायुर्नमामि ॥ ७८ ॥ भूः पादौ यस्य खं चोदरमसुरनिल-
न्द्रसूर्यौ च नेत्रे कर्णावाशाः शिरो द्यौर्मुखमपि दहनो
वास्तव्यमब्धिः । अन्तःस्थं यस्य विश्वं सुरनरखगगोभोगि-
धर्वदैत्यैः चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमा-
॥ ७९ ॥ इति श्रीतोटकाचार्यविरचितं श्रुतिसारसमुद्ध-
समाप्तम् ॥ ३४ ॥

---

## योगतारावली ॥ ३५ ॥

वन्दे गुरूणां चरणारविन्दे सन्दर्शितस्वात्मसुखावबोधे ।
निःश्रेयसे जाङ्गलिकायमाने संसारहालाहलमोहशान्त्यै ॥ १ ॥
सदाशिवोक्तानि सपादलक्षलयावधानानि वसन्ति लोके ।
नादानुसन्धानसमाधिमेकं मन्यामहे अन्यतमं लयानाम् ॥ २ ॥
सरे च पूरैरनिलस्य कुम्भे सर्वासु नाडीषु विशोधितासु ।

नाहताद्म्बुरुहादुदेति स्वात्मावगम्यः स्वयमेव बोधः ॥ ३ ॥
नादानुसन्धान नमोऽस्तु तुभ्यं त्वां मन्महे तत्त्वपदं लयानाम् ।
भवत्प्रसादात् पवनेन साकं विलीयते विष्णुपदे मनो मे ॥४॥
जालन्धरोड्डीयनमूलबन्धान् जल्पन्ति कण्ठोदरपायुमूले । बन्धत्रयेऽस्मिन् परिचीयमाने बन्धः कुतो दारुणकालपाशैः ॥ ५ ॥
उड्याणजालन्धरमूलबन्धैरुन्निद्रितायामुरगाङ्गनायाम् ॥ प्रत्यङ्मुखत्वात् प्रविशन् सुषुम्नां गमागमौ मुञ्चति गन्धवाहः ॥ ६ ॥
उत्थापिताधारहुताशनोल्कैराकुञ्चनैः शश्वदपानवायौ । सम्प्रापिते चन्द्रमसः स्रवन्तीं पीयूषधारां पिबतीह धन्यः ॥ ७ ॥
बन्धत्रयाभ्यासविपाकजातां विवर्जितां रेचकपूरकाभ्याम् ।
विशोधयन्तीं विषयप्रवाहां विद्यां भजे केवलकुम्भरूपाम् ॥८॥
अनाहते चेतसि सावधानैरभ्यासशूरैरनुभूयमानाः । संस्तम्भितश्वासमनःप्रचारा सा जृम्भते केवलकुम्भकश्रीः ॥ ९ ॥
सहस्रशः सन्ति हठेषु कुम्भाः सम्भाव्यते केवलकुम्भ एव ।
कुम्भोत्तमे यत्र तु रेचपूरैः प्राणस्य न प्राकृतवैकृताख्यैः ॥१०॥
त्रिकूटनाम्नि तिमिरेऽन्तरे खे स्तम्भिते केवलकुम्भ एव ।
प्राणानिलो भानुशशाङ्कनाड्यौ विहाय सद्यो विलयं प्रयाति
॥ ११ ॥ प्रत्याहृतः केवलकुम्भकेन प्रबुद्धकुण्डल्युपभुक्तशेषः ।
प्राणः प्रतीचीनपथेषु मन्दं विलीयते विष्णुपदे मनो मे
॥ १२ ॥ निरङ्कुशानां श्वसनोद्गमानां निरोधनैः केवलकुम्भकाख्यैः । उदेति सर्वेन्द्रियवृत्तिशून्यो मरुल्लयः कोऽपि महामतीनाम् ॥ १३ ॥ न दृष्टिलक्ष्याणि न चित्तबन्धो न देशकालौ न च वायुरोधः । न धारणाध्यानपरिश्रमो वा समेधमाने सति राजयोगे ॥ १४ ॥ अशेषदृश्योज्झितदृग्जयानामवस्थि-

तानामिह राजयोगे। न जागरो नास्ति सुषुप्तिभावो न क
वितं नो मरणं न चित्तम् ॥ १५ ॥ अहं ममत्वादि वि
सर्वं श्रीराजयोगे स्थिरमानसानाम् । न दृष्टिता नास्ति
दृश्यभावः सा जृम्भते केवलसंविदेव ॥ १६ ॥ नेत्रे व
न्मेषनिमेषशून्ये वायुर्यथा वर्जितरेचपूरः। मनश्च सङ्कल्पवि
ल्पशून्यं मनोन्मनी सा मयि सन्निधत्ताम् ॥ १७ ॥ चिर
याणां चिरनिग्रहेण श्वासप्रवाहे शमिते समस्ते। निवातद
यितनिश्चलाङ्गो मनोन्मनीपा मयि सन्निधत्ताम् ॥ १८
उन्मन्यवस्थाधिगमाय विद्वन्नुपायमेकं तव निर्दिशामः।
न्नुदासीनदृशा प्रपञ्चं संकल्पमून्मूलय सावधानः ॥ १९
प्रसह्य संकल्पपरम्पराणां संछेदने सन्ततसावधानः। आल
नादावपचीयमाने शनैः शनैः शान्तिमुपैति चेतः ॥ २०
निश्वासलोपैर्विधृतैः शरीरैर्नेत्राञ्चलैर्वद्धनिमीलितैश्च। आवि
वन्तीह मनस्कमुद्रामालोकयामि मुनिपुङ्गवानाम् ॥ २१
अमी हि चेन्द्रा सहजा मनस्कादहं ममत्वं शिथिलायमा
मनोगतिं मारुतवृत्तिशून्यं गच्छन्त्यगम्यां गमनावशे
॥ २२ ॥ निवर्त्तयन्तीं निभृतेन्द्रियाणां प्रवर्त्तयन्तीं परमा
योगम्। सच्चिन्मयीं तां सहजामवस्थां कदा गमिष्यामि ग
न्यभागः ॥ २३ ॥ प्रत्यग्विमर्शातिशयेन पुंसां प्राचीनग
पलायितेषु। प्रादुर्भवेत् कापि न जाड्यनिद्रा प्रपञ्च
विलयं प्रयाति ॥ २४ ॥ विच्छिन्नसंकल्पविकल्पमूले नि
पनिर्मूलितकर्मजाले । निरन्तराभ्यासिनि नित्यभद्रे वि
जते योगिनि योगनिद्राः ॥ २५ ॥ विश्रान्तिमासाद्य तु
तत्त्वे विश्वाद्यवस्थात्रितयं परस्थे। सच्चिन्मयीं कामपि

कालं निद्रां भजन्निर्विपनिर्विकल्पाम् ॥ २६ ॥ प्रकाशमाने परमात्मभानौ नश्यत्यविद्यातिमिरे समस्ते । अहो बुधा निर्मलदृष्टयोऽपि किञ्चिन्न पश्यन्ति जगत् समग्रम् ॥ २७ ॥ सिद्धिं तथाविधमनोविलयां समर्थां श्रीशैलशृङ्गकुहरेषु कदोपलभ्ये । गात्रं यथा सरलताः परिवेष्टयन्ति कार्णे यथा विरचयन्ति खगाश्च नीडम् ॥ २८ ॥ ब्रह्मरन्ध्रगते वायौ गिरेः प्रस्रवणं भवेत् । शृणोति श्रवणातीतं नादं मुक्तिर्न संशयः ॥ २९ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पादपूज्यशिष्यश्रीमच्छङ्कराचार्यविरचिता योगतारावली संपूर्णा ।

---

## सौन्दर्यलहरी ॥ ३६ ॥

ॐ परमात्मने नमः ॥ शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि । अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥१॥ तनीयांसं पांसुं तव चरणपंकेरुहभवं विरिञ्चिः संचिन्वन्विरचयति लोकानविकलम् । वहत्येनं शौरिः कथमपि सहस्रेण शिरसां हरः संक्षुभ्यैनं भजति भसितोद्धूलनविधिम् ॥ २ ॥ अविद्यानामन्तस्तिमिरमिहिरोद्दीपनकरी जडानां चैतन्यस्तवकमकरन्दस्रुतिशिराः । दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवति ॥ ३ ॥ त्वदन्यः पाणिभ्यामभयवरदो दैवतगणस्त्वमेका नैवासि प्रकटितवरा भीत्यभिनया । भयात्त्रातुं दातुं फलमपि च वाञ्छासमधिकं शरण्ये लोकानां तव हि चरणावेव निपुणौ ॥ ४ ॥

हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीं पुरा नारीभूत्वा पु
रिपुमपि क्षोभमनयत् । स्मरोपि त्वां नत्वा रतिनयनले
वपुषा मुनीनामप्यन्तः प्रभवति हि मोहाय महताम् ॥
धनुः पौष्पं मौर्वी मधुकरमयी पञ्च विशिखा वसन्तः सा
मलयमरुदायोधनरथः । तथाप्येकः सर्वं हिमगिरिसुते क
कृपामपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥ ६ ॥
त्काञ्चीदामा करिकलभकुम्भस्तनभरा परिक्षीणा मध्ये प
तशरच्चन्द्रवदना । धनुर्बाणान्पाशं सृणिमपि दधाना क
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥ ७ ॥ सुधा
मध्ये सुरविटपिवाटीपरिवृते मणिद्वीपे नीपोपवनवति
मणिगृहे । शिवाकारे मञ्चे परमशिवपर्यङ्कनिलया भजन्ति
धन्याः कतिचन चिदानन्दलहरीम् ॥ ८ ॥ महीं मूला
कमपि मणिपूरे हुतवहं स्थितिं स्वाधिष्ठाने हृदि मरुतमा
मुपरि । मनोपि भ्रूमध्ये सकलमपि जित्वा कुलपथं स
पद्मे सह रहसि पत्या विहरसे ॥ ९ ॥ सुधाधारासारैश्च
गलान्तर्विगलितैः प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायम
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं स्वमात्मानं
स्वपिषि कुलकुण्डे कुहरिणि ॥ १० ॥ चतुर्भिः श्रीकण्ठैः
युवतिभिः पञ्चभिरधः प्रभिन्नाभिः शम्भोर्नवभिरिति
कृतिभिः । त्रयश्चत्वारिंशद्वसुदलकलाब्जत्रिवलयत्रिरेखा
सार्धं तव चरणकोणाः परिणताः ॥ ११ ॥ त्वदीयं
तुहिनगिरिकन्ये तुलयितुं कवीन्द्राः कल्पन्ते कथमपि
ञ्चिप्रभृतयः । यदालोक्यौत्सुक्यादमरललना यान्ति
तपोभिर्दुःप्रापामपि गिरिशसायुज्यपदवीम् ॥ १२ ॥

वर्षीयांसं नयनविरसं नर्मसु जडं तवापाङ्गालोके पतितमनुधावन्ति शतशः । गलद्वेणीबन्धाः कुचकलशविस्रस्तसिचया हटात्त्रुट्यत्काञ्च्यो विगलितदुकूला युवतयः ॥ १३ ॥ क्षितौ षट्पञ्चाशद्द्विसमधिकपञ्चाशदुदके हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले । दिवि द्वौः षट्त्रिंशन्मनसि च चतुःषष्टिरिति ये मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम् ॥ १४ ॥ शरज्ज्योत्स्नाशुभ्रां शशियुतजटाजूटमुकुटां वरत्रासत्राणस्फटिकघुटिकापुस्तककराम् । सकृन्नत्वा न त्वां कथमिव सतां संनिदधते मधुक्षीरद्राक्षामधुरिमधुरीणा भणितयः ॥ १५ ॥ कवीन्द्राणां चेतः कमलवनबालातपरुचिं भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम् । विरिञ्चिप्रेयस्यास्तरलतरशृंगारलहरीगभीराभिर्वाग्भिर्विदधति सतां रञ्जनममी ॥ १६ ॥ तनुच्छायाभिस्ते तरुणतरणिश्रीसरणिभिर्दिवं सर्वामुर्वीमरुणिमनिमग्नां स्मरति यः । भवन्त्यस्य त्रस्यद्वनहरिणशालीननयनाः सहोर्वश्या वश्याः कतिकति न गीर्वाणगणिकाः ॥ १७ ॥ मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो हरार्धं ध्यायेद्यो हरमहिषि ते मन्मथकलाम् । स सद्यः संक्षोभं नयति वनिता इत्यतिलघुत्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥ १८ ॥ किरन्तामङ्गेभ्यः किरणनिकुरम्बामृतरसं हृदि त्वामाधत्ते हिमकरशिलामूर्तिमिव यः । स सर्पाणां दर्पं शमयति शकुन्ताधिप इव ज्वरप्लुष्टं दृष्ट्या सुखयति सुधासारसितया ॥ १९ ॥ तडिल्लेखा तन्वी तपनशशिवैश्वानरमयीं निषण्णां षण्णामप्युपरि कमलानां तव कलाम् । महापद्माटव्यां मृदितमलमायेन मनसा महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ॥ २० ॥ सवित्रीभिर्वाचां शशिम-

णिशिलाभङ्गरुचिभिर्वशिन्याद्याभिस्त्वां सह जननि संचि
यति यः । स कर्त्ता काव्यानां भवति वचसां भङ्गिसुभगैः
भिर्वाग्देवीवदनकमलामोदमधुरैः ॥ २१ ॥ भवानि त्वं
मयि वितर दृष्टिं स करुणामिति स्तोतुं वाञ्छन्कथयति भ
नि त्वमिति यः । तदैव त्वं तस्मै दिशसि निजसायुज्यप
मुकुन्दब्रह्मेत्यस्फुटमुकुटनीराजितपदाम् ॥ २२ ॥ त्वया हृ
वामं वपुरपरितृप्तेन मनसा शरीरार्धं शंभोरपरमपि शङ्के हृ
भूत् । तथा हि त्वद्रूपं सकलमरुणाभं त्रिनयनं कुचाभ्याम
कुटिलशशिचूडालमुकुटम् ॥ २३ ॥ जगत्सूते धाता हरि
रुद्रः क्षपयते तिरस्कुर्वन्नेतत्स्वमपि वपुरीशस्तिरयति । सदा
सर्वं तदिदमनुगृह्णाति च शिवस्तवाज्ञामालम्ब्य क्षणचलितयो
लतिकयोः ॥ २४ ॥ त्रयाणां देवानां त्रिगुणजनितानां
शिवे भवेत्पूजा पूजा तव चरणयोर्या विरचिता । तथा
त्वत्पादोद्वहनमणिपीठस्य निकटे स्थिता ह्येते शश्वन्मुकुलित
त्तंसमुकुटाः ॥ २५ ॥ विरिञ्चिः पञ्चत्वं व्रजति हरिरा
विरतिं विनाशं कीनाशो भजति धनदो याति निधनम् । वि
न्द्रा माहेन्द्री विततिरपि संमीलति दृशां महासंहारेऽस्मिन्
सति सति त्वत्पतिरसौ ॥ २६ ॥ जपो जल्पः शिल्पं स
मपि मुद्राविरचनं गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधि
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा सपर्यापर्याय
भवतु यन्मे विलसितम् ॥ २७ ॥ ददाने दीनेभ्यः श्रियम
शमाशानुसदृशीममन्दं सौन्दर्यप्रकरमकरन्दं विकिरति । त
स्मिन्मन्दारस्तवकसुभगे यातु चरणे निमज्जन्मज्जीवः करणच
षट्चरणताम् ॥ २८ ॥ सुधामप्यास्वाद्य प्रतिभयजरामृत्यु

रणीं विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः । करालं यत्क्ष्वेडं कवलितवतः कालकलना न शंभोस्तन्मूलं जननि तव ताटङ्कमहिमा ॥ २९ ॥ किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः कठोरे कोटीरे स्खलसि जहि जम्भारिमुकुटम् । प्रणम्रेष्वेतेषु प्रसभमभियातस्य भवनं हरस्याभ्युत्थाने तव परिजनोक्तिर्विजयते ॥ ३० ॥ चतुःषष्ट्या तन्त्रैः सकलमभिसंधाय भुवनं स्थितस्तत्तत्सिद्धिप्रसभपरतन्त्रैः पशुपतिः । पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटनास्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥ ३१ ॥ शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः स्मरो हंसः शक्रस्तदनु च परामारहरयः । अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता भजन्ते वर्णास्ते तव जननि नामावयवताम् ॥ ३२ ॥ स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ तव मनो निधायैके नित्ये निरवधिमहाभोगरसिकाः । जपन्ति त्वां चिन्तामणिगुणनिबद्धाक्षवलयाः शिवाग्नौ जुह्वन्तः सुरभिघृतधाराहुतिशतैः ॥ ३३ ॥ शरीरं त्वं शंभोः शशिमिहिरवक्षोरुहयुगं तवात्मानं मन्ये भगवति भवात्मानमनघम् । अतः शेषः शेषीत्ययमुभयसाधारणतया स्थितः संबन्धो वां समरसपरानन्दपरयोः ॥ ३४ ॥ मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि त्वमापस्त्वं भूमिस्त्वयि परिणतायां नहि परम् । त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा चिदानन्दाकारं हरमहिषिभावेन बिभृषे ॥ ३५ ॥ तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं परं शंभुं वन्दे परिमिलितपार्श्वं परचितम् । यमाराध्यन्भक्त्या रविशशिशुचीनामविषये निरालोके लोको निवसति निजालोकभवने ॥ ३६ ॥ विशुद्धौ ते शुद्धस्फटिकविशदं व्योम-

जनकं शिवं सेवे देवीमपि शिवसमानव्यसनिनीम् । यां
कान्त्या यांत्या शशिकिरणसारूप्यसरणिविधूतान्तर्ध्वान्ता
लसति चकोरीव जगती ॥ ३७ ॥ समुन्मीलत्संवित्कमलम
रन्दैकरसिकं भजे हंसद्वन्द्वं किमपि महतां मानसचराम् ।
लापादष्टादशगुणितविद्यापरिणतिर्यदादत्ते दोषाद्गुणमखिल
द्भ्यः पय इव ॥ ३८ ॥ तव स्वाधिष्ठाने हुतवहमधिष्ठाय नि
तमीडे संवर्तं जननि महतीं तां च समयाम् । यदा लो
लोकान्दहति महति क्रोधकलिले दयार्द्रा या दृष्टिः शिशि
पचारं रचयति ॥ ३९ ॥ तडित्वन्तं शक्त्या तिमिरपरिपन्थि
स्फुरणया स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम् । तव श्या
मेघं कमपि मणिपूरैकशरणं निषेवे वर्षन्तं हरमिहिरतप्तं त्रि
वनम् ॥ ४० ॥ तवाधारे मूले सहसमयया लास्यपरया नव
त्मानं मन्ये नवरसमहाताण्डवनटम् । उभाभ्यामेताभ्यामुद
विधिमुद्दिश्य दयया सनाथाभ्यां जज्ञे जनकजननीमज्जगदि
॥ ४१ ॥ गतैर्माणिक्यत्वं गगनमणिभिः सान्द्रघटितं किरी
ते हैमं हिमगिरिसुते कीर्तयति यः । समीपे यच्छायास्फुरण
चलं चन्द्रशकलं धनुः शौनासीरं किमिदमिति बध्नाति धि
णाम् ॥ ४२ ॥ धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनं घन
स्निग्धं श्लक्ष्णं चिकुरनिकुरम्बं तव शिवे । यदीयं सौरभ्यं स
जमुपलब्धुं सुमनसो वसन्त्यस्मिन्मन्ये बलमथनवाटीविटपिनां
॥ ४३ ॥ वहन्ती सिन्दूरं प्रबलकबरीभारतिमिरत्विषां बृन्दै
न्दीकृतमिव नवीनार्ककिरणम् । तनोतु क्षेमं नस्तव वदनसौ
न्दर्यलहरी परीवाहस्रोतःसरणिरिव सीमन्तसरणिः ॥ ४४
अरालैः स्वाभाव्यादलिकुललसच्छ्रीभिरलकैः परीतं ते वक्त्रं प

हसति पङ्केरुहरुचिम् । दरस्मेरे यस्मिन्दशनरुचिकिञ्जल्करुचिरे सुगन्धौ माद्यन्ति स्मरमथनचक्षुर्मधुलिहः ॥ ४५ ॥ ललाटं लावण्यद्युतिविमलमाभाति तव यत्तृतीयं तन्मन्ये मुकुटशशिखण्डस्य शकलम् । विपर्यासन्यासादुभयकृतसंधानमथितः सुधालेपस्फूर्तिः परिणमति राकाहिमकरः ॥ ४६ ॥ भ्रुवौ भुग्ने किंचिद्भुवनभयभङ्गव्यसनिनि त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणे । धनुर्मध्ये सव्येतरकरगृहीतं रतिपतिः प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमुभे ॥ ४७ ॥ अहः सूते सव्यं तव नयनमर्कात्मकतया त्रियामां वामं ते सृजति रजनीनायकमयम् । तृतीया दृष्टिस्ते दरदलितहेमाम्बुजरुचिः समाधत्ते संध्यां दिवसनिशयोरन्तरचरीम् ॥ ४८ ॥ विशाला कल्याणी स्फुटरुचिरयोध्याकुवलयैः कृपाधारापारा किमपि मधुराभोगवतिका । अवन्ती दृष्टिस्ते बहुनगरविस्तारविजया ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते ॥ ४९ ॥ कवीनां संदर्भस्तबकमकरन्दैकभरितं कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम् । अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरलावसूयासंसर्गादलिकनयनं किंचिदरुणं ॥ ५० ॥ शिवे शृङ्गाराऽर्द्रा तदितरजने कुत्सनपरा सरोषा गङ्गायां गिरिशचरिते विस्मयवती । हराहिभ्यो भीता सरसिरुहसौभाग्यजननी सखीषु स्मेरा ते मयि जयति दृष्टिः सकरुणा ॥ ५१ ॥ गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती पुरां भेत्तुश्चित्ते प्रशमरसविद्रावणफले । इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके तवाकर्णाकृष्टस्मरशरविलासं कलयतः ॥ ५२ ॥ विभक्तत्रैवर्ण्यं व्यतिकरणनीलाम्बुजतया विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते । पुनः स्रष्टुं देवान्द्रुहिणहरिरुद्रानुपरता-

त्रजः सत्त्वं बिभ्रत्तम इति गुणानां त्रयमिव ॥ ५३ ॥ पवि
कर्तुं नः पशुपतिपराधीनहृदये दयामित्रैर्नेत्रैररुणधवलश्याम
चिभिः । नदः शोणो गङ्गा तपनतनयेति ध्रुवमिमं त्रया
तीर्थानामुपनयसि संभेदमनघे ॥ ५४ ॥ तवापर्णे कर्णेजप
नपैशून्यचकिता निलीयन्ते तोये नियतमनिमेषाः शफरिका
इयं च श्रीर्बद्धच्छदपुटकपाटं कुवलयं जहाति प्रत्यूषे निशि
विघटय्य प्रविशति ॥ ५५ ॥ निमेषोन्मेषाभ्यां प्रलयमु
याति जगती तवेत्याहुः सन्तो धरणिधरराजन्यतनये । त्वदु
-पाज्जातं जगदिदमशेषं प्रलयतः परित्रातुं शङ्के परिहृतनिमे
स्तव दृशः ॥ ५६ ॥ दृशा द्राघीयस्या दरदलितनीलोत्पल
दवीयांसं दीनं स्नपय कृपया मामपि शिवे । अनेनायं ध
भवति न च ते हानिरियता वने वा हर्म्ये वा समकरनिपा
हिमकरः ॥ ५७ ॥ अरालं ते पालीयुगलनगराजन्यतनये
केपामाधत्ते कुसुमशरकोदण्डकुतुकम् । तिरश्चीनो यत्र श्रव
थमुल्लङ्घ्य विलसन्नपाङ्गव्यासङ्गो दिशति शरसन्धानधिष
॥ ५८ ॥ स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं चतुश्चक्रं
तव मुखमिदं मन्मथरथम् । यमारुह्य द्रुह्यत्यवनिरथमर्केन्दु
रणं महावीरो मारः प्रमथपतये सं जितवते ॥ ५९ ॥ सर
त्याः सूक्तीरमृतलहरीकोशसदृशीः पिबन्त्या शर्वाणि श्रव
लुकाभ्यामविरतम् । चमत्कारश्लाघाचलितशिरसः कुण्डल
झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ॥ ६० ॥ असौ ना
वंशस्तुहिनगिरिवंशध्वजपटस्त्वदीयो नेदीयः फलतु फ
साकमुचितम् । वहन्नन्तर्मुक्ताः शिशिरतरनिश्वासघटि
समृद्ध्या यत्तासां बहिरपि च मुक्तामणिधरः ॥ ६१ ॥ प्रकृ

रक्तायास्तव सुदति दन्तच्छदरुचेः प्रवक्ष्ये सादृश्यं जनयतु
फलं विद्रुमलता । क्व बिम्बं त्वद्बिम्बप्रतिफलनलाभादरुणितं
तुलामध्यारोढुं कथमिव न लज्जेत कलया ॥ ६२ ॥ स्मितज्यो-
त्स्नाजालं तव वदनचन्द्रस्य पिबतां चकोराणामासीदतिरस-
तया चारुजडिमा । अतस्ते शीतांशोरमृतलहरीमम्लरुचयः
पिबन्ति स्वच्छन्दं निशिनिशि भृशं काञ्जिकधिया ॥ ६३ ॥
अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजडा जपापुष्पच्छाया तव
जननि जिह्वा जयति सा । यदग्रासीनायाः स्फटिकदृषदच्छ-
च्छविरुचिः सरस्वत्या मूर्त्तिः परिणमति माणिक्यवपुषा ॥६४॥
रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभिर्निवृत्तैश्चण्डांशत्रिपुर-
हरनिर्माल्यविमुखैः । विरिञ्चीन्द्रोपेन्द्रैः शशिशिशिरकर्पूरधवला
विलिप्यन्ते मातस्तव वदनताम्बूलशकलाः ॥ ६५ ॥ विपञ्च्या
गायन्ती विविधमवदातं पशुपतेस्त्वयारब्धं वक्तुं स्खलितवचसा
साधुवचने । त्वदीयैर्माधुर्यैरपलपिततन्त्रीकलरवा निजां वीणां
वाणी निचुलयति चोलेन निभृतम् ॥ ६६ ॥ कराग्रेण स्पृष्टं
तुहिनगिरिणा वत्सलतया गिरीशेनोदस्तं मुहुरधरपानाकुल-
तया । करग्राह्यं शंभोर्मुखमुकुरवृन्तं गिरिसुते कथंकारं ब्रूमस्तव
चिबुकमौपम्यरहितम् ॥ ६७ ॥ भुजाश्लेषान्नित्यं पुरदमयितुः
कण्टकवती तव ग्रीवा धत्ते मुखकमलनालश्रियमियम् । स्वतः-
श्वेता कालागरुबहलजम्बालमलिना मृणालीलालित्यं वहति
यदधो हारलतिका ॥ ६८ ॥ गले रेखास्तिस्रो गतिगमकगीतै-
कनिपुणे विवाहव्यानद्धत्रिगुणगुणसंख्याप्रतिभुवः । विराजन्ते
नानाविधमधुररागाकरभुवां त्रयाणां ग्रामाणां स्थितिनियमसी-
मान इव ते ॥६९॥ मृणालीमृद्वीनां तव भुजलतानां चतसृणां

चतुर्भिः सौन्दर्यं सरसिजभवः स्तौति वदनैः । नखेभ्यः ...
स्मन्मथमदमनादन्धकरिपोश्चतुर्णां वक्त्राणां सममभयदाना...
धिया ॥ ७० ॥ नखानामुद्योतैर्नवनलिनरागं विहसतां ...
ते कान्तिं कथय कथयामः कथमुमे । कदाचिद्वा साम्यं ...
विधया हन्त कमलं यदि क्रीडल्लक्ष्मीचरणतललाक्षारुण...
॥ ७१ ॥ समं देवि स्कन्दद्विपवदनपीतं स्तनयुगं तवेदं ...
खेदं हरतु सततं प्रस्नुतमुखम् । यदालोक्याशङ्काकुलित...
हासजनकः स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति ॥...
अमू ते वक्षोजावमृतरसमाणिक्यकलशौ न सन्देहस्पन्दो ...
तिपताकौ मनसि नः । पिबन्तौ तौ यस्मादविदितवधूसं...
रसौ कुमारावद्यापि द्विरदवदनक्रौञ्चदमनौ ॥ ७३ ॥ वहत...
स्तम्बेरमदनुजकुम्भप्रकृतिभिः समारब्धां मुक्तामणिभि...
हारलतिकाम् । कुचाभोगो बिम्बाधररुचिभिरन्तःशबलि...
प्रतापव्यामिश्रां पुरविजयिनः कीर्त्तिमिव ते ॥ ७४ ॥ ...
स्तन्यं मन्ये तुहिनगिरिकन्ये हृदयतः पयःपारावारः परिव...
सारस्वत इति । दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव ...
वीनां प्रौढानामजनि कमनीयः कवयिता ॥ ७५ ॥ हरक्रो...
ज्वालावलिभिरवलीढेन वपुषा गभीरे ते नाभीसरसि कृत...
मनसिजः । समुत्तस्थौ तस्मादचलतनये धूमलतिका ज...
जानीते तव जननि रोमावलिरिति ॥ ७६ ॥ यदेतत्कालिन्दी...
तनुतरतरङ्गाकृतिशिवे कृशे मध्ये किंचिज्जननि तव ...
सुधियाम् । विमर्दादन्योन्यं कुचकलशयोरन्तरगतं ...
व्योम प्रविशदिव नाभीकुहरिणीम् ॥ ७७ ॥ स्थिरो गङ्गा...
स्तनमुकुलरोमावलिलताकुलावालं कुण्डं कुसुमशरतेजोहुत...

रतेर्लीलागारं किमपि तव नाभीति गिरिजे विलद्वारं सिद्धे-
र्गिरिशनयनानां विजयते ॥ ७८ ॥ निसर्गक्षीणस्य स्तनतटभ-
रेण क्लमजुषो नमन्मूर्त्तेर्नाभौ वलिषु शनकैस्त्रुट्यत इव । चिरं ते
मध्यस्य त्रुटिततटिनीतीरतरुणा समावस्थस्थेम्नो भवतु कुशलं
शैलतनये ॥ ७९ ॥ कुचौ सद्यः स्विद्यत्तटघटितकूर्पासभिदुरौ
कपन्तौ दोर्मूले कनककलशाभौ कलयता । तव त्रातुं भङ्गादु-
दरमवलग्नं तनुभुवा त्रिधानद्धं देवि त्रिवलिलवलीवल्लिभिरिव
॥ ८० ॥ गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजान्नित-
म्बादाच्छिद्य त्वयि हरणरूपेण विदधे । अतस्ते विस्तीर्णो गुरु-
रयमशेषां वसुमतीं नितम्बप्राग्भारः स्थगयति लघुत्वं नयति
च ॥ ८१ ॥ करीन्द्राणां शुण्डाकनककदलीकाण्डपटलीमुभा-
भ्यामूरुभ्यामुभयमपि निर्जित्य भवती । सुवृत्ताभ्यां पत्युः
प्रणतिकठिनाभ्यां गिरिसुते विजिग्ये जानुभ्यां विबुधकरिकु-
म्भद्वयमपि ॥ ८२ ॥ पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते
निषङ्गौ जङ्घे ते विषमविशिखो बाढमकृत । यदग्रे लक्ष्यं ते
दशशरफलाः पादयुगलीनखाग्रच्छद्मानः सुरमुकुटशाणैकनि-
शिताः ॥ ८३ ॥ श्रुतीनां मूर्धानो दधति तव यौ शेखरतया
ममाप्येतौ मातः शिरसि दयया धेहि चरणौ । ययोः पाद्यं
पाथः पशुपतिजटाजूटतटिनी ययोर्लाक्षालक्ष्मीररुणहरिचूडा-
मणिरुचिः ॥ ८४ ॥ नमोवाकं ब्रूमो नयनरमणीयाय पदयो-
स्तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकरुचे । असूयत्यत्यन्तं यद-
भिहननाय स्पृहयते पशूनामीशानः प्रमदवनकङ्केलितरवे ॥८५॥
मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं ललाटे भर्त्तारं चर-
णयुगले ताडयति ते । चिरादन्तःशल्यं दहनकृतमुन्मीलित-

चता तुलाकोटिक्काणैः किलिकिलितमीशानरिपुणा ॥ ८
हिमानीहन्तव्यं हिमगिरितटाक्रान्तिचतुरौ निशायां नि
निशि च परभागे च विशदौ । परं लक्ष्मीपात्रं श्रियमपि
न्तौ समयिनां सरोजं त्वत्पादौ जननि जयतश्चित्रमिह कि
॥ ८७ ॥ पदं ते कान्तीनां प्रपदमपदं देवि विपदां कथं
सद्भिः कठिनकमठीखर्परतुलम् । कथं वा हस्ताभ्यामुपयमन
पुरमिदा तदादाय न्यस्तं दृषदि दयमानेन मनसा ॥ ८
नखैर्नाकस्त्रीणां करकमलसंकोचशशिभिस्तरूणां दिव्यानां
त इव ते चण्डि चरणौ । फलानि स्वस्थेभ्यः किसलयक
ददतां दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥ ८
कदा काले मातः कथय कलितालक्तकरसं पिबेयं विद्या
तव चरणनिर्णेजनजलम् । प्रकृत्या मूकानामपि च कविता
णतया यदा धत्ते वाणी मुखकमलताम्बूलरसताम् ॥ ९०
पदन्यासक्रीडापरिचयमिवारब्धुमनसश्चरन्तस्ते खेलं भवन
हंसा न जहति । स्वविक्षेपे शिक्षां सुभगमणिमञ्जीररणित
लादाचक्षाणं चरणकमलं चारुचरिते ॥ ९१ ॥ गतास्ते म
द्रुहिणहरिरुद्रेश्वरभृतः शिवः स्वच्छच्छायाघटितकपटप्रच्छ
पटः । त्वदीयानां भासां प्रतिफलनलाक्षारुणतया श
शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥ ९२ ॥ अराला
प्रकृतिसरला मन्दहसिते शिरीषाभा गात्रे दृषदिव क
कुचतटे । भृशं तन्वी मध्ये पृथुरपि वरारोहविषये जग
शंभोर्जयति करुणा काचिदरुणा ॥ ९३ ॥ समानीतः प
मणिमुकुरतामम्बरमणिर्भया दास्यस्यान्तस्तिमितकिरणश्रे
रणः । दधाति त्वद्वक्त्रप्रतिफलनमश्रान्तविकचं निरात

निजहृदयपङ्केरुहमिव ॥ ९४ ॥ कलङ्कः कस्तूरीरजनिकरबिम्बं जलमयं कलाभिः कर्पूरैर्मरकतकरण्डं निबिडितम् । अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं विधिर्भूयोभूयो निबिडयति नूनं तव कृते ॥ ९५ ॥ पुरारातेरन्तःपुरमसि ततस्त्वच्चरणयोः सपर्यामर्यादा तरलकरणानामसुलभा । तथाप्येते नीताः शतमखमुखा सिद्धिमतुलां तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः ॥ ९६ ॥ कलत्रं वैधात्रं कतिकति भजन्ते न कवयः श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः । महादेवं हित्वा तव सति सतीनामचरमे कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः ॥ ९७ ॥ स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितो निषेव्यां नित्ये त्वामहमिति सदा भावयति यः । किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतो महासंवर्ताग्निर्विरचयति नीराजनविधिम् ॥ ९८ ॥ गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो हरेः पत्नीं पद्मां हरसहचरीमादितनयाम् । तुरीया कापि त्वं दुरधिगमनिःसीममहिमा महामाये विश्वं भ्रमयसि परब्रह्ममहिषि ॥ ९९ ॥ समुद्भूतस्थूलस्तनभरमुरश्चारु हसितं कटाक्षे कन्दर्पः कतिचन कदम्बद्युतिवपुः ॥ हरस्य त्वद्भ्रान्तिं मनसि जनयन्ति स्म विमला भवत्या ये भक्ताः परिणतिरमीपामियमुमे ॥ १०० ॥ सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विजयते रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा । चिरंजीवन्नेव क्षपितपशुपाशव्यतिकरः परब्रह्माभिख्यं रसयति रसं त्वद्भजनवान् ॥ १०१ ॥ निधे नित्यस्मेरे निरवधिगुणे नीतिनिपुणे निराघाटज्ञाने नियमपरचित्तैकनिलये । नियत्या निर्मुक्ते निखिलनिगमान्तस्तुतिपदे निरातङ्के नित्ये निगमय ममापि स्तुतिमिमाम्

॥ १०२ ॥ प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः सु
सूते चन्द्रोपलजललवैरर्घ्यरचना । स्वकीयैरम्भोभिः सलि
धिसौहित्यकरणं स्वकीयाभिर्वाग्भिस्तव जननि वाचां स्तुति
यम् ॥ १०३ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्य
च्छंकराचार्यविरचितं सौन्दर्यलहरीस्तोत्रं संपूर्णम् ॥

---

## आनंदलहरी ॥ ३७ ॥

ॐ परमात्मने नमः ॥ भवानि स्तोतुं त्वां प्रभवति चतुर्भि
वदनैः प्रजानामीशानस्त्रिपुरमथनः पंचभिरपि । न षड्भि
सेनानी दशशतमुखैरप्यहिपतिस्तदान्येषां केषां कथय कथमि
न्नवसरः ॥ १ ॥ घृतक्षीरद्राक्षामधुमधुरिमा कैरपि पदैर्वि
ष्यानाख्येयो भवति रसनामात्रविषयः । तथा ते सौं
परमशिवदृङ्मात्रविषयः कथंकारं ब्रूमः सकलनिगमागोच
गुणे ॥ २ ॥ मुखे ते तांबूलं नयनयुगले कज्जलकला ल
काश्मीरं विलसति गले मौक्तिकलता । स्फुरत्कांचीशाटी
कटितटे हाटकमयी भजामस्त्वां गौरीं नगपतिकिशोरीमविरत
॥ ३ ॥ विराजन्मन्दारद्रुमकुसुमहारस्तनतटीनदद्वीणानाद
प्रमदविचलत्कुंडलगणः । नतांगी मातंगी रुचिरगतिभं
भगवती सती शंभोरंभोरुहचटुलचक्षुर्विजयते ॥ ४ ॥ नवीन
केभ्राजन्मणिकनकभूषापरिकरैर्वृतांगी सारंगी रुचिरनयनां
कृतशिवा । तडित्पीता पीतांबरललितमंजीरसुभगा ममा
र्णापर्णा निरवधिसुखैरस्तु सुमुखी ॥ ५ ॥ हिमाद्रौ संभूता

ललितकरैः पल्लवयुता सपुष्पा मुक्ताभिर्भ्रमरकलिता चालक-
भरैः । कृतस्थाणुस्थाना मुकुलितलता सूक्तिसरसा रुजां हंत्री
गंत्री विलसति चिदानंदलतिका ॥ ६ ॥ सपर्णामाकीर्णां कति-
पयगुणैः सादरमिह श्रयंत्यन्ये वल्लिं मम तु मतिरेवं विलस-
ति । अपर्णैका सेव्या जगति सकलैर्यत्परिवृतः पुराणोपि
स्थाणुः फलति किल कैवल्यपदवीम् ॥ ७ ॥ विधात्री धर्माणां
त्वमसि सकलोन्माथजननी त्वमर्थानां मूलं धनदमविनिंद्यांघ्रि-
कमलम् । त्वदादिः कामानां जननि कृतकंदर्पविजये सतां मुक्ते-
र्बीजं त्वमसि परमब्रह्ममहिषी ॥ ८ ॥ प्रभूता भक्तिस्ते यदपि
न ममालोलमनसस्त्वया तु श्रीमत्या सदयमवलोक्योहमधुना ।
पयोदः पानीयं दिशति मधुरं चातकमुखे भृशं शंके कैर्वा
विधिभिरनुनीता मम मतिः ॥ ९ ॥ कृपापांगालोकं वितर त-
रसा साधुचरिते न ते युक्तोपेक्षा मयि शरणदीक्षामुपगते ।
न चेदिष्टं दद्यादुपपदमहो कल्पलतिकाविशेषः सामान्यैः कथ-
मितरवल्लीपरिकरैः ॥ १० ॥ महांतं विश्वासं तव चरणपंकेरुह-
युगे निधायान्यन्नैवाश्रितमिह मया दैवतमुमे । तथापि त्वच्चेतो
यदि मयि न जायेत सदयं निरालंबो लंबोदरजननि कं यामि
शरणं ॥ ११ ॥ अयःस्पर्शे लग्नं सपदि लभते हेमपदवीं यथा
रथ्यापाथः शुचि भवति गंगौघमिलितम् । तथा तत्तत्पापैरति-
मलिनमंतर्मम यदि त्वयि प्रेम्णा सक्तं कथमिव न जायेत वि-
मलम् ॥१२॥ त्वदन्यस्मादिच्छाविषयफललाभेन नियमस्त्वम-
र्थानामिच्छाधिकमपि समर्था वितरणे । इति प्राहुः प्राञ्चः
कमलभवनाद्यास्त्वयि मनस्तदासक्तं नक्तं दिवमुचितमीशानि
कुरु तत् ॥ १३ ॥ स्फुरन्नानारत्नस्फटिकमयभित्तिप्रतिफलत्त्व-

दाकारं चंचच्छशधरशिलासौधशिखरम् । मुकुंदब्रह्मेंद्रप्रभृति
रिवारं विजयते तवागारं रम्यं त्रिभुवनमहाराजगृहिणि ॥१४
निवासः कैलासे विधिशतमखाद्याः स्तुतिकराः कुटुंबं त्रैलो
कृतकरपुटः सिद्धनिकरः । महेशः प्राणेशस्तदवनिधरार्धी
नये न ते सौभाग्यस्य क्वचिदपि मनागस्ति तुलना ॥ १५
वृषो वृद्धो यानं विषमशनमाशानिवसनं स्मशानं क्रीडाभूर्भु
गनिवहो भूषणविधिः । समग्रा सामग्री जगति विदितैव
रिपोर्यदेतस्यैश्वर्यं तव जननि सौभाग्यमहिमा ॥ १६ ॥ अ
पद्मब्रह्मांडप्रलयविधिनैसर्गिकमतिः स्मशानेष्वासीनः कृतभसि
लेपः पशुपतिः । दधौ कंठे हालाहलमखिलभूगोलकृपया भ
त्याः संगत्या फलितमिति कल्याणि कलये ॥ १७ ॥ त
सौंदर्यं निरतिशयमालोक्य परया भियैवासीद्गंगाजलमयत
शैलतनये । नदी तस्यास्ताम्यद्वदनकमलं वीक्ष्य कृपया प्र
ष्ठामातेने निजशिरसि वासेन गिरिशः ॥ १८ ॥ विशाल
डद्रवमृगमदाकीर्णघुसृणप्रसूनव्यामिश्रं भगवति तवाभ्यंग
लिलम् । समादाय स्रष्टा चलितपदपांशून्निजकरैः समाधत्ते
विबुधपुरपंकेरुहदृशाम् ॥१९॥ वसंते सानंदं कुसुमितलता
परिवृते स्फुरन्मानाग्रे वै सरसि कलहंसालिसुगले । सखीभि
खेलंतीं मलयपवनांदोलितजले स्मरेद्यस्त्वां तस्य ज्वरजनितपी
डापसरति ॥ २० ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीम
द्भगवच्छंकराचार्यविरचितानंदलहरी संपूर्णा ॥ ३७ ॥

---



## श्रीमद्भगवद्गीता ॥

॥ गीतामाहात्म्यम् ॥

ॐ परमात्मने नमः ॥ ॥ श्रीराधारमणाय नमः। धरोवाच। भगवन्परमेशान भक्तिरव्यभिचारिणी । प्रारब्धं भुज्यमानस्य कथं भवति हे प्रभो ॥ १ ॥ विष्णुरुवाच । प्रारब्धं भुज्यमानो हि गीताभ्यासरतः सदा । स मुक्तः स सुखी लोके कर्मणा नोपलिप्यते ॥२॥ महापापादिपापानि गीताध्यानं करोति चेत् क्वचित्स्पर्शं न कुर्वंति नलिनीदलमंबुवत् ॥ ३ ॥ गीतायाः पुस्तकं यत्र यत्र पाठः प्रवर्तते । तत्र सर्वाणि तीर्थानि प्रयागादीनि तत्र वै ॥ ४ ॥ सर्वे देवाश्च ऋषयो योगिनः पन्नगाश्च ये । गोपाला गोपिका वापि नारदोद्धवपार्षदैः ॥ ५ ॥ सहायो जायते शीघ्रं यत्र गीता प्रवर्तते । यत्र गीताविचारश्च पठनं पाठनं श्रुतम् । तत्राहं निश्चितं पृथ्वि निवसामि सदैव हि ॥ ६ ॥ गीताश्रयेऽहं तिष्ठामि गीता मे चोत्तमं गृहम् । गीताज्ञानमुपाश्रित्य त्रींल्लोकान्पालयाम्यहम् ॥ ७ ॥ गीता मे परमा विद्या ब्रह्मरूपा न संशयः । अर्धमात्राक्षरा नित्या स्वानिर्वाच्यपदात्मिका ॥ ८ ॥ चिदानंदेन कृष्णेन प्रोक्ता स्वमुखतोऽर्जुनम् । वेदत्रयी परानंदा तत्त्वार्थज्ञानसंयुता ॥ ९ ॥ योऽष्टादशजपो नित्यं नरो निश्चलमानसः । ज्ञानसिद्धिं स लभते ततो याति परं पदम् ॥ १० ॥ पाठेऽसमर्थः संपूर्णे ततोऽर्धं पाठमाचरेत् । तदा गोदानजं पुण्यं लभते नात्र संशयः ॥ ११ ॥ त्रिभागं पठमानस्तु गंगास्नानफलं लभेत् । षडंशं जपमानस्तु सोमयागफलं लभेत् ॥ १२ ॥ एकाध्यायं

तु यो नित्यं पठते भक्तिसंयुतः । रुद्रलोकमवाप्नोति गण
भूत्वा वसेच्चिरम् ॥ १३ ॥ अध्यायं श्लोकपादं वा नित्यं य
पठते नरः । स याति नरतां यावन्मन्वंतरं वसुंधरे ॥ १४ ॥
गीतायाः श्लोकदशकं सप्त पंच चतुष्टयम् । द्वौ त्रीनेकं तद
वा श्लोकानां यः पठेन्नरः ॥ १५ ॥ चंद्रलोकमवाप्नोति वर्षा
णामयुतं ध्रुवम् । गीतापाठसमायुक्तो मृतो मानुषतां व्रजे
॥ १६ ॥ गीताभ्यासं पुनः कृत्वा लभते मुक्तिमुत्तमाम् ।
गीतेत्युच्चारसंयुक्तो म्रियमाणो गतिं लभेत् ॥ १७ ॥ गीता
श्रवणासक्तो महापापयुतोऽपि वा । वैकुंठं समवाप्नोति विष्णुना
सह मोदते ॥ १८ ॥ गीतार्थं ध्यायते नित्यं कृत्वा कर्माणि
भूरिशः । जीवन्मुक्तः स विज्ञेयो देहांते परमं पदम् ॥ १९ ॥
गीतामाश्रित्य बहवो भूभुजो जनकादयः । निर्धूतकल्मषा
लोके गीता याताः परं पदम् ॥ २० ॥ गीतायाः पठनं कृत्वा
माहात्म्यं नैव यः पठेत् । वृथा पाठो भवेत्तस्य श्रम एव ह्युदा
हृतः ॥ २१ ॥ एतन्माहात्म्यसंयुक्तं गीताभ्यासं करोति यः ।
स तत्फलमवाप्नोति दुर्लभां गतिमाप्नुयात् ॥ २२ ॥ सूत
उवाच । माहात्म्यमेतद्गीताया मया प्रोक्तं सनातनम् ।
गीतान्ते च पठेद्यस्तु यदुक्तं तत्फलं लभेत् ॥ २३ ॥ इति
श्रीवाराहपुराणे श्रीगीतामाहात्म्यं संपूर्णम् ॥

---

॥ श्रीमद्भगवद्गीता ॥

ॐ परमात्मने नमः ॥ श्रीगोपालकृष्णाय नमः ॥ ॐ अ
श्रीभगवद्गीतामालामंत्रस्य भगवान्वेदव्यास ऋषिः । अनु
छंदः । श्रीकृष्णः परमात्मा देवता । अशोच्यानन्वशोच

प्रज्ञावादांश्च भाषसे इति बीजम् । सर्वधर्मान्परित्यज्य मामेकं
शरणं व्रजेति शक्तिः । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि
मा शुच इति कीलकम् । नैनं छिंदंति शस्त्राणि नैनं दहति
पावक इत्यंगुष्ठाभ्यां नमः । न चैनं क्लेदयंत्यापो न शोषयति
मारुत इति तर्जनीभ्यां नमः । अच्छेद्योऽयमदाह्योऽयमक्लेद्यो-
ऽशोष्य एव चेति मध्यमाभ्यां नमः । नित्यः सर्वगतः स्थाणु-
रचलोऽयं सनातन इत्यनामिकाभ्यां नमः । पश्य मे पार्थ
रूपाणि शतशोऽथ सहस्रश इति कनिष्ठिकाभ्यां नमः । नाना-
विधानि दिव्यानि नानावर्णाकृतीनि चेति करतलकरपृष्ठाभ्यां
नमः । इति करन्यासः । अथ हृदयादिन्यासः । नैनं छिंदंति
शस्त्राणि नैनं दहति पावक इति हृदयाय नमः । न चैनं
क्लेदयंत्यापो न शोषयति मारुत इति शिरसे स्वाहा । अच्छे-
द्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव चेति शिखायै वषट् ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातन इति कवचाय हुम् ।
पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रश इति नेत्रत्रयाय
वौषट् । नानाविधानि दिव्यानि नानावर्णाकृतीनि चेति
अस्त्राय फट् ॥ श्रीकृष्णप्रीत्यर्थे पाठे विनियोगः ॥ ॐ पार्थाय
प्रतिबोधितां भगवता नारायणेन स्वयं व्यासेन ग्रथितां पुरा-
णमुनिना मध्येमहाभारतम् । अद्वैतामृतवर्षिणीं भगवतीमष्टा-
दशाध्यायिनीमंब त्वामनुसंदधामि भगवद्गीते भवद्वेषिणीम्
॥ १ ॥ नमोऽस्तु ते व्यास विशालबुद्धे फुल्लारविंदायतपत्र-
नेत्र । येन त्वया भारततैलपूर्णः प्रज्वालितो ज्ञानमयः प्रदीपः
॥ २ ॥ प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये । ज्ञानमुद्राय
कृष्णाय गीतामृतदुहे नमः ॥ ३ ॥ सर्वोपनिषदो गावो दोग्धा

गोपालनंदनः । पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीता
महत् ॥ ४ ॥ वसुदेवसुतं देवं कंसचाणूरमर्दनम् । देवकी
मानंदं कृष्णं वंदे जगद्गुरुम् ॥ ५ ॥ भीष्मद्रोणतटा जय
जला गांधारनीलोत्पला शल्यग्राहवती कृपेण वहनी क
वेलाकुला । अश्वत्थामविकर्णघोरमकरा दुर्योधनावर्ति
सोत्तीर्णा खलु पांडवै रणनदी कैवर्तकः केशवः ॥ ६ ॥ पा
शर्यवचःसरोजममलं गीतार्थगंधोत्कटं नानाख्यानक
हरिकथासंबोधनाबोधितम् । लोके सज्जनषट्पदैरहरहः पे
थमानं मुदा भूयाद्भारतपङ्कजं कलिमलप्रध्वंसि नः श्रेयसे ॥
मूकं करोति वाचालं पंगुं लंघयते गिरिम् । यत्कृपा त
वंदे परमानंदमाधवम् ॥ ८ ॥ यं ब्रह्मावरुणेंद्ररुद्रमरुतस्तु
दिव्यैः स्तवैर्वेदैः सांगपदक्रमोपनिषदैर्गायंति यं सामगा
ध्यानावस्थिततद्गतेन मनसा पश्यंति यं योगिनो यस्यां
विदुः सुरासुरगणा देवाय तस्मै नमः ॥ ९ ॥ इति ध्यानम्

---

धृतराष्ट्र उवाच ॥ धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः
मामकाः पांडवाश्चैव किमकुर्वत संजय ॥१॥ संजय उवाच
दृष्ट्वा तु पांडवानीकं व्यूढं दुर्योधनस्तदा । आचार्यमुपसंग
राजा वचनमब्रवीत् ॥ २ ॥ पश्यैतां पांडुपुत्राणामाचार्य मह
चमूम् । व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥
शूरा महेष्वासा भीमार्जुनसमा युधि । युयुधानो विरा
द्रुपदश्च महारथः ॥ ४ ॥ धृष्टकेतुश्चेकितानः काशिरा
वीर्यवान् । पुरुजित्कुंतिभोजश्च शैब्यश्च नरपुंगवः ॥
युधामन्युश्च विक्रांत उत्तमौजाश्च वीर्यवान् । सौभद्रो द्रौपदे

सर्व एव महारथाः ॥ ६ ॥ अस्माकं तु विशिष्टा ये तान्निबोध
द्विजोत्तम । नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥
भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः । अश्वत्थामा विक-
र्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥ अन्ये च बहवः शूरा मदर्थे
त्यक्तजीविताः । नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् । पर्याप्तं त्विदमे
तेषां बलं भीमाभिरक्षितम् ॥ १० ॥ अयनेषु च सर्वेषु
यथाभागमवस्थिताः । भीष्ममेवाभिरक्षंतु भवंतः सर्व एव
हि ॥ ११ ॥ तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शंखं दध्मौ प्रतापवान् ॥ १२ ॥ ततः
शंखाश्च भेर्यश्च पणवानकगोमुखाः । सहसैवाभ्यहन्यंत स
शब्दस्तुमुलोऽभवत् ॥ १३ ॥ ततः श्वेतैर्हयैर्युक्ते महति स्यंदने
स्थितौ । माधवः पांडवश्चैव दिव्यौ शंखौ प्रदध्मतुः ॥ १४ ॥
पांचजन्यं हृषीकेशो देवदत्तं धनंजयः । पौंड्रं दध्मौ महाशंखं
भीमकर्मा वृकोदरः ॥ १५ ॥ अनंतविजयं राजा कुंतीपुत्रो
युधिष्ठिरः । नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥
काश्यश्च परमेष्वासः शिखंडी च महारथः । धृष्टद्युम्नो विरा-
टश्च सात्यकिश्चापराजितः ॥ १७ ॥ द्रुपदो द्रौपदेयाश्च सर्वशः
पृथिवीपते । सौभद्रश्च महाबाहुः शंखान्दध्मुः पृथक्पृथक् ॥ १८ ॥
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् । नभश्च पृथिवीं
चैव तुमुलो व्यनुनादयन् ॥ १९ ॥ अथ व्यवस्थितान्दृष्ट्वा
धार्तराष्ट्रान्कपिध्वजः । प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पांडवः
॥ २० ॥ हृषीकेशं तदा वाक्यमिदमाह महीपते । अर्जुन
उवाच ॥ सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥

यावदेतान्निरीक्ष्येऽहं योद्धुकामानवस्थितान् । कैर्मया
योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥ योत्स्यमानानवेक्षे
एतेऽत्र समागताः ॥ धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकी
॥ २३ ॥ संजय उवाच ॥ एवमुक्तो हृषीकेशो गुडाके
भारत । सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् । उवाच
पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥ तत्रापश्यत्स्थितान्
पितॄनथ पितामहान् । आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रा
न्खींस्तथा ॥ २६ ॥ श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ।
न्समीक्ष्य स कौंतेयः सर्वान्बंधूनवस्थितान् ॥ २७ ॥
परयाविष्टो विषीदन्निदमब्रवीत् ॥ अर्जुन उवाच ॥
स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८ ॥ सीदंति
गात्राणि मुखं च परिशुष्यति । वेपथुश्च शरीरे मे रोमह
जायते ॥ २९ ॥ गांडीवं स्रंसते हस्तात्त्वक्चैव परिदह्य
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३० ॥
त्तानि च पश्यामि विपरीतानि केशव । न च श्रेयोऽनुप
मि हत्वा स्वजनमाहवे ॥ ३१ ॥ न कांक्षे विजयं कृष्ण
राज्यं सुखानि च । किं नो राज्येन गोविंद किं भोगै
तेन वा ॥ ३२ ॥ येषामर्थे कांक्षितं नो राज्यं भोगाः सुख
च । त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः । मातु
श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥ ३४ ॥ ए
हंतुमिच्छामि घ्नतोऽपि मधुसूदन । अपि त्रैलोक्यरा
हेतोः किं नु महीकृते ॥ ३५ ॥ निहत्य धार्तराष्ट्रान्

प्रीतिः स्याज्जनार्दन । पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः
॥ ३६ ॥ तस्मान्नार्हा वयं हंतुं धार्तराष्ट्रान्स्वबांधवान् । स्वजनं
हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥ यद्यप्येते न
पश्यंति लोभोपहतचेतसः । कुलक्षयकृतं दोषं मित्रद्रोहे च
पातकम् ॥ ३८ ॥ कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम्
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥ कुलक्षये प्रण-
श्यन्ति कुलधर्माः सनातनाः । धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभि-
भवत्युत ॥ ४० ॥ अधर्माभिभवात्कृष्ण प्रदुष्यंति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥ संकरो
नरकायैव कुलघ्नानां कुलस्य च । पतंति पितरो ह्येषां लुप्तपिं-
डोदकक्रियाः ॥ ४२ ॥ दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यंते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३ ॥ उत्सन्न-
कुलधर्माणां मनुष्याणां जनार्दन । नरके नियतं वासो भवती-
त्यनुशुश्रुम ॥ ४४ ॥ अहो बत महत्पापं कर्तुं व्यवसिता
वयम् । यद्राज्यसुखलोभेन हंतुं स्वजनमुद्यताः ॥ ४५ ॥ यदि
मामप्रतीकारमशस्त्रं शस्त्रपाणयः । धार्तराष्ट्रा रणे हन्युस्तन्मे
क्षेमतरं भवेत् ॥ ४६ ॥ संजय उवाच ॥ एवमुक्त्वाऽर्जुनः
संख्ये रथोपस्थ उपाविशत् । विसृज्य सशरं चापं शोकसंवि-
ग्नमानसः ॥ ४७ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मवि-
द्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽर्जुनविषादयोगो नाम
प्रथमोध्यायः ॥ १ ॥

॥ संजय उवाच ॥ तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्ष-
णम् । विषीदंतमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥ श्रीभ-
गवानुवाच ॥ कुतस्त्वा कश्मलमिदं विषमे समुप स्थि

अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥ क्लैब्यं मा स्म
पार्थ नैतत्त्वय्युपपद्यते । क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परं
॥ ३ ॥ अर्जुन उवाच ॥ कथं भीष्ममहं संख्ये द्रोणं
मधुसूदन । इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥
गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके
हत्वार्थकामांस्तु गुरूनिहैव भुंजीय भोगान्रुधिरप्रदिग्धान् ॥
न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः
यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः
॥ ६ ॥ कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचे
ताः । यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां
त्वां प्रपन्नम् ॥ ७ ॥ न हि प्रपश्यामि ममापनुद्याद् यच्छोक
मुच्छोषणमिंद्रियाणाम् । अवाप्य भूमावसपत्नमृद्धं राज्यं सुरा
णामपि चाधिपत्यम् ॥ ८ ॥ संजय उवाच ॥ एवमुक्त्वा
हृषीकेशं गुडाकेशः परंतप । न योत्स्य इति गोविंदमुक्त्वा
तूष्णीं बभूव ह ॥ ९ ॥ तमुवाच हृषीकेशः प्रहसन्निव भारत
सेनयोरुभयोर्मध्ये विषीदंतमिदं वचः ॥ १० ॥ श्रीभगवा
नुवाच ॥ अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे । गता
सूनगतासूंश्च नानुशोचंति पंडिताः ॥ ११ ॥ न त्वेवाहं जातु
नासं न त्वं नेमे जनाधिपाः । न चैव न भविष्यामः सर्वे
वयमतः परम् ॥ १२ ॥ देहिनोऽस्मिन्यथा देहे कौमारं यौवनं
जरा । तथा देहांतरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥ मात्रा
स्पर्शास्तु कौंतेय शीतोष्णसुखदुःखदाः । आगमापायिनोऽनि
त्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥ यं हि न व्यथयंत्येते पुरुषं
पुरुषर्षभ । समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि
दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥ अविनाशि तु तद्विद्धि
येन सर्वमिदं ततम् ॥ विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति
॥ १७ ॥ अंतवंत इमे देहा नित्यस्योक्ताः शरीरिणः । अना-
शिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥ य एनं वेत्ति
हंतारं यश्चैनं मन्यते हतम् । उभौ तौ न विजानीतो नायं
हंति न हन्यते ॥ १९ ॥ न जायते म्रियते वा कदाचिन्नायं
भूत्वा भविता वा न भूयः । अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २० ॥ वेदाविनाशिनं नित्यं य
एनमजमव्ययम् । कथं स पुरुषः पार्थ कं घातयति हंति कम्
॥ २१ ॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति
नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति
नवानि देही ॥ २२ ॥ नैनं छिंदंति शस्त्राणि नैनं दहति
पावकः । न चैनं क्लेदयंत्यापो न शोषयति मारुतः ॥ २३ ॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च । नित्यः सर्वगतः
स्थाणुरचलोऽयं सनातनः ॥ २४ ॥ अव्यक्तोऽयमचिंत्योऽयम-
विकार्योऽयमुच्यते । तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि
॥ २५ ॥ अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ॥
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६ ॥ जातस्य हि
ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च । तस्मादपरिहार्येऽर्थे न त्वं
शोचितुमर्हसि ॥ २७ ॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि
भारत । अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥
आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः । आश्च-
र्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत । तस्मात्सर्वाणि भू
न त्वं शोचितुमर्हसि ॥ ३० ॥ स्वधर्ममपि चावेक्ष्य न वि
पितुमर्हसि । धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते॥३
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् । सुखिनः क्षत्रि
पार्थ लभंते युद्धमीदृशम् ॥ ३२ ॥ अथ चेत्त्वमिमं ध
संग्रामं न करिष्यसि । ततः स्वधर्मं कीर्तिं च हित्वा पाप
प्स्यसि ॥३३॥ अकीर्तिं चापि भूतानि कथयिष्यंति तेऽव्यय
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥ भयाद्र
परतं मंस्यंते त्वां महारथाः । येषां च त्वं बहुमतो भूत्वा यास्
लाघवम् ॥ ३५ ॥ अवाच्यवादांश्च बहून्वदिष्यंति तवाहिता
निंदतस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥ हतो
प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् । तस्मादुत्तिष्ठ कौ
युद्धाय कृतनिश्चयः ॥ ३७ ॥ सुखदुःखे समे कृत्वा लाभाला
जयाजयौ । ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३
एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु । बुद्ध्या यु
यया पार्थ कर्मबंधं प्रहास्यसि ॥ ३९ ॥ नेहाभिक्रमनाशो
प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते मह
भयात् ॥ ४० ॥ व्यवसायात्मिका बुद्धिरेकेह कुरुनंदन । ब
शाखाह्यनंताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥ यामि
पुष्पितां वाचं प्रवदंत्यविपश्चितः । वेदवादरताः पार्थ नान्य
स्तीति वादिनः ॥ ४२ ॥ कामात्मानः स्वर्गपरा जन्मकर्मफ
प्रदाम् । क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३
भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् । व्यवसायात्मिका बु
समाधौ न विधीयते ॥ ४४ ॥ त्रैगुण्यविषया वेदा निस्त्रैगु

भवार्जुन । निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्॥४५॥
यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्म-
णस्य विजानतः ॥ ४६ ॥ कर्मण्येवाधिकारस्ते मा फलेषु कदा-
चन । मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥ ४७ ॥
योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय । सिद्ध्यसिद्ध्योः
समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥ दूरेण ह्यवरं कर्म
बुद्धियोगाद्धनंजय । बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः
॥ ४९ ॥ बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते । तस्माद्योगाय
युज्यस्व योगः कर्मसु कौशलम् ॥५०॥ कर्मजं बुद्धियुक्ता हि फलं
त्यक्त्वा मनीषिणः । जन्मबंधविनिर्मुक्ताः पदं गच्छंत्यनामयम्
॥५१॥ यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गंतासि
निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥ श्रुतिविप्रतिपन्ना ते यदा
स्थास्यति निश्चला । समाधावचला बुद्धिस्तदा योगमवाप्स्यसि
॥५३॥ अर्जुन उवाच ॥ स्थितप्रज्ञस्य का भाषा समाधिस्थस्य
केशव । स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥
श्रीभगवानुवाच ॥ प्रजहाति यदा कामान्सर्वान्पार्थ मनो-
गतान् । आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः
स्थितधीर्मुनिरुच्यते ॥ ५६ ॥ यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य
शुभाशुभम् । नाभिनंदति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥
यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः । इंद्रियाणींद्रियार्थे-
भ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥ विषया विनिवर्तंते निरा-
हारस्य देहिनः । रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥५९॥
यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः । इंद्रियाणि प्रमाथीनि

हरंति प्रसभं मनः ॥ ६० ॥ तानि सर्वाणि संयम्य यु
आसीत मत्परः । वशे हि यस्येंद्रियाणि तस्य प्रज्ञा प्रतिष्ठि
॥ ६१ ॥ ध्यायतो विषयान्पुंसः संगस्तेषूपजायते । संगा
जायते कामः कामात्क्रोधोऽभिजायते ॥ ६२ ॥ क्रोधाद्भ
संमोहः संमोहात्स्मृतिविभ्रमः । स्मृतिभ्रंशाद्बुद्धिना
बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥ रागद्वेषवियुक्तैस्तु विषया
द्रियैश्चरन् । आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४
प्रसादे सर्वदुःखानां हानिरस्योपजायते । प्रसन्नचेतसो ह्या
बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥ नास्ति बुद्धिरयुक्तस्य न चायुक्त
भावना । न चाभावयतः शांतिरशांतस्य कुतः सुखम् ॥ ६६
इंद्रियाणां हि चरतां यन्मनोऽनुविधीयते । तदस्य हरति प्र
वायुर्नावमिवांभसि ॥ ६७ ॥ तस्माद्यस्य महाबाहो निगृहीता
सर्वशः । इंद्रियाणींद्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८
या निशा सर्वभूतनां तस्यां जागर्ति संयमी । यस्यां जाग्र
भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥ आपूर्यमाणमच
प्रतिष्ठं समुद्रमापः प्रविशंति यद्वत् । तद्वत्कामा यं प्रविश
सर्वे स शांतिमाप्नोति न कामकामी ॥७०॥ विहाय कामा
सर्वान्पुमांश्चरति निःस्पृहः । निर्ममो निरहंकारः स शांति
धिगच्छति ॥ ७१ ॥ एषा ब्राह्मी स्थितिः पार्थ नैनां प्रा
विमुह्यति । स्थित्वास्यामंतकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥७
इति श्रीम० सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥
अर्जुन उवाच ॥ ज्यायसी चेत्कर्मणस्ते मता बुद्धि
नार्दन । तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे । तदेकं वद निश्चि

येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥ श्रीभगवानुवाच ॥ लोके-
ऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ । ज्ञानयोगेन सां-
ख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥ न कर्मणामनारंभान्नै-
ष्कर्म्यं पुरुषोऽश्नुते । न च संन्यसनादेव सिद्धिं समधिगच्छति
॥ ४ ॥ न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् । कार्यते
ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥ कर्मेंद्रियाणि संयम्य
य आस्ते मनसा स्मरन् । इंद्रियार्थान्विमूढात्मा मिथ्याचारः
स उच्यते ॥ ६ ॥ यस्त्विंद्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेंद्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥ नियतं कुरु
कर्म त्वं कर्म ज्यायो ह्यकर्मणः । शरीरयात्रापि च ते न प्रसि-
द्ध्येदकर्मणः ॥ ८ ॥ यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबंधनः ।
तदर्थं कर्म कौंतेय मुक्तसंगः समाचर ॥ ९ ॥ सहयज्ञाः प्रजाः
सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्ट-
कामधुक् ॥ १० ॥ देवान्भावयतानेन ते देवा भावयंतु वः ।
परस्परं भावयंतः श्रेयः परमवाप्स्यथ ॥ ११ ॥ इष्टान्भोगान्हि
वो देवा दास्यंते यज्ञभाविताः । तैर्दत्तानप्रदायैभ्यो यो भुंक्ते
स्तेन एव सः ॥ १२ ॥ यज्ञशिष्टाशिनः संतो मुच्यंते सर्वकि-
ल्बिषैः । भुंजते ते त्वघं पापा ये पचंत्यात्मकारणात् ॥ १३ ॥
अन्नाद्भवंति भूतानि पर्जन्यादन्नसंभवः । यज्ञाद्भवति पर्जन्यो
यज्ञः कर्मसमुद्भवः ॥ १४ ॥ कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरस-
मुद्भवम् । तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः । अघायुरिंद्रियारामो
मोघं पार्थ स जीवति ॥ १६ ॥ यस्त्वात्मरतिरेव स्यादात्मतृ-
प्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते॥१७॥

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन । न चास्य सर्वभूते
कश्चिदर्थव्यपाश्रयः ॥ १८ ॥ तस्मादसक्तः सततं कार्यं क
समाचर । असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९
कर्मणैव हि संसिद्धिमास्थिता जनकादयः । लोकसंग्रहमेवा
संपश्यन्कर्तुमर्हसि ॥ २० ॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेत
जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥ न
पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन । नानवाप्तमवाप्तव्यं व
एव च कर्मणि ॥ २२ ॥ यदि ह्यहं न वर्तेयं जातु कर्मण्य
द्रितः । मम वर्त्मानुवर्तंते मनुष्याः पार्थ सर्वशः ॥ २३
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् । संकरस्य च क
स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥ सक्ताः कर्मण्यविद्वां
यथा कुर्वंति भारत । कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रह
॥ २५ ॥ न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् । जोषयेत्स
र्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥ प्रकृतेः क्रियमा
णानि गुणैः कर्माणि सर्वशः । अहंकारविमूढात्मा कर्ताहमिति
मन्यते ॥२७॥ तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः । गुणा
गुणेषु वर्तन्ते इति मत्वा न सज्जते ॥ २८ ॥ प्रकृतेर्गुणसंमूढाः
सज्जंते गुणकर्मसु । तानकृत्स्नविदो मंदान्कृत्स्नविन्न विचालये
॥ २९ ॥ मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा । निरा
शीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥ ये मे मतमिदं
नित्यमनुतिष्ठंति मानवाः । श्रद्धावंतोऽनसूयंतो मुच्यंते तेऽपि
कर्मभिः ॥ ३१ ॥ ये त्वेतदभ्यसूयंतो नानुतिष्ठंति मे मतम्
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥ सदृशं चेष्ट
स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं यांति भूतानि निग्रहः कि

करिष्यति ॥ ३३ ॥ इंद्रियस्येंद्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपंथिनौ ॥ ३४ ॥ श्रेयान्स्व-
धर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः
परधर्मो भयावहः ॥ ३५ ॥ अर्जुन उवाच । अथ केन प्रयु-
क्तोऽयं पापं चरति पूरुषः । अनिच्छन्नपि वार्ष्णेय बलादिव
नियोजितः ॥ ३६ ॥ श्रीभगवानुवाच ॥ काम एष क्रोध
एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरि-
णम् ॥ ३७ ॥ धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च । यथो-
ल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥ आवृतं ज्ञानमेतेन
ज्ञानिनो नित्यवैरिणा । कामरूपेण कौंतेय दुष्पूरेणानलेन च
॥ ३९ ॥ इंद्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते । एतैर्विमो-
हयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥ तस्मात्त्वमिंद्रियाण्यादौ
नियम्य भरतर्षभ । पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्
॥ ४१ ॥ इंद्रियाणि पराण्याहुरिंद्रियेभ्यः परं मनः । मनसस्तु
परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥ एवं बुद्धेः परं बुद्ध्वा
संस्तभ्यात्मानमात्मना । जहि शत्रुं महाबाहो कामरूपं दुरास-
दम् ॥ ४३ ॥ इति श्रीमद्भगवद्गीतासूप० कर्मयोगो नाम
तृतीयोऽध्यायः ॥ ३ ॥

श्रीभगवानुवाच ॥ इमं विवस्वते योगं प्रोक्तवानहमव्य-
यम् । विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥१॥ एवं परंप-
राप्राप्तमिमं राजर्षयो विदुः । स कालेनेह महता योगो नष्टः
परंतप ॥ २ ॥ स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥ अर्जुन
उवाच । अपरं भवतो जन्म परं जन्म विवस्वतः । कथमेत-

द्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥ श्रीभगवा
वाच । वहूनि मे व्यतीतानि जन्मानि तव चार्जुन । तान्
वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥ अजोऽपि सन्नव्यया
भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्या
मायया ॥ ६ ॥ यदा यदा हि धर्मस्य ग्लानिर्भवति भारत
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ७ ॥ परित्रा
णाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्था
संभवामि युगे युगे ॥ ८ ॥ जन्म कर्म च मे दिव्यमेवं
वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जु
॥ ९ ॥ वीतरागभयक्रोधा मन्मया मामुपाश्रिताः । बहवो
ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥ ये यथा मां प्रप
तांस्तथैव भजाम्यहम् । मम वर्त्मानुवर्तंते मनुष्याः पार्थ सर्व
॥ ११ ॥ कांक्षंतः कर्मणां सिद्धिं यजंत इह देवताः । क्षि
हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥ चातुर्वर्ण्यं म
सृष्टं गुणकर्मविभागशः । तस्य कर्तारमपि मां विद्ध्यकर्तार
व्ययम् ॥ १३ ॥ न मां कर्माणि लिंपंति न मे कर्मफले स्पृहा
इति मां योऽभिजानाति कर्मभिर्न स वध्यते ॥ १४ ॥ ए
ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः । कुरु कर्मैव तस्मात्त्वं पू
पूर्वतरं कृतम् ॥ १५ ॥ किं कर्म किमकर्मेति कवयोऽप्य
मोहिताः । तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभा
॥ १६ ॥ कर्मणो ह्यपि वोद्धव्यं वोद्धव्यं च विकर्मणः । अक
र्मणश्च वोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥ कर्मण्यकर्म यः
पश्येदकर्मणि च कर्म यः । स बुद्धिमान्मनुष्येषु स युक्तः
कृत्स्नकर्मकृत् ॥ १८ ॥ यस्य सर्वे समारंभाः कामसंकल्प

जिताः । ज्ञानाग्निदग्धकर्माणं तमाहुः पंडितं बुधाः ॥ १९ ॥ त्यक्त्वा कर्मफलासंगं नित्यतृप्तो निराश्रयः । कर्मण्यभिप्रवृत्तो-ऽपि नैव किंचित्करोति सः ॥ २० ॥ निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥ यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सरः । समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२ ॥ गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः । यज्ञायाचरतः कर्म समग्रं प्रवि-लीयते ॥ २३ ॥ ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥ दैवमेवापरे यज्ञं योगिनः पर्युपासते । ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥ श्रोत्रादीनींद्रियाण्यन्ये संयमाग्निषु जुह्वति । शब्दा-दीन्विषयानन्य इंद्रियाग्निषु जुह्वति ॥ २६ ॥ सर्वाणींद्रियक-र्माणि प्राणकर्माणि चापरे । आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदी-पिते ॥ २७ ॥ द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे । स्वाध्या-यज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥ अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे । प्राणापानगती रुद्ध्वा प्राणायामप-रायणाः ॥ २९ ॥ अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति । सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥ यज्ञशिष्टामृ-तभुजो यांति ब्रह्म सनातनम् । नायं लोकोऽस्त्ययज्ञस्य कुतो-ऽन्यः कुरुसत्तम ॥ ३१ ॥ एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे । कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥ श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप । सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पांडव ॥ येन भूतान्यशे
द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥ अपि चेदसि पापेभ्यः सर्वे
पापकृत्तमः । सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६
यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः स
र्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥ नहि ज्ञानेन सदृशं प
त्रमिह विद्यते । तत्स्वयं योगसंसिद्धः कालेनात्मनि विं
॥ ३८ ॥ श्रद्धावांल्लभते ज्ञानं तत्परः संयतेंद्रियः । ज्ञा
लब्ध्वा परां शांतिमचिरेणाधिगच्छति ॥ ३९ ॥ अज्ञश्चा
धानश्च संशयात्मा विनश्यति । नायं लोकोऽस्ति न परो
सुखं संशयात्मनः ॥ ४० ॥ योगसंन्यस्तकर्माणं ज्ञानसंछि
संशयम् । आत्मवंतं न कर्माणि निबध्नंति धनंजय ॥ ४१
तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः । छित्त्वैनं सं
योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥ इति श्रीमद्भग० ज्ञान
ज्ञानयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

अर्जुन उवाच ॥ संन्यासं कर्मणां कृष्ण पुनर्योगं
शंससि । यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १
श्रीभगवानुवाच ॥ संन्यासः कर्मयोगश्च निःश्रेयसक
वुभौ । तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २
ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न कांक्षति । निर्द्वं
महाबाहो सुखं बंधात्प्रमुच्यते ॥ ३ ॥ सांख्ययोगौ पृथग्बा
प्रवदंति न पंडिताः । एकमप्यास्थितः सम्यगुभयोर्विंदते फ
॥ ४ ॥ यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥ संन्यास
महाबाहो दुःखमाप्तुमयोगतः । योगयुक्तो मुनिर्ब्रह्म न

लुप्तस्य कोऽर्थः संप्रतिपद्यते ॥ ७ ॥ गच्छँस्तिष्ठन् सदाकालं वायुस्वीकरणं परम् । सर्वकालप्रयोगेण सहस्रायुर्भवेन्नरः॥८॥ यावत्पश्येत् खगाकारं तदाकारं विचिन्तयेत् । खमध्ये कुरु चात्मानमात्ममध्ये च खं कुरु ॥ ९ ॥ आत्मानं खमयं कृत्वा न किंचिदपि चिन्तयेत् ॥ १० ॥ स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः । बहिर्व्योम स्थितं नित्यं नासाग्रे च व्यवस्थितम् । निष्कलं तं विजानीयाच्छ्वासो यत्र लयं गतः ॥ ११ ॥ पुटद्वयविनिर्मुक्तो वायुर्यत्र विलीयते । तत्र संस्थं मनः कृत्वा तं ध्यायेत्पार्थ ईश्वरम् ॥ १२ ॥ निष्कलं तं विजानीयात्षड्-र्मिरहितं शिवम् ॥ १३ ॥ प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् । सर्वशून्यं निराभासं समाधिस्थस्य लक्षणम् । त्रिशून्यं यो विजानीयात्स तु मुच्येत बन्धनात् ॥ १४ ॥ स्वयमुच्चलिते देहे देही न्यस्तसमाधिना । निश्चलं तं विजानीयात्समाधिस्थस्य लक्षणम् ॥ १५ ॥ अमात्रं शब्दरहितं स्वरव्यञ्जनवर्जितम् । बिन्दुनादकलातीतं यस्तं वेद स वेदवित् ॥१६॥ [illegible] ज्ञानेन [illegible]ज्ञाने ज्ञेये च हृदि संस्थिते । लब्धशान्तिपदे देहे न योगो नैव धारणा ॥ १७ ॥ यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥ १८ ॥ नावार्थी तु भवेत्तावद्यावत्पारं न गच्छति । उत्तीर्णे तु सरित्पारे नावया किं प्रयोजनम् ॥ १९ ॥ ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः । पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ २० ॥ उल्काहस्तो यथाकालं द्रव्यमालोक्य तां त्यजेत् । ज्ञानेन ज्ञेयमालोक्य ज्ञानं पश्चात्परित्यजेत् ॥ २१ ॥ यथाऽमृतेन तृप्तस्य पयसा किं प्रयोजनम् । एवं तं

परमं ज्ञात्वा वेदैर्नास्ति प्रयोजनम् ॥ २२ ॥ ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः । न चास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ॥ २३ ॥ तैलधारमिवाच्छिन्नं दीर्घघण्टानिनादवत् । अवाच्यं प्रणवस्याग्रं यस्तं वेद स वेदवित् ॥ २४ ॥ आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥ २५ ॥ तादृशं परमं रूपं स्मरेत्पार्थ ह्यनन्यधीः । विधूमाग्निनिभं देवं पश्येदत्यन्तनिर्मलम् ॥ २६ ॥ दूरस्थोऽपि न दूरस्थः पिण्डस्थः पिण्डवर्जितः । विमलः सर्वदा देही सर्वव्यापी निरञ्जनः ॥ २७ ॥ कायस्थोऽपि न कायस्थः कायस्थोऽपि न जायते । कायस्थोऽपि न भुञ्जानः कायस्थोऽपि न बध्यते । कायस्थोऽपि न लिप्तः स्यात् कायस्थोऽपि न बाध्यते ॥२८॥ तिलमध्ये यथा तैलं क्षीरमध्ये यथा घृतम् । पुष्पमध्ये यथा गन्धः फलमध्ये यथा रसः ॥ २९ ॥ काष्ठाग्निवत्प्रकाशेत आकाशे वायुवच्चरेत् ॥ ३० ॥ तथा सर्वगतो देही देहमध्ये व्यवस्थितः॥३१॥ मनःस्थो देहिनां देवो मनोमध्ये व्यवस्थितः । मनःस्थं मनमध्यस्थं मध्यस्थं मनवर्जितम् । मनसा मन आलोक्य स्वयं सिध्यन्ति योगिनः ॥ ३२ ॥ आकाशं मानसं कृत्वा मनः कृत्वा निरास्पदम् । निश्चलत्वं विजानीयात्समाधिस्थस्य लक्षणम् ॥ ३३ ॥ योगामृतरसं पीत्वा वायुभक्षः सदा सुखी । यमभ्यसते नित्यं समाधिर्मृत्युनाशकः ॥ ३४ ॥ ऊर्ध्वशून्यमधःशून्यं मध्यशून्यं यदात्मकम् । सर्वशून्यं स आत्मेति समाधिस्थस्य लक्षणम् ॥ ३५ ॥ शून्यभावितभावात्मा पुण्यपापैः प्रमुच्यते ॥ ३६ ॥ अर्जुन उवाच ॥ अदृश्ये भावना नास्ति दृश्यमेतद्विनश्यति । अवर्णमस्वरं ब्रह्म कथं ध्यायन्ति योगिनः

ब्रह्म: अध्यात्म विचार



॥ ३७ ॥ श्रीभगवानुवाच ॥ ऊर्ध्वपूर्णमधःपूर्णं मध्यपूर्णं यदात्मकम् । सर्वपूर्णं स आत्मेति समाधिस्थस्य लक्षणम् ॥ ३८ ॥ अर्जुन उवाच ॥ सालम्बस्याप्यनित्यत्वं निरालम्बस्य शून्यता । उभयोरपि दोषत्वात्कथं ध्यायन्ति योगिनः ॥ ३९ ॥ श्रीभगवानुवाच ॥ हृदयं निर्मलं कृत्वा चिन्तयित्वाप्यनामयम् । अहमेव इदं सर्वमिति पश्येत्परं सुखी ॥४०॥ अर्जुन उवाच ॥ अक्षराणि समात्राणि सर्वे विन्दुसमाश्रिताः । विन्दुर्भिद्यति नादेन स नादः केन भिद्यते ॥ ४१ ॥ श्रीभगवानुवाच ॥ अनाहतस्य शब्दस्य तस्य शब्दस्य यो ध्वनिः । ध्वनेरन्तर्गतं ज्योतिर्ज्योतिरन्तर्गतं मनः ॥ ४२ ॥ तन्मनो विलयं याति तद्विष्णोः परमं पदम् ॥ ओङ्कारध्वनिनादेन वायोः संहरणान्तिकम् । निरालम्बं समुद्दिश्य यत्र नादो लयं गतः ॥ ४३ ॥ अर्जुन उवाच ॥ भिन्ने पञ्चात्मके देहे गते पञ्चसु पञ्चधा । प्राणैर्विमुक्ते देहे तु धर्माधर्मौ क्व गच्छतः ॥ ४४ ॥ श्रीभगवानुवाच ॥ धर्माधर्मौ मनश्चैव पञ्चभूतानि यानि च । इन्द्रियाणि च पञ्चैव याश्चान्याः पञ्चदेवताः ॥ ४५ ॥ ताश्चैव मनसा सर्वे नित्यमेवाभिमानतः । जीवेन सह गच्छन्ति यावत्तत्त्वं न विन्दति ॥ ४६ ॥ अर्जुन उवाच ॥ स्थावरं जङ्गमं चैव यत्किंचित्सचराचरम् । जीवा जीवेन सिध्यन्ति स जीवः केन सिध्यति ॥ ४७ ॥ श्रीभगवानुवाच ॥ मुखनासिकयोर्मध्ये प्राणः संचरते सदा । आकाशः पिबते प्राणं स जीवः केन जीवति ॥ ४८ ॥ अर्जुन उवाच ॥ ब्रह्माण्डव्यापितं व्योम व्योम्ना चावेष्टितं जगत् । अन्तर्बहिश्च तद्व्योम कथं देवो निरञ्जनः ॥ ४९ ॥ श्रीभ-

गवानुवाच ॥ आकाशो ह्यवकाशश्च आकाशं व्यापितं च यत्। आकाशस्य गुणः शब्दो निःशब्दं ब्रह्म चोच्यते ॥५०॥ अर्जुन उवाच ॥ दन्तोष्ठतालुजिह्वानामास्पदं यत्र दृश्यते। अक्षरत्वं कुतस्तेषां क्षरत्वं वर्तते सदा ॥ ५१ ॥ श्रीभगवानुवाच ॥ अघोषमव्यञ्जनमस्वरं चाप्यतालुकण्ठोष्ठमनासिकं च। अरेखजातं परमूष्मवर्जितं तदक्षरं न क्षरते कथंचित् ॥ ५२ ॥ अर्जुन उवाच ॥ ज्ञात्वा सर्वगतं ब्रह्म सर्वभूताधिवासितम्। इन्द्रियाणां निरोधेन कथं सिध्यन्ति योगिनः ॥ ५३ ॥ श्रीभगवानुवाच ॥ इन्द्रियाणां निरोधेन देहे पश्यन्ति मानवाः। देहे नष्टे कुतो बुद्धिर्बुद्धिनाशे कुतो ज्ञता ॥ ५४ ॥ तावदेव निरोधः स्याद्यावत्तत्त्वं न विन्दति। विदिते तु परे तत्त्वे एकमेवानुपश्यति ॥ ५५ ॥ नवच्छिद्रकृता देहाः स्रवन्ति गलिका इव। नैवं ब्रह्म न शुद्धं स्यात्पुमान् ब्रह्म न विन्दति ॥ ५६ ॥ अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः। उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥ ५७ ॥

इत्युत्तरगीतायां प्रथमोऽध्यायः ॥ १ ॥

अर्जुन उवाच ॥ ज्ञात्वा सर्वगतं ब्रह्म सर्वज्ञं परमेश्वरम्। अहंब्रह्मेति निर्देष्टुं प्रमाणं तत्र किं भवेत् ॥ १ ॥ श्रीभगवानुवाच ॥ यथा जलं जले क्षिप्तं क्षीरे क्षीरं घृते घृतम्। अविशेषो भवेत्तद्वज्जीवात्मपरमात्मनोः ॥२॥ जीवे परेण तादात्म्यं सर्वगं ज्योतिरीश्वरम्। प्रमाणलक्षणैर्ज्ञेयं स्वयमेकाग्रवेदिना ॥३॥ अर्जुन उवाच ॥ ज्ञानेनैव भवेज्ज्ञेयं विदित्वा तत्क्षणेन तु। ज्ञानमात्रेण मुच्येत किं पुनर्योगधारणा ॥ ४ ॥ श्रीभगवानुवाच ॥ ज्ञानेन दीपिते देहे बुद्धिर्ब्रह्मसमन्विता। ब्रह्म-

ज्ञानाग्निना विद्वान्निर्दहेत्कर्मबन्धनम् ॥ ५ ॥ ततः पवित्रं परमेश्वराख्यमद्वैतरूपं विमलाम्बराभम् । यथोदके तोयमनुप्रविष्टं तथात्मरूपो निरुपाधिसंस्थितः ॥ ६ ॥ आकाशवत्सूक्ष्मशरीर आत्मा न दृश्यते वायुवदन्तरात्मा । स बाह्यमभ्यन्तरनिश्चलात्मा ज्ञानोल्कया पश्यति चान्तरात्मा ॥ ७ ॥ यत्र यत्र मृतो ज्ञानी येन वा केन मृत्युना । यथा सर्वगतं व्योम तत्र तत्र लयं गतम् ॥ ८ ॥ शरीरव्यापितं व्योम भुवनानि चतुर्दश । निश्चलो निर्मलो देही सर्वव्यापी निरञ्जनः ॥ ९ ॥ मुहूर्तमपि योगश्चेन्नासाग्रे मनसा सह । सर्वं तरति पाप्मानं तस्य जन्मशतार्जितम् ॥ १० ॥ दक्षिणे पिङ्गला नाडी वह्निमण्डलगोचरा । देवयानमिति ज्ञेया पुण्यकर्मानुसारिणी ॥११॥ इडा च वामनिःश्वाससोममण्डलगोचरा । पितृयानमिति ज्ञेया वाममाश्रित्य तिष्ठति ॥ १२ ॥ गुदस्य पृष्ठभागेऽस्मिन् वीणादण्डस्य देहभृत् । दीर्घास्थि मूर्ध्निपर्यन्तं ब्रह्मदण्डीति कथ्यते ॥ १३ ॥ तस्यान्ते सुषिरं सूक्ष्मं ब्रह्मनाडीति सूरिभिः ॥१४॥ इडापिङ्गलयोर्मध्ये सुषुम्णा सूक्ष्मरूपिणी । तस्याग्रे सर्वगं सर्वं यस्मिन् सर्वं प्रतिष्ठितम् ॥ १५ ॥ तस्या मध्यगताः सूर्यसोमाग्निपरमेश्वराः । भूतलोका दिशः क्षेत्रं समुद्राः पर्वताः शिलाः ॥ १६ ॥ द्वीपाश्च निम्नगा वेदाः शास्त्रविद्याकलाक्षराः । स्वरमन्त्रपुराणानि गुणाश्चैते च सर्वशः ॥ १७ ॥ बीजं बीजात्मकास्तेषां क्षेत्रज्ञाः प्राणवायवः । सुषुम्णान्तर्गतं विश्वं तस्मिन् सर्वं प्रतिष्ठितम् ॥ १८ ॥ नानानाडीप्रसवगं सर्वभूतान्तरात्मनि । ऊर्ध्वमूलमधःशाखं वायुमार्गेण सर्वगम् ॥ १९ ॥ द्विसप्ततिसहस्राणि नाड्यः स्युर्वायुगोचराः । कर्ममार्गेण सुषि-

रास्तिर्यञ्चः सुषिरात्मकाः ॥ २० ॥ अधश्चोर्ध्वंगतास्तासु नव-
द्वाराणि रोधयन् । वायुना सह जीवोर्ध्वं ज्ञानी मोक्षमवाप्नु-
यात् ॥ २१ ॥ अमरावतीन्द्रलोकेऽस्मिन्नासाग्रे पूर्वतो दिशि ।
अग्निलोको ह्यथ ज्ञेयश्चक्षुस्तेजोवती पुरी ॥ २२ ॥ याम्या संय-
मनी श्रोत्रे यमलोकः प्रतिष्ठितः । नैर्ऋतो ह्यथ तत्पार्श्वे नैर्ऋतो
लोक आश्रितः ॥ २३ ॥ विभावरी प्रतीच्यां तत्पृष्ठे वारुणिका
पुरी । वायोर्गन्धवती कर्णपार्श्वे लोकः प्रतिष्ठितः ॥ २४ ॥
सौम्या पुष्पवती सौम्ये सोमलोकस्तु कण्ठतः । वामकर्णे तु
विज्ञेयो देहमाश्रित्य तिष्ठति ॥ २५ ॥ वामे चक्षुषि चैशानी
शिवलोको मनोन्मनी । मूर्ध्नि ब्रह्मपुरी ज्ञेया ब्रह्माण्डं देहमा-
श्रितम् ॥ २६ ॥ पादादधः शिवोऽनन्तः कालाग्निप्रलया-
त्मकः । अनामयमधश्चोर्ध्वं मध्यमं तु बहिः शिवम् ॥ २७ ॥
अधःपदोऽतलं विद्यात्पादं च वितलं विदुः । नितलं पादसंधिं
च सुतलं जङ्घमुच्यते ॥ २८ ॥ महातलं च जानु स्यादूरुदेशे
रसातलम् । कटिस्तलातलं प्रोक्तं सप्तपातालसंज्ञया ॥ २९ ॥
कालाग्निनरकं घोरं महापातालसंज्ञया । पातालं नाभ्यधोभागः
भोगीन्द्रफणिमण्डलम् । वेष्टितः सर्वतोऽनन्तः स बिभ्रज्जीव-
संज्ञकः ॥ ३० ॥ भूलोकं नाभिदेशं तु भुवर्लोकं तु कुक्षितः ।
हृदयं स्वर्गलोकं तु सूर्यादिग्रहतारकाः ॥ ३१ ॥ सूर्यसोमसुन-
क्षत्रं बुधशुक्रकुजाङ्गिराः । मन्दश्च सप्तमो ज्ञेयो ध्रुवोऽन्तः स्वर्ग-
लोकतः ॥ ३२ ॥ हृदये कल्पयन्योगी तस्मिन्सर्वसुखं भवेत्
॥ ३३ ॥ हृदयस्थमहर्लोकं जनोलोकं तु कण्ठतः । तपोलोकं
भ्रुवोर्मध्ये मूर्ध्नि सत्यं प्रतिष्ठितम् ॥ ३४ ॥ ब्रह्माण्डरूपिणी
पृथ्वी तोयमध्ये विलीयते । अग्निना पच्यते तोयं वायुना

ग्रस्यतेऽनलः ॥ ३५ ॥ आकाशं तु पिबेद्वायुं मनश्चाकाशमेव च । बुद्ध्यहंकारचित्तं च क्षेत्रज्ञः परमात्मनि ॥ ३६ ॥ अहं ब्रह्मेति मां ध्यायेदेकाग्रमनसा सकृत् । सर्वं तरति पाप्मानं कल्पकोटिशतैः कृतम् ॥ ३७ ॥ घटसंवृतमाकाशं नीयमाने घटे यथा । घटे नश्यति नाकाशं तद्वज्जीव इहात्मनि ॥ ४८ ॥ घटाकाशमिवात्मानं विलयं वेत्ति तत्त्वतः । स गच्छति निरालम्बं ज्ञानालोक्यं न संशयः ॥ ३९ ॥ तपेद्वर्षसहस्राणि चैकपादस्थितो नरः । एकस्य ज्ञानयोगस्य कलां नार्हति षोडशीम् ॥ ४० ॥ आलोड्य चतुरो वेदान् धर्मशास्त्राणि सर्वदा । यो वै ब्रह्म न जानाति दर्वी पाकरसं यथा ॥ ४१ ॥ यथा खरश्चन्दनभारवाही भारस्य वाही न तु चन्दनस्य । एवं हि शास्त्राणि बहून्यधीत्य सारं न जानन्खरवद्वहेत्सः ॥ ४२ ॥ अनन्तकर्म शौचं च जपो यज्ञस्तथैव च । तीर्थयात्रादिगमनं यावत्तत्त्वं न विन्दति ॥ ४३ ॥ गवामनेकवर्णानां क्षीरस्याप्येकवर्णता । क्षीरवत्पश्यते ज्ञानं देहिनां च गवां यथा ॥ ४४ ॥ अहंब्रह्मेति नियते मोक्षहेतुर्महात्मनाम् । द्वे पदे बन्धमोक्षाय न ममेति ममेति च ॥ ४५ ॥ ममेति बध्यते जन्तुर्न ममेति विमुच्यते ॥ ४६ ॥ मनसो ह्युन्मनीभावाद्द्वैतं नैवोपलभ्यते । यदा यात्युन्मनीभावं तदा तत्परमं पदम् ॥ ४७ ॥ हन्यान्मुष्टिभिराकाशं क्षुधार्तः कण्डयेत्तुषम् । नाहं ब्रह्मेति जानाति तस्य मुक्तिर्न जायते ॥ ४८ ॥ इति उत्तरगीतायां द्वितीयोऽध्यायः ॥ २ ॥

श्रीभगवानुवाच—अनन्तशास्त्रं बहु वेदितव्यमल्पश्च कालो बहवश्च विघ्नाः । यत्सारभूतं तदुपासितव्यं हंसो यथा

क्षीरमिवाम्बुमिश्रम् ॥ १ ॥ पुराणं भारतं वेदः शास्त्राणि विविधानि च । पुत्रदारादिसंसारो योगाभ्यासस्य विघ्नकृत्॥२॥ इदं ज्ञानमिदं ज्ञेयं यत्सर्वं ज्ञातुमिच्छति । अपि वर्षसहस्रायुः शास्त्रान्तं नाधिगच्छति ॥ ३ ॥ विज्ञेयोऽक्षरतन्मात्रो जीवितं चापि चञ्चलम् । विहाय शास्त्रजालानि यत्सारं तदुपास्यताम्॥४॥ पृथिव्यां यानि भूतानि जिह्वोपस्थनिमित्तकम् । जिह्वोपस्थपरित्यागे पृथिव्यां किं प्रयोजनम् ॥ ५ ॥ तीर्थानि तोयपूर्णानि देवान्पाषाणमृन्मयान् । योगिनो न प्रपद्यन्त आत्मज्ञानपरायणाः ॥ ६ ॥ अग्निर्देवो द्विजातीनां मुनीनां हृदि दैवतम् । प्रतिमा स्वल्पबुद्धीनां सर्वत्र समदर्शिनाम् ॥७॥ सर्वत्रावस्थितं शान्तं न प्रपश्येज्जनार्दनम् । ज्ञानचक्षुर्विहीनत्वादन्धः सूर्यमिवोदितम् ॥८ यत्र यत्र मनो याति तत्र तत्र परं पदम् । तत्र तत्र परं ब्रह्म सर्वत्र समवस्थितम् ॥९॥ दृश्यन्ते दर्शिरूपाणि गगनं भाति निर्मलम् । अहमित्यक्षरं ब्रह्म परमं विष्णुमव्ययम् ॥ १० ॥ दृश्यते चेत्खगाकारं खगाकारं विचिन्तयेत् । सकलं निष्कलं सूक्ष्मं मोक्षद्वारेण निर्गतम् ॥ ११ ॥ अपवर्गस्य निर्वाणं परमं विष्णुमव्ययम् । सर्वज्योतिर्निराकारं सर्वभूतगुणान्वितम् ॥ १२ ॥ सर्वत्र परमात्मानं ब्रह्मात्मा परमव्ययम् ॥ १३ ॥ अहंब्रह्मेति यत्सर्वं विजानाति नरः सदा । हन्यात्स्वयमिमान्कामान्सर्वाशी सर्वविक्रयी । सर्वं निषिद्धं कृत्वापि कर्मभिर्न स बध्यते ॥१४॥ निमिषं निमिषार्धं वा शीताशीतनिवारणम् । अचला केशवे भक्तिर्विभवैः किं प्रयोजनम् ॥ १५ ॥ भिक्षान्नं देहरक्षार्थं वस्त्रं शीतनिवारणम् । अश्मानं च हिरण्यं च शाकं शाल्योदनं तथा । समानं चिन्तयेद्योगी यदि चिन्त्यमपेक्षते ॥ १६ ॥ भूतवस्तु-

न्यश्चोचित्ते पुनर्जन्म न विद्यते ॥ १७ ॥ आत्मयोगमबोचद्यो भक्तियोगशिरोमणिः । तं वन्दे परमानन्दं नन्दनन्दनमीश्वरम् ॥ १८ ॥ इत्युत्तरगीतायां तृतीयोऽध्यायः ॥ ३ ॥

इति श्रीउत्तरगीता समाप्ता ॥ ३९ ॥

---

## ब्रह्मसूत्राणि ॥ ४० ॥

### प्रथमाध्याये प्रथमः पादः ॥ १ ॥ १ ॥

ॐ परमात्मने नमः ॥ अथाऽतो ब्रह्मजिज्ञासा ॥१॥ जन्माद्यस्य यतः ॥२॥ शास्त्रयोनित्वात् ॥३॥ तत्तु समन्वयात् ॥४॥ ईक्षतेर्नाशब्दम् ॥ ५ ॥ गौणश्चेन्नात्मशब्दात् ॥ ६ ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥ हेयत्वावचनाच्च ॥८॥ स्वाप्ययात् ॥ ९ ॥ गतिसामान्यात् ॥ १० ॥ श्रुतत्वाच्च ॥ ११ ॥ आनन्दमयोऽभ्यासात् ॥ १२ ॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥१३॥ तद्धेतुव्यपदेशाच्च ॥ १४ ॥ मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥ नेतरोऽनुपपत्तेः ॥ १६ ॥ भेदव्यपदेशाच्च ॥ १७ ॥ कामाच्च नानुमानापेक्षा ॥ १८ ॥ अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥ अन्तस्तद्धर्मोपदेशात् ॥ २० ॥ भेदव्यपदेशाच्चान्यः ॥ २१ ॥ आकाशस्तल्लिङ्गात् ॥ २२ ॥ अत एव प्राणः ॥ २३ ॥ ज्योतिश्चरणाभिधानात् ॥ २४ ॥ छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥ २५ ॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥ प्राणस्तथाऽनुगमात् ॥ २८ ॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २९ ॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

अथात एकत्रिंशत् ॥ इति वैयासिक्यां शारीरकमीमांसायां प्रथमस्याध्यायस्य प्रथमः पादः ॥ १ ॥ १ ॥

प्रथमाध्याये द्वितीयः पादः ॥ १ ॥ २ ॥

सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥ शब्दविशेषात् ॥ ५ ॥ स्मृतेश्च ॥ ६ ॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥ अत्ता चराचरग्रहणात् ॥९॥ प्रकरणाच्च ॥ १० ॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ विशेषणाच्च ॥ १२ ॥ अन्तर उपपत्तेः ॥ १३ ॥ स्थानादिव्यपदेशाच्च ॥ १४ ॥ सुखविशिष्टाभिधानादेव च ॥ १५ ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥ अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥ रूपोपन्यासाच्च ॥ २३ ॥ वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥ स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ २६ ॥ अत एव न देवता भूतं च ॥ २७ ॥ साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥ अनुस्मृतेर्बादरिः ॥ ३० ॥ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥ आमनन्ति चैनमस्मिन् ॥ ३२ ॥ सर्वत्र द्वात्रिंशत् ॥ आदितः ॥ ६३ ॥

इति वैयासिक्यां शारीरकमीमांसायां प्रथमस्याध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥

प्रथमाध्याये तृतीयः पादः ॥ १ ॥ ३ ॥

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥ नानुमानमतच्छब्दात् ॥ ३ ॥ प्राणभृच्च ॥ ४ ॥ भेदव्यपदेशात् ॥ ५ ॥ प्रकरणात् ॥ ६ ॥ स्थित्यदनाभ्यां च ॥ ७ ॥ भूमासम्प्रसादादध्युपदेशात् ॥ ८ ॥ धर्मोपपत्तेश्च ॥ ९ ॥ अक्षरमम्बरान्तधृतेः ॥ १० ॥ सा च प्रशासनात् ॥ ११ ॥ अन्यभावव्यावृत्तेश्च ॥ १२ ॥ ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥ दहर उत्तरेभ्यः ॥ १४ ॥ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥ प्रसिद्धेश्च ॥ १७ ॥ इतरपरामर्शात्स इति चेन्नासम्भवात् ॥ १८ ॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥ अन्यार्थश्च परामर्शः ॥ २० ॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥ अनुकृतेस्तस्य च ॥ २२ ॥ अपि च स्मर्यते ॥२३॥ शब्दादेव प्रमितः ॥ २४ ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥ तदुपर्यपि बादरायणः सम्भवात् ॥ २६ ॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥ अत एव च नित्यत्वम् ॥ २९ ॥ समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ ३० ॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥ ज्योतिषि भावाच्च ॥ ३२ ॥ भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिं

ङ्गात् ॥ ३५ ॥ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥ कम्पनात् ॥ ३९ ॥ ज्योतिर्दर्शनात् ॥ ४० ॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥ पत्यादिशब्देभ्यः ॥ ४३ ॥ द्युभ्वाद्यायतनं त्रिचत्वारिंशत् ॥ आदितः ॥१०६॥ इति वैयासिक्यां शारीरकमीमांसायां प्रथमस्याध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥

## प्रथमाध्यायस्य चतुर्थः पादः ॥ १ ॥ ४ ॥

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥ तदधीनत्वादर्थवत् ॥ ३ ॥ ज्ञेयत्वावचनाच्च ॥ ४ ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥ महद्वच्च ॥ ७ ॥ चमसवदविशेषात् ॥ ८ ॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥ न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥ प्राणादयो वाक्यशेषात् ॥ १२ ॥ ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥ कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ॥ १४ ॥ समाकर्षात् ॥ १५ ॥ जगद्वाचित्वात् ॥ १६ ॥ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥ अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥ वाक्यान्वयात् ॥ १९ ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥ उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ २१ ॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्

॥ २३ ॥ अभिध्योपदेशाच्च ॥ २४ ॥ साक्षाच्चोभयाऽऽम्नानात् ॥ २५ ॥ आत्मकृतेः परिणामात् ॥ २६ ॥ योनिश्च हि गीयते ॥ २७ ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥ आनुमानिकमष्टाविंशतिः ॥ आदितः ॥ १३४ ॥ इति वैयासिक्यां शारीरकमीमांसायां प्रथमस्याध्यायस्य चतुर्थः पादः ॥ १ ॥ ४ ॥ समाप्तः प्रथमोऽध्यायः ॥ १ ॥

द्वितीयाध्याये प्रथमः पादः ॥ २ ॥ १ ॥

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥ इतरेषां चानुपलब्धेः ॥ २ ॥ एतेन योगः प्रत्युक्तः ॥ ३ ॥ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥४॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥ दृश्यते तु ॥ ६ ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥ न तु दृष्टान्तभावात् ॥ ९ ॥ स्वपक्षदोषाच्च ॥ १० ॥ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ ११ ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥ भावे चोपलब्धेः ॥ १५ ॥ सत्त्वाच्चावरस्य ॥ १६ ॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥ युक्तेः शब्दान्तराच्च ॥ १८ ॥ पटवच्च ॥ १९ ॥ यथा च प्राणादि ॥ २० ॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ अधिकं तु भेदनिर्देशात् ॥ २२ ॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥ देवादिवदपि लोके ॥ २५ ॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥ आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥ स्वपक्षदोषाच्च ॥ २९ ॥ सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥ न प्रयोजनवत्त्वात् ॥ ३२ ॥ लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥ न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥ उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥ सर्वधर्मोपपत्तेश्च ॥ ३७ ॥ स्मृतिः सप्तत्रिंशत् ॥ आदितः ॥ १७१ ॥ इति वैयासिक्यां शारीरकमीमांसायां द्वितीयस्याध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥

द्वितीयाध्याये द्वितीयः पादः ॥ २ ॥ २ ॥

रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥ प्रवृत्तेश्च ॥ २ ॥ पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥ पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥ अङ्गित्वानुपपत्तेश्च ॥ ८ ॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥ विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥ उभयथापि न कर्मातस्तदभावः ॥ १२ ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥ नित्यमेव च भावात् ॥ १४ ॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥ उभयथा च दोषात् ॥ १६ ॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा

॥ २१ ॥ प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥ उभयथा च दोषात् ॥ २३ ॥ आकाशे चाविशेषात् ॥ २४ ॥ अनुस्मृतेश्च ॥ २५ ॥ नासतोऽदृष्टत्वात् ॥ २६ ॥ उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥ नाभाव उपलब्धेः ॥ २८ ॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥ न भावोऽनुपलब्धेः ॥ ३० ॥ क्षणिकत्वाच्च ॥ ३१ ॥ सर्वथानुपपत्तेश्च ॥ ३२ ॥ नैकस्मिन्नसम्भवात् ॥ ३३ ॥ एवञ्चात्माऽकार्त्स्न्यम् ॥ ३४ ॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥ पत्युरसामञ्जस्यात् ॥३७॥ सम्बन्धानुपपत्तेः ॥३८॥ अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥ करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥ उत्पत्त्यसम्भवात् ॥ ४२ ॥ न च कर्त्तुः करणम् ॥ ४३ ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥ विप्रतिषेधाच्च ॥ ४५ ॥ रचनानुपपत्तेः पञ्चचत्वारिंशत् आदितः ॥ २१६ ॥ इति वैयासिक्यां शारीरकमीमांसायां द्वितीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥

द्वितीयाध्याये तृतीयः पादः ॥ २ ॥ ३ ॥

न वियदश्रुतेः ॥ १ ॥ अस्ति तु ॥ २ ॥ गौण्यसम्भवात् ॥ ३ ॥ शब्दाच्च ॥ ४ ॥ स्याच्चैकस्यापि ब्रह्मशब्दवत् ॥ ५ ॥ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥ यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥ एतेन मातरिश्वा व्याख्यातः ॥८॥ असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥ तेजोऽतस्तथा ह्याह ॥१०॥ आपः ॥ ११ ॥ पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥ विपर्ययेण तु

क्रमोऽत उपपद्यते च ॥ १४ ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥ ज्ञोऽत एव ॥ १८ ॥ उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥ स्वात्मना चोत्तरयोः ॥ २० ॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥ स्वशब्दोन्मानाभ्यां च ॥ २२ ॥ अविरोधश्चन्दनवत् ॥ २३ ॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥ गुणाद्वालोकवत् ॥ २५ ॥ व्यतिरेको गन्धवत् ॥ २६ ॥ तथा च दर्शयति ॥ २७ ॥ पृथगुपदेशात् ॥ २८ ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥ कर्त्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ विहारोपदेशात् ॥ ३४ ॥ उपादानात् ॥ ३५ ॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥ उपलब्धिवदनियमः ॥ ३७ ॥ शक्तिविपर्ययात् ॥ ३८ ॥ समाध्यभावाच्च ॥ ३९ ॥ यथा च तक्षोभयथा ॥ ४० ॥ परात्तु तच्छ्रुतेः ॥ ४१ ॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥ मन्त्रवर्णाच्च ॥ ४४ ॥ अपि च स्मर्यते ॥ ४५ ॥ प्रकाशादिवन्नैवं परः ॥ ४६ ॥ स्मरन्ति च ॥ ४७ ॥ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥ असन्ततेश्चाव्यतिकरः ॥ ४९ ॥ आभास एव च ॥ ५० ॥

अदृष्टानियमात् ॥ ५१ ॥ अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥ प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥ न वियदश्रुतेस्त्रिपञ्चाशत् ॥ आदितः ॥ २६९ ॥ इति वैयासिक्यां शारीरकमीमांसायां द्वितीयस्याध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥

द्वितीयाध्याये चतुर्थः पादः ॥ २ ॥ ४ ॥

तथा प्राणाः ॥ १ ॥ गौण्यसम्भवात् ॥ २ ॥ तत्प्राक्श्रुतेश्च ॥ ३ ॥ तत्पूर्वकत्वाद्वाचः ॥ ४ ॥ सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥ अणवश्च ॥ ७ ॥ श्रेष्ठश्च ॥ ८ ॥ न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११ ॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥ अणुश्च ॥ १३ ॥ ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥ प्राणवता शब्दात् ॥ १५ ॥ तस्य च नित्यत्वात् ॥ १६ ॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥ भेदश्रुतेः ॥ १८ ॥ वैलक्षण्याच्च ॥ १९ ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥ तथा प्राणा द्वाविंशतिः ॥ आदितः ॥ २९१ ॥ इति वैयासिक्यां शारीरकमीमांसायां द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ २ ॥ ४ ॥

समाप्तो द्वितीयोध्यायः ॥ २ ॥

तृतीयाध्याये प्रथमः पादः ॥ ३ ॥ १ ॥

तदन्तरप्रतिपत्तौ रंहतिसम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥ प्राणगतेश्च ॥ ३ ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ प्रथमेऽश्रवणादिति

चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥ भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥ चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥ स्मरन्ति च ॥१४॥ अपि च सप्त ॥ १५ ॥ तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥१७॥ न तृतीये तथोपलब्धेः ॥ १८ ॥ स्मर्यतेऽपि च लोके ॥१९॥ दर्शनाच्च ॥ २० ॥ तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥ तत्साभाव्यापत्तिरुपपत्तेः ॥२२॥ नातिचिरेण विशेषात् ॥२३॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥ अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥ रेतस्सिग्योगोऽथ ॥ २६ ॥ योनेः शरीरम् ॥ २७ ॥ तदनन्तरप्रतिपत्तौ सप्तविंशतिः ॥ आदितः ॥३१८॥ इति वैयासिक्यां शारीरकमीमांसायां तृतीयस्याध्यायस्य प्रथमः पादः ॥ ३ ॥ १ ॥

तृतीयाध्याये द्वितीयः पादः ॥ ३ ॥ २ ॥

सन्ध्ये सृष्टिराह हि ॥ १ ॥ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥ देहयोगाद्वा सोपि ॥ ६ ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः

॥ ९ ॥ मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥ अपि चैवमेके ॥ १३ ॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥ प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥ आह च तन्मात्रम् ॥ १६ ॥ दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥ अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥ दर्शनाच्च ॥ २१ ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥ तदव्यक्तमाह हि ॥ २३ ॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥ अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥ पूर्ववद्वा ॥ २९ ॥ प्रतिषेधाच्च ॥ ३० ॥ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥ सामान्यात्तु ॥ ३२ ॥ बुद्ध्यर्थः पादवत् ॥ ३३ ॥ स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥ उपपत्तेश्च ॥ ३५ ॥ तथान्यप्रतिषेधात् ॥ ३६ ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥ फलमत उपपत्तेः ॥ ३८ ॥ श्रुतत्वात् ॥ ३९ ॥ धर्मं जैमिनिरत एव ॥ ४० ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥ सन्ध्ये सृष्टिरेकचत्वारिंशत् ॥ आदितः ॥ ३५९ ॥ इति वैयासिक्यां शारीरकमीमांसायां तृतीयस्याध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

तृतीयाध्याये तृतीयः पादः ॥ ३ ॥ ३ ॥

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥ भेदान्नेति

चेन्नैकस्यामपि ॥ २ ॥ स्वाध्यायस्य तथात्वेन हि समाचारे-
ऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥ दर्शयति च ॥ ४ ॥
उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥ अन्यथात्वं
शब्दादिति चेन्नाविशेषात् ॥ ६ ॥ न वा प्रकरणभेदात्परो-
ऽवरीयस्त्वादिवत् ॥ ७ ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि
॥ ८ ॥ व्याप्तेश्च समञ्जसम् ॥ ९ ॥ सर्वाभेदादन्यत्रेमे ॥ १० ॥
आनन्दादयः प्रधानस्य ॥ ११ ॥ प्रियशिरस्त्वाद्यप्राप्तिरुप-
चयापचयौ हि भेदे ॥ १२ ॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥
आध्यानाय प्रयोजनाभावात् ॥ १४ ॥ आत्मशब्दाच्च ॥१५॥
आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ अन्वयादिति चेत्स्याद-
वधारणात् ॥ १७ ॥ कार्याख्यानादपूर्वम् ॥ १८ ॥ समान
एवं चाभेदात् ॥ १९ ॥ सम्बन्धादेवमन्यत्रापि ॥ २० ॥
न वा विशेषात् ॥ २१ ॥ दर्शयति च ॥ २२ ॥ सम्भृतिद्यु-
व्याप्त्यपि चातः ॥ २३ ॥ पुरुषविद्यायामिव चेतरेषामना-
म्नानात् ॥ २४ ॥ वेधाद्यर्थभेदात् ॥ २५ ॥ हानौ तूपायन-
शब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥ साम्प-
राये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥ छन्दत उभयाविरो-
धात् ॥ २८ ॥ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥२९॥
उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥ अनियमः सर्वे-
षामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥ यावदधिकारमव-
स्थितिराधिकारिकाणाम् ॥ ३२ ॥ अक्षरधियां त्ववरोधः सामा-
न्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥३३॥ इयदामननात् ॥३४॥
अन्तराभूतग्रामवत्स्वात्मनः ॥ ३५ ॥ अन्यथा भेदानुपप-
त्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥ व्यतिहारो विशिंषन्ति

हीतरवत् ॥ ३७ ॥ सैव हि सत्यादयः ॥ ३८ ॥ कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥ आदरादलोपः ॥ ४० ॥ उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॥ ४२ ॥ प्रदानवदेव तदुक्तम् ॥ ४३ ॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥ पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥ ४५ ॥ अतिदेशाच्च ॥ ४६ ॥ विद्यैव तु निर्धारणात् ॥ ४७ ॥ दर्शनाच्च ॥ ४८ ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५० ॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥ एक आत्मनः शरीरे भावात् ॥ ५३ ॥ व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥ मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥५७॥ नाना शब्दादिभेदात् ॥५८॥ विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥ अङ्गेषु यथाऽऽश्रयभावः ॥ ६१ ॥ शिष्टेश्च ॥ ६२ ॥ समाहारात् ॥ ६३ ॥ गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥ न वा तत्सहभावाश्रुतेः ॥ ६५ ॥ दर्शनाच्च ॥६६॥ सर्ववेदान्तप्रत्ययं षट्षष्टिः ॥ आदितः ॥ ४२५ ॥ इति वैयासिक्यां शारीरकमीमांसायां तृतीयस्याध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥

तृतीयाध्याये चतुर्थः पादः ॥ ३ ॥ ४ ॥

पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥ शेषत्वा-

त्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥ आचारदर्श-
नात् ॥ ३ ॥ तच्छ्रुतेः ॥ ४ ॥ समन्वारम्भणात् ॥ ५ ॥ तद्वतो
विधानात् ॥ ६ ॥ नियमाच्च ॥ ७ ॥ अधिकोपदेशात्तु बाद-
रायणस्यैवं तद्दर्शनात् ॥ ८ ॥ तुल्यं तु दर्शनम् ॥ ९ ॥
असार्वत्रिकी ॥ १० ॥ विभागः शतवत् ॥ ११ ॥ अध्ययन-
मात्रवतः ॥ १२ ॥ नाविशेषात् ॥ १३ ॥ स्तुतयेऽनुमतिर्वा
॥ १४ ॥ कामकारेण चैके ॥ १५ ॥ उपमर्दं च ॥ १६ ॥
ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥ परामर्शं जैमिनिरचोदना
चापवदति हि ॥ १८ ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः
॥ १९ ॥ विधिर्वा धारणवत् ॥ २० ॥ स्तुतिमात्रमुपादाना-
दिति चेन्नापूर्वत्वात् ॥ २१ ॥ भावशब्दाच्च ॥ २२ ॥ पारि-
प्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥ तथा चैकवाक्य-
तोपबन्धात् ॥ २४ ॥ अत एव चाग्नीन्धनाद्यनपेक्षा
॥ २५ ॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥
शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानु-
ष्ठेयत्वात् ॥ २७ ॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्
॥ २८ ॥ अबाधाच्च ॥ २९ ॥ अपि च स्मर्यते ॥ ३० ॥
शब्दश्चातोऽकामकारे ॥ ३१ ॥ विहितत्वाच्चाश्रमकर्मापि
॥ ३२ ॥ सहकारित्वेन च ॥ ३३ ॥ सर्वथापि त एवोभय-
लिङ्गात् ॥ ३४ ॥ अनभिभवं च दर्शयति ॥ ३५ ॥ अन्तरा
चापि तु तद्दृष्टेः ॥ ३६ ॥ अपि च स्मर्यते ॥ ३७ ॥ विशेषा-
नुग्रहश्च ॥ ३८ ॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥
तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः
॥ ४० ॥ न चाधिकारिकमपि पतनानुमानात्तदयोगात्

॥ ४१ ॥ उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥ श्रुतेश्च ॥ ४६ ॥ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥ मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥ अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥ ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥ पुरुषार्थो द्विपञ्चाशत् ॥ आदितः ॥ ४७७ ॥ इति वैयासिक्यां शारीरकमीमांसायां तृतीयस्याध्यायस्य चतुर्थः पादः ॥ ३ ॥४॥ समाप्तस्तृतीयोऽध्यायः ॥३॥

चतुर्थाध्याये प्रथमः पादः ॥ ४ ॥ १ ॥

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ लिङ्गाच्च ॥ २ ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ न प्रतीकेन हि सः ॥ ४ ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ आसीनः सम्भवात् ॥ ७ ॥ ध्यानाच्च ॥८॥ अचलत्वञ्चापेक्ष्य ॥ ९ ॥ स्मरन्ति च ॥ १० ॥ यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ आ प्रायणात्तत्रापि हि दृष्टम् ॥१२॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥ अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥ यदेव विद्ययेति हि ॥ १८ ॥ भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥ आवृत्तिरेकोनविंशतिः ॥ आदितः ॥ ४९६ ॥

इति वैयासिक्यां शारीरकमीमांसायां चतुर्थस्याध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

चतुर्थाध्याये द्वितीयः पादः ॥ ४ ॥ २ ॥

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ अत एव च सर्वाण्यनु ॥ २ ॥ तन्मनः प्राण उत्तरात् ॥ ३ ॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥ भूतेष्वतः श्रुतेः ॥ ५ ॥ नैकस्मिन्दर्शयतो हि ॥ ६ ॥ समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ तदाऽपीतेः संसारव्यपदेशात् ॥८॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥ नोपमर्देनातः ॥ १० ॥ अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥ प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥ स्पष्टो ह्येकेषाम् ॥ १३ ॥ स्मर्यते च ॥ १४ ॥ तानि परे तथा ह्याह ॥ १५ ॥ अविभागो वचनात् ॥ १६ ॥ तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥ रश्म्यनुसारी ॥ १८ ॥ निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥ अतश्चायनेऽपि हि दक्षिणे ॥ २० ॥ योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥ वागेकविंशतिः ॥ आदितः ॥ ५१७ ॥ इति वैयासिक्यां शारीरकमीमांसायां चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

चतुर्थाध्याये तृतीयः पादः ॥ ४ ॥ ३ ॥

अर्चिरादिना तत्प्रथितेः ॥ १ ॥ वायुमब्दादविशेषाभ्याम् ॥ २ ॥ तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥ आतिवाहिकस्तल्लिङ्गात् ॥ ४ ॥ उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥ वैद्युतेनैव

ततस्तच्छ्रुतेः ॥ ६ ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥ विशेषितत्वाच्च ॥ ८ ॥ सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥ कार्यात्यये तदध्यक्षेण सहातःपरमभिधानात् ॥ १० ॥ स्मृतेश्च॥ ११॥ परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥ दर्शनाच्च ॥ १३ ॥ न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्च ॥ १५ ॥ विशेषं च दर्शयति ॥१६॥ अर्चिष्पोडश ॥ आदितः ॥ ५३३ ॥ इति वैयासिक्यां शारीरकमीमांसायां चतुर्थस्याध्यायस्य तृतीयः पादः ॥४॥३॥

चतुर्थाध्याये चतुर्थः पादः ॥ ४ ॥ ४ ॥

सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥ आत्मा प्रकरणात् ॥ ३ ॥ अविभागेन दृष्टत्वात् ॥४॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥५॥ चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥ अतएव चानन्याधिपतिः ॥ ९ ॥ अभावं बादरिराह ह्येवम् ॥ १० ॥ भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥ भावे जाग्रद्वत् ॥ १४ ॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥१७॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ संपद्य द्वाविंशतिः ॥ आदितः ॥ ५५५ ॥ इति वैयासिक्यां शारीरकमीमांसायां चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥ ४ ॥

॥ समाप्तश्चायं चतुर्थोऽध्यायः ॥ इति श्री ब्रह्मसूत्राणि ॥ ४० ॥

इति श्रीवेदान्तसमुच्चयः समाप्तः ।

---

स्खालित्यानिः—

( ८ ) अष्टमपृष्ठे ( १० ) दशमस्तोत्रस्य 'निर्वाणदशक' स्यान्यन्नाम 'सिद्धान्तबिन्दुः ॥' इति,

( ७१ ) एकसप्ततितमपृष्ठे ( ३० ) त्रिंशस्तोत्रस्य 'शतश्लोक्या' अन्यन्नाम 'वेदान्तकेसरी ॥' इति,

( २१६ ) षोडशोत्तरद्विशततमपृष्ठे श्रुतिसारसमुद्धरणस्तोत्रस्य ( ११५ ) पञ्चदशोत्तरशततमश्लोकस्य पूर्वार्धम्—'यदपेक्ष्य भवेदभिधानमिदं परमात्मपदस्य तुरीयमिति ॥' इति च पठनीयानि ॥

---

॥ॐ॥

ई
असति शिघांत देषो तोड्श वास्योपनिषत
देषो=दूबर=पान=पैंगल गानउपनिशत=देषो=
तीसर=पान=योग शीषोउपनिषत=पान३७२
देषौ=चौथ=श्रीजावाल=उपनिशत=पान=४०
बारा उपनीसत=पान=४७६=देषो=

॥ ॐ ॥
संझारकोनासदोप्रकार=सुहोता है=एकतो
सरूपनास=स्वपनम=दूसरो अरूपनासत्तान
सु=पांचचिजकोनाश=संझारछ=अशथी१=
भाति=२=प्रिय=३=नाव=४=रूप=५=
नामरूपमिथ्या=तीननाम ब्रह्मका छ=ॐ॥
पैंगलउपनिषत=पान=३३५=वा=३३६=
दाषो=गीताध्याय=२=श्लोक=१०=सु=
तीसतक=उतरगिता=ध्याय=३=
नु देषो=वाराहाउपनीसतसारो=देषो
तेजोबिन्दुपानिषत=पान=२१६=वा=२१७=
देषो=वाराहोपानिषत=सारो देषो=पान=
४७४=वा=४७५=वा४७६=वा=४७७=
देषो=ब्रह्मसत्यंम=संझामिथ्या=जीव
ब्रह्मएकही छ=उपाधीको भेद छ=
कारियउपाधि अंशमजीवकारणउपाधि
इस्वर=कारियकारणत्वंमहित्वापुरणबोधो
भवीसति=
स्रष्टिदोप्रकारिछ
इस्वरकृत=जीवकृत=२
ईक्षणादिप्रवेसांता=इस्वरकृत=
जाग्रतआदी मोक्षअन्ता=भी
जीवकृत=

स्तथानिलः ॥ न चाकाशो न शब्दश्च न च स्पर्शस्तथारसः
॥२०॥ नाहं गंधो न रूपं च न मायाहं न संसृतिः॥ सदा सा-
क्षिस्वरूपत्वाच्छिव एवास्मि केवलम् ।२१॥ अकर्ताहमभोक्ता-
...गः परमेश्वरः ॥ सदा मत्सन्निधानेन चेष्टते सर्वमिंद्रियम्
॥ आदिमध्यांतमुक्तोहं न बद्धोहं कदाचन ॥ स्वभाव-
लः शुद्धः स एवाहं न संशयः ॥२३॥ सर्वज्ञोहमनंतोहं
...: सर्वशक्तिमान् ॥ आनंदः सत्यबोधोहमिति ब्रह्मानुचिं-
तनम् ॥२४॥ अयं प्रपंचो मिथ्यैव सत्यं ब्रह्माहमद्वयम् ॥ अत्र
प्रमाणं वेदांता गुरवोनुभवस्तथा ॥२५॥ मय्येव सकलं जातं
मयि सर्वं प्रतिष्ठितम् ॥ मयि सर्वं लयं याति तद्ब्रह्माद्वयम-
स्म्यहम् ॥२६। ब्रह्मैवाहं न संसारी न चाहं ब्रह्मणः पृथक् ॥
नाहं देहो न मे देहः केवलोहं सनातनः ॥२७॥ इति श्रीम-
त्मचिंतनं संपूर्णम् ॥

## ॥ श्री दक्षिणामूर्तिस्तोत्रम् ॥ (३)

ॐ परमात्मने नमः ॥ विश्वं दर्पणदृश्यमाननगरीतुल्यं
...जांतर्गतं पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ॥
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं तस्मै श्रीगुरु-
मूर्तये नम इदं श्रीदक्षिणामूर्तये ॥१॥ बीजस्यांतरिवांकुरो
जगदिदं प्राङ्निर्विकल्पं पुनर्मायाकल्पितदेशकालकलना वै-
चित्र्यचित्रीकृतम् ॥ मायावीव विजृंभयत्यपि महायोगीव यः
स्वेच्छया तस्मै श्री० ॥२॥ यस्यैव स्फुरणं सदात्मकमसत्क-
ल्पार्थकं भासते साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्या-
श्रितान् ॥ यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवांभोनिधौ तस्मै

श्री० ॥ ३ ॥ नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पंदते ॥ जानामीति तमेव भांतमनुभात्येतत्समस्तं जगत्तस्मै श्री० ॥४॥ देहं प्राणमपींद्रियाण्यपि चलं बुद्धिं च शून्यं विदुः स्त्रीबालांधजडोपमास्त्वहमिति भ्रांता भृशं वादिनः ॥ मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे तस्मै श्री० ॥५ ॥ राहुग्रस्तदिवाकरेंदुसदृशो मायासमाच्छादनात् सन्मात्रः करणोपसंहरणतो योभूत्सुषुप्तः पुमान् ॥ प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते तस्मै श्री० ॥ ६ ॥ बाल्यादिष्वपिजाग्रदादिषु तथा सर्वास्ववस्थास्वपि व्यावृत्तास्वनुवर्तमानमहमित्यंतः स्फुरंतं सदा ॥ स्वात्मानं प्रकटीकरोति भजतां यो भद्रया मुद्रया तस्मै श्री० ॥७॥ विश्वं पश्यति कार्यकारणतया स्वस्वामिसंबंधतः शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ॥ स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामित स्तस्मै श्री० ॥८॥ भूरंभांस्यनलोनिलोंबरमहर्नाथो हिमांशुः पुमानित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकं ॥ नान्यत् किंचन विद्यते विमृशतां यस्मात्परस्माद्विभोस्तस्मै श्री० ॥९॥ सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिँस्तवे तेनास्य श्रवणात्तथार्थमननाद्ध्यानाच्च सकीर्तनात् ॥ सर्वात्मत्वमहाविभूतिसहितंस्यादीश्वरस्त्वं स्वतः सिध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् श्री० ॥१०॥ इति श्रीमच्छंकराचार्य विरचितं दक्षिणामूर्ति स्तोत्रम् ॥

---

જરૂર અજમાવો! જ્ઞાનામૃતપિપાસુઓ માટે ખાસ વાંચી મનન કરવા સારૂ આવશ્યક કર્મ, ઉપાસના અને જ્ઞાનસાધક અવશ્ય વાંચી વિચારો.

## આદર્શ ગ્રંથો

## ज्ञानचिंतामणि.

( સચોટ ઉપદેશક કાવ્ય ગ્રંથ. )

## वेदान्तसमुच्चय.

(શ્રીમદ્ આદ્ય શંકરાચાર્યકૃત વેદાન્ત ગ્રંથસંગ્રહ.)

## समुच्चयत्रय.

જેમાં
બ્રહ્મકર્મસમુચ્ચય, સદાચારસમુચ્ચય અને સ્તોત્ર-
સમુચ્ચય નામના ગ્રંથોનો સમાવેશ છે.
આ પુસ્તકોને વિષે સુપ્રસિદ્ધ વિદ્વાનોના ઉત્તમ
અભિપ્રાયો મળેલા છે.

કર્તા—
બ્રહ્મર્ષિ પંડિત શ્રીહરેરામ શર્મા.
સારંગપુર તળીઆની પોળ,—અમદાવાદ

# અભિપ્રાયો.

---

श्री अमदावाद संस्कृत पाठशाळाना प्रधान अध्यापक व्याकरणा-
चार्य पंडित श्री प्रसिद्धनारायणमिश्र शास्त्रीजी लखे छेः-

श्री ब्रह्मर्षि पण्डित हरेराम शर्माजी !

आपका ज्ञानचिन्तामणि ग्रन्थको देखा, इसमें सुलालित गद्य पद्योंका उत्तम संग्रह एसा है कि जो भक्ति तथा ज्ञानद्वारा मोक्ष विषयकी इच्छाको उत्पन्न करता है, आशा है कि अनेक भगवद्भक्त गण इस चिन्तामणिकेद्वारा ज्ञान लाभ करेंगे । इति.

---

भवत्संकलितं वेदान्तसमुच्चयनामधेयं ग्रन्थरत्नं वेदान्ताभ्यासिनां तत्त्वज्ञानेच्छूनां मुमुक्षूणाञ्चातीवोपकारकम् । एतस्मिन्नंशेऽप्येतादृशो विषयो यो न ह्लादयति मनो विशेषेण तत्त्वज्ञानिनाम् । अत्र च श्रीमद्भगवद्गीताया ब्रह्मसूत्राणां च निवेशो विशेषेण गौरवमभिवर्द्धयति योजयति परं चेतोविदुषां तत्त्वज्ञानाङ्कुरमुत्पादयति च स्तोत्रपाठरसिकानां भगवद्भक्तिमतां सताम् । शोभनाक्षररूपाणामेतादृशपुस्तकानां संग्रहे भवतां श्रमः सफलः स्यादित्याशास्ते-

---

सुप्रसिद्ध वेदान्तअभ्यासी श्रीयुत नर्मदाशंकरभाई जणावे छे-

ब्रह्मर्षि हरेरामशर्मणा संगृहितो—" वेदान्तसमुच्चय "—नामा ग्रन्थो मदवलोकनार्थं संपादकेन प्रेषितोऽवेक्षितश्चमया ॥

वेदान्तशास्त्रस्य परमं रहस्यं प्रस्थानत्रय्यां निहितमिति निश्चित्य तस्य दिग्दर्शनपराविष्कारः श्रीमद्भगवत्पूज्यपादैर्भाष्यादिग्रन्थैः कृतः, तदनुयायिभिश्च विद्यारण्यादिमहर्षिभिर्विस्तरात्मकै

ग्रन्थरत्नैस्तत्त्वजिज्ञासूनां हृदयमण्डलानि मंडितानीति सुविदित-
तत्संस्कृतवाङ्मयरसिकानाम् ॥

ये पुण्यशीलारेनां प्रकरणसुमनोमालां श्रद्धया सततं कण्ठे हन्ति तेषां तत्त्वज्ञानोद्भूत आमोदः परिस्फुरतीति विषये न ऽपि शंकानुभवशीलानां महात्मनां मनःसु ॥

इमानि प्रकरणकुसुमानि इतस्ततः विक्षिप्तान्यवलोक्य, मह- प्रयासेनावचित्य ब्रह्मर्षिहरेरामशर्मणा मालारूपेण संगृहीतानि वेदान्त समुच्चय"—नामके ग्रन्थे ॥ अध्यात्मशास्त्ररहस्यजिज्ञासु- मोक्षैरेष समुच्चयः, अवश्यं संपादनीयः स्वाध्यायनियमेन अभ्यसनी- व श्चेति मे प्रतिभाति ॥

વેદ્દદ્દર બ્રહ્મર્ષિ પંડિત શ્રી હરેરામ શર્મા.

આપનો પત્ર તથા તે પહેલાં આપનો "શ્રી જ્ઞાન ચિંતામણિ" ગ્રંથ થા સમય મળ્યાં છે. મારે અખંડ પ્રવાસમાં ફરવાનું હોવાથી હું આપના પુસ્તકને અદ્યાપિ અવલોકી શક્યો નથી, અને જુન માસમાં અમદાવાદ પાછો ફરૂં ત્યાં સુધી તેની નિવૃત્તિ મળવા સંભવ નથી. આપનો ગ્રંથ આ- પાતતઃ મેં જોયો છે તે ઉપરથી સ્પષ્ટ જણાય છે કે ધર્મમય જીવન ગા- ળવાને ઇચ્છનાર સ્ત્રી વા પુરૂષને તેમાંથી આત્મોદ્ધારનાં ઉત્તમ સાધનો મળી આવવા સંભવ છે. હાલ એટલુંજ હું જણાવી શકું તેમ છે.

---

સુરત. તા. ૮-૮-૧૫

## અમદાવાદ ટ્રેનિંગ કોલેજના માજી પ્રિન્સીપાલ રા. બા. કમળાશંકરભાઇનો અભિપ્રાય.

બ્રહ્મર્ષિ પંડિત શ્રી હરેરામ સુજ્ઞરામ શર્મા વિરચિત.

જ્ઞાન ચિંતામણિ

આ પુસ્તકમાં ભક્તિ કાવ્યોનો સારો સંગ્રહ કરવામાં આવ્યો છે. પ્રારંભમાં બોધદાયક, નિવૃત્તિમાર્ગસૂચક અત્યુત્તમ હિત વાક્યો છે. પછી

કૃષ્ણુરામ, નરસિંહ મહેતા, ધીરાભક્ત, અખા, પ્રીતમદાસ વગેરેનાં કાવ્યો છે. નિવૃત્તપરાયણ વાચકવર્ગને એ કાવ્યો ઘણાં આનન્દદાયક થયા વિના રહેશે નહિ. પ્રવૃત્તિના આધુનિક ક્લેશમય જીવનમાં થોડો વખત આ ઉત્તમ કાવ્યો વાંચવાથી તેટલો સમય પણ મન મલિનતાથી મુક્ત થઈ ઉંચી ભૂમિકામાં વિહરશે.

શ્રીમન્ બ્રહ્મર્ષિ હરેરામ શર્માએ પ્રસિદ્ધ કરેલો વેદાન્તસમુચ્ચય જોયો. શ્રીમચ્છંકરાચાર્યના લઘુગ્રન્થો-विवेक चूडामणि, उपदेशसाहस्री, आनन्दलहरी, शतश्लोकी, ઇત્યાદિ, તેમજ चर्पटपञ्जरिका, साधनपञ्चक, मोहमुद्गर, हस्तामलक વગેરે સ્તોત્રો, श्रीमद्भगवद्गीता તથા उत्तरगीता આ બધા વેદાન્તના મુખ્ય ગ્રન્થોનો એકત્ર સમુચ્ચય પ્રસિદ્ધ કરી, મુમુક્ષુવર્ગનું અતિ કલ્યાણ કર્યું છે. પુસ્તક નિર્ણયસાગરમાં ઉતમ રીતે છપાયું છે. આશા છે કે વેદાન્ત વાક્યોમાં આનન્દ માનનાર તથા વેદાન્ત સ્તોત્રોનો પાઠ કરનાર વાચકવર્ગ આ પુસ્તકનો લાભ લઇ પરિશ્રમ સફળ કરશે. આરંભમાં શ્રીમચ્છંકરાચાર્યની છબી છે તે પણ ભાવિક વાચકને ઘણી પ્રિય થશે.

---

અમદાવાદ તા. ૧૦ મી ઑગસ્ટ ૧૯૧૧

અમદાવાદ ગવર્મેન્ટ હાઇસ્કુલના માજી હેડ માસ્તર અને સુપ્રસિદ્ધ સાક્ષર શ્રીયુત કેશવલાલભાઇ ધ્રુવ જણાવે છેઃ—

પુનઃ પુનઃ આવર્તન અને મનનથી સ્વરૂપાનુસંધાન થવામાં વેદાન્ત સમુચ્ચય બહુ ઉપકારક છે એમાં અનેક સુપ્રસિદ્ધ પ્રકરણો સમાવ્યાં છે. ભગવદ્ગીતા અને બ્રહ્મસૂત્રના સંગ્રહથી પ્રસ્તુત પુસ્તક નિત્ય પાઠને માટે પણ ઉપયોગી છે.

બ્રહ્મર્ષિ પંડિત શ્રી હરેરામ શર્મા કૃત.

જ્ઞાન ચિંતામણિમાં કૃષ્ણુરામ, પ્રીતમ, ધીરો, અખો, નરસિંહ, વગેરેનો સંગ્રહ છે, તે ઉપરાંત એમાં ત્રણેક ગદ્ય લેખ છે તે પણ વાંચવા અને વિચારવા ગોગ્ય છે. કૃષ્ણુરામ મહારાજની કવિતા ઘણી ખરી પહેલ વહેલીજ પ્રસિદ્ધ થાય છે; તે જીજ્ઞાસુને આનંદ આપશે.

---

અમદાવાદ. તા. ૨૯-૫-૧૯૧૫.

રા. રા. ભાઇશંકર નાનાભાઈ સોલીસીટર સાહેબ લખે છે:—

આપે "શ્રી જ્ઞાન ચિંતામણિ" ગ્રંથમાં પ્રાચીન અને અર્વાચીન કવિઓની કવિતાઓનો સંગ્રહ કર્યો છે તેમાં આપે એકજ ઉદ્દેશ રાખ્યો છે અને તે એકે આપે મેળવેલા જ્ઞાનનો બોધ સહેલાઇથી ગ્રહસ્થાશ્રમિઓને થાય અને તેમાં હું આપને યશ મળો એમ ઇચ્છું છું. એ આપના સંગ્રહનું અને મનનનું ફળ આપને તો મળીજ ચુક્યું છે એ વાત આપે પ્રારંભમાં આપે જે હિત શિક્ષા માલિકાની રચના કરી છે તે પુરતી સાબીતી આપે છે. આપનો પરિશ્રમ જોઇ હું ઘણો પ્રસન્ન થયો છું અને મારી ખાતરી છે કે એનું મનન વરને ઘણુંજ ઉપયોગી થઇ પડશે.

---

આણુંરોડ. તા. ૧૮-૫-૧૫.

સુપ્રસિદ્ધ સાક્ષર શ્રીયુત શીઘ્રકવિ સંઘવી નગીનદાસ પુરૂષોત્તમદાસનો અભિપ્રાયઃ—

પૂજ્ય શ્રી બ્રહ્મર્ષિ પંડિત શ્રી હરેરામ શર્મા.

નમસ્કારપૂર્વક નિવેદન કરવાનું કે આપનો સંગ્રહેલો "શ્રી જ્ઞાન-ચિંતામણિ" ગ્રંથ મેં અવલોક્યો છે. તેમાંના વિષય ઉત્તમ મર્યાદા-સ્થાપક છે.

આ જમાનામાં હિન્દુસંતાનોને પોતાના સદાચાર અને શિષ્ટાચારનું સંરક્ષણ કરવાની જે અતિ આવશ્યક્તા છે, તે જોતાં આપનો ગ્રંથ એક ખેતી સુકાતાં સુકાતાં વખતસર પડેલા વર્ષાદના જેવો છે. જન સમાજને વિનંતિ છે કે આ ગ્રંથનો લાભ લેઇ તેઓ પોતાના ધર્મ અને દેશની ખાતર હિંદુનાં લક્ષણ જાળવી રાખી પોતાનું પોત ગુમાવશે નહિ, તોજ ઉન્નતિ અને ઐશ્વર્યની પ્રાપ્તિ થશે.

---

અમદાવાદ. તા. ૧૯ મી મે સને ૧૯૧

રા. રા. જેઠાલાલ ચીમનલાલ સ્વામીનારાયણ, એમ. એ. લખે છે

(પ્રોફેસર ઓફ મેથેમેટીક્સ, ગુજરાત કૉલેજ, અમદાવાદ.)

બ્રહ્મર્ષિ પંડિત શ્રી હરેરામ સુન્નરામ શર્મા.

તરફથી પ્રસિદ્ધ થયેલો "શ્રી જ્ઞાન ચિંતામણિ" નામનો ગ્રંથ અ લોકનાર્થ મળ્યો છે. જણાવતાં આનન્દ થાય છે કે આ પુસ્તકમાં મહાત્મ ઓનાં ઉત્તમ પદોનો સંગ્રહ કરવામાં આવ્યો છે, જેના વાચનથી ધર્મ જ્ઞાન, વૈરાગ્યની અભિવૃદ્ધિ થઈ મનુષ્ય ઇહ પરત્ર પોતાનું શ્રેય સાધી શ છે. નરસિંહમેહેતા, ધીરાભક્ત, અખો દયારામ વિગેરે સુપ્રસિદ્ધ કવિઓએ ગુંથેલાં ભજનો પણ સારા પ્રમાણમાં આપ્યાં છે. વળી હિત શિક્ષાનાં એ એક વચનો એક લાખની કિંમતનાં છે. દાખલા તરીકે નીચેની કહેવત "માત્ર પુસ્તકો ભણવા જાણવાથીજ પંડિત થવાતું નથી, પણ તદનુસા યથાર્થ વર્તન કરવાથી પંડિત થવાય છે."

એકંદર પુસ્તક દરેક મુમુક્ષુએ સંગ્રહ કરવા યોગ્ય છે. સારા કા ઉપર છપાવેલું છે અને ટાઇપ પણ મોટા હોવાથી વાંચકને સુલભતા તેમ છે. અમે આવું ઉપયોગિ પુસ્તક પ્રસિદ્ધ કરવા માટે બ્રહ્મર્ષિને ધન્ય આપીએ છીએ અને આશા રાખીએ છીએ કે ગુજરાતની કદરદાન પ્ર તેનો સારો આવકાર આપશે. એજ.

---

મોરબી, શ્રાવણ વદી ૯, સંવત ૧૯

વે શા. સં. મહા મહોપાધ્યાય શીઘ્ર કવીશ્વર

શાસ્ત્રીજી શંકરલાલનો અભિપ્રાય.

ઉત્તમમાં ઉત્તમ ઉપદેશક, નીતિદર્શક, ઇશ્વરભક્તિવર્ધક અને સન્માર્ગ-દર્શક પ્રાચીન તથા અર્વાચીન મહા કવિઓની કવિતાઓ લોકોની દૃષ્ટિ આગળ મેલવી એજ ઉત્તમોત્તમ ઉપાય છે. અને તે ઉપાય આજે આ "જ્ઞાન ચિ

મણિ" છપાવી લોકોના કલ્યાણનું ઉદ્ધાર થવાનું સાધન સહેલું કરી આપ્યું છે.

"જ્ઞાનચિંતામણિ" એ જેવું નામ છે તેવાજ તેમાં ગુણ છે; તે ગ્રંથ વાંચવાથી અજ્ઞાનીને પણ જરૂર જ્ઞાનમાં ભક્તિ થયા વગર રહે નહિ એમ મારૂં માનવું છે. ટુંકામાં જ્ઞાનચિંતામણિ તે ખરેખર જ્ઞાનચિંતામણિજ છે. વિશેષ શું લખું? ઈશ્વર તે સત્કૃત્યનું ફળ આપને આપો.

તેમજ વેદાંતસમુચ્ચય પ્રસિદ્ધ કરીને પણ આપે અતિ ઉત્તમ લોક સેવા બજાવી છે એવું મારૂં માનવું છે, કારણ કે શ્રી શંકરાચાર્યે રચેલાં એટલાં બધાં પુસ્તકો સાથે ક્યાંથી મળી શકે. ઈશ્વર તે સત્કૃત્યનું ફળ એ આપને આપો. તથાસ્તુ.

---

જામનગર..

"ભારતમાર્તંડ વિદ્યાવાચસ્પતિ" વે. શા સં. શાસ્ત્રીજી હાથીભાઇ લખે છે:—

'શ્રી જ્ઞાનચિંતામણિ'માં ગુજરાતી પદો તથા કૃષ્ણરામ જેવા કવિઓની માર્મિક કવિતાઓની સાથે નરસિંહ મહેતાનાં અને કંઇ અભિનવ જણાતાં પદો પણ સદ્બોધદાયક છે. શિક્ષાઓ બધી સર્વને આ કલિકાલના વ્યામોહમાંથી જાગૃતિ આપે તેવી છે.

'વેદાન્તસમુચ્ચય'માં શ્રીમદ્ભગવત્પૂજ્યપાદપ્રણીત સ્તોત્રોનો તથા પ્રકરણ ગ્રંથોનો સારો સંગ્રહ કરવામાં આવ્યો છે, તે સાથે ઉપદેશસહસ્ત્રી જેવા અને વ્યાસસૂત્ર જેવા ગ્રંથો મૂલ માત્ર પણ મનનોપયોગી નાખવામાં આવ્યા છે. એકંદરે આપનો આ પ્રયત્ન સ્તુત્ય છે.

---

ભાવનગર. તા. ૨૭ ૮-૧૯.

પ્રોફેસર જે. જે. કુણીઆ લખે છેઃ—

ગ્રંથ હજી બરાબર વાંચી ગયો નથી, પણ જેટલો ભાગ જોયો તે પરથી જણાય છે કે સારગ્રાહક વાચક વર્ગને એમાંથી "ધર્મ" સાધનો તથા નીતિનાં સાધનો ન્યૂનાધિક અંશે પ્રાપ્ત થયા વિના રહે નથી.

આશા છે કે પ્રજાવર્ગ તરફથી એ "જ્ઞાનચિંતામણિ" ગ્રંથનો સત્કાર થશે.

---

વડોદરા, તા. ૩૧ ઓગષ્ટ ૧૯

દીવાન સાહેબ હરગોવિંદ દ્વારકાંદાસ કાંટાવાળા જણાવે છેઃ—

ધર્મજીજ્ઞાસુઓને બ્રહ્મર્ષિ પંડિત શ્રી હરેરામ શર્મા કૃત જ્ઞાનચિંતામણિ ઉપયોગી થઇ પડશે. તેમાં કૃષ્ણરામ મહારાજની અપ્રસિદ્ધ કવિતા વાંચવા લાયક છે. એ સિવાય પ્રીતમ, ધીરો, અખો, નરસિંહ, વગેરેની થોડી થોડી પ્રસાદી આપી છે તે સારી છે. વળી ગદ્યમાં હિતશિક્ષા ૧૦૮, મુમુક્ષુકંઠાભરણ અને જ્ઞાનભૂમિકાના લેખ મનન યોગ્ય છે.

---

વડોદરા.

સુપ્રસિદ્ધ સાક્ષર શ્રીયુત હીરાલાલભાઇ શ્રોફ લખે છેઃ—

આપનું રચેલું "જ્ઞાનચિંતામણિ" હું જોઇ ગયો છું. તેથી અત્યંત સંતોષ પ્રાપ્ત થયો છે; વિશેષે કરીને આપના ગદ્ય લેખો વાંચી મને ઘણો આનંદ થયો છે. આજકાલનાં નવીન સંસ્કારી સ્ત્રી પુરૂષોને તે વ્યાવહારિક અને હાલના દેશ કાળને અનુકૂળ નહીં લાગે તો તે સ્વાભાવિક છે, પણ સત્ય તે સત્યજ છે. સત્ય—વાસ્તવિક સત્ય-દેશકાલાતીત હોઈ સર્વ દેશકાળમાં અખંડ એક રસ રહે છે, અને સરલ પણ સચોટ ભાષામાં આપના અનુભવની સાક્ષી પુરતાં કેટલાંક તત્ત્વો એવી તો સરલ રીતે મુક્યાં છે કે તે વાંચ્યાથી અધિકારીને તો લાભ થયા વિના

છે. આ ભાગદ્વારા આપે જીજ્ઞાસુ અને મુમુક્ષુ અધિકારીઓ ઉપર અત્યંત ઉપકાર કર્યો છે.

કાવ્ય વિભાગના સંબંધમાં ખાસ શ્રીકૃષ્ણુરામ મહારાજનાં કાવ્યો ખેંચે છે. અત્યાર સુધીમાં એમનાં બહુજ થોડાં કાવ્યો પ્રસિદ્ધ થયાં છે. આપના સંગ્રહમાં એમનાં ઘણાં અપ્રસિદ્ધ કાવ્યો મુદ્રિત કરીને આપે ગુર્જર સાહિત્ય ઉપર ઘણો ઉપકાર કર્યો છે.

---

વડોદરા, અમદાવાદી પોળ તા. ૧૮-૮-૧૫

શ્રીયુત લલિત આ પ્રમાણે લખે છેઃ—

મને તો એ પુસ્તક બહુજ કામે લાગ્યું છે. તેમાંથી ભજનો લલકારે ને અનેક રસપિપાસુઓને સંભળાવું છું પણ મારા જેવા ભજનીનેજ ફક્ત લાગે એ પ્રિય થઇ પડે તેવું છે, ને તેટલા પૂરતું સાદર થાય તો તે કાંઈ ઓછી પરમાર્થ સેવા નથી. જૂનાં ને જૂની ઢબનાં ભજન કીર્તનોના રસ પ્રવાહનાં સ્નાન પાનની મજા તો માણે તેજ જાણી શકે.

"જ્ઞાનચિંતામણિ"માં આત્મગુંજનની સરાવટ ઘણે સ્થળે જામે છે ને તેજ વાત તેના રસગ્રાહકોને પૂરતી આકર્ષક છે.

---

મુંબાઇ. તા. ૧૯-૮-૧૫

સાક્ષર શ્રીયુત તનસુખરામભાઈ ત્રિપાઠી લખે છેઃ—

આપનો આ પ્રયાસ સ્તુત્ય અને બહુ લોકોપકારક છે. વર્તમાન કાલમાં બહુ ગ્રંથો ઇંદ્રિયોના સ્વાભાવિક વિનિપાતને પોષે એવા વિષયોથી ભરિત છપાય છે, ત્યારે આપનો ગ્રંથ તે મહાદોષને અંકુશમાં લાવવા સહાયભૂત થાય તેવો છે.

સારા વાચનની ઇચ્છા રાખનારાઓએ આ ગ્રંથ અવશ્ય સંગ્રહણીય છે.

---

મુંબઈ. તા ૧૯-૪-૧

રા. રા. હીરાલાલ ડાહ્યાભાઇ નાણાવટી, બી. એ. એલ એલ. બી

સોલીસીટર લખે છેઃ—

આપે મોકલાવેલો "જ્ઞાનચિંતામણિ" નામનો ગ્રંથ ઉપર ઉપર વાંચ્યો. એમાંનાં ઘણાં ખરાં પદો સનાતન ધર્મને અનુસરીને લખાયલાં વર્ણાશ્રમ ધર્મ પાળીને જ્ઞાન અને ભક્તિદ્વારા મોક્ષ કેવી રીતે પ્રાપ્ત શકે છે એ જાણવાની ઇચ્છા રાખનાર સજ્જનોને એ ગ્રંથ ઘણો ઉપયો થઇ પડશે સામાન્ય મનુષ્યોને ગદ્ય કરતાં પદ્ય વાંચવાનું પ્રિય લાગે છે નિયમથી "જ્ઞાનચિંતામણિ"નો લાભ સર્વ લઇ શકશે.

કૃષ્ણરામનાં ભજનો સો વર્ષ પહેલાં લખાયલાં જણાય છે, અને તે તેમાં ગુજરાતી ભાષાની શુદ્ધિપર હાલના જેવું ધ્યાન આપવામાં આ નથી એ સ્વાભાવિક છે.

---

સાન્તાક્રુઝ. તા. ૭-૮-૧૯

શ્રીયુત હીમતલાલભાઇ અંજારીયા લખે છેઃ—

કૃષ્ણરામનાં અપ્રસિદ્ધ કાવ્યો તેમાં પ્રસિદ્ધ કરવામાં આવ્યાં છે એક સારી સેવા સમજું છું. ઋષિરાજના નામનાં પણ સારી સંખ્યામાં અને તે પણ મેં અન્યત્ર જોયાં હોય એવું મને યાદ નથી. બીજાં ઘણાં અને જીજ્ઞાસુને સારૂં વાંચન પૂરૂં પાડે તેવાં કાવ્યો એ સંગ્રહમાં દેખા છે, અને તેથી તેનો સારો ઉપયોગ થશે એમ આશા રાખું છું.

હું તેનો ખસૂસ ઉપયોગ કરીશ એટલું કહી શકું.

---

સુપ્રસિદ્ધ વિદ્વાન રા. રા. કૃષ્ણલાલ મોહનલાલ ઝવેરી, એમ. એ. એલ. એલ. બી.

મોડર્ન રીવ્યુના સપ્ટેમ્બરના અંકમાં પોતાનો અભિપ્રાય ઇંગ્રેજીમાં આપે છે. તેનું ગુજરાતી ભાષાંતર આ પ્રમાણે છે

આ ( પુસ્તક ) ઘણે ભાગે કવિતાઓનો સંગ્રહ છે. પુસ્તકમાં કેટલુંક ગદ્ય પણ છે, અને તે નરસિંહમેહેતા, દયારામ, અખો, ધીરો, પ્રીતમ, દલપતરામ જેવા વિખ્યાત કવિઓ, અને એક કૃષ્ણરામ મહારાજ, જે તેવા બીજાઓ જેટલા પ્રસિદ્ધ નથી, છતાં જેણે ઘણુંજ સારૂં લખ્યું છે, તેઓના ગ્રંથોમાંથી ઉતારેલા છે. આ સંગ્રહનો ઉદ્દેશ ઉપદેશક અને બોધજનક છે, અને તે એવી સારી રીતે કરવામાં આવ્યો છે કે વાંચનારને પુસ્તક હાથમાં લેવાથી લાભ થાય, અને થોડાક નવરાશના વખતનો સારી રીતે ઉપયોગ કરી શકાય.

---

વાર્તાવારિધિ માસિકના અધિપતિ શ્રીયુત ગણપતરામભાઈ લખે છેઃ—

'શ્રી જ્ઞાનચિંતામણિ" ગ્રંથ કદ ડેમી, આઠ પેજી, ૭૫૨ પૃષ્ઠ, સારી છાપ, જાડા કાગળ અને પાકું મજબુત પુઠું એવા આ ધર્મ લેખનો સત્કાર કરતાં અપૂર્વ આનંદ ઉપજે છે. સંગ્રાહકે આ પુસ્તકમાં "હિતશિક્ષા રત્ન માલિકા"ના મથાળા નીચે અનેક ધર્મ નીતિ તત્વનાં સિદ્ધાંતો ગદ્યમાં આપ્યાં છે અને ત્યાર બાદ * * * પદ્યમાં તેવાં જ તત્વો આપવા સ્તુત્ય શ્રમ સેવ્યો છે; ઉપરાંત શ્રી કૃષ્ણરામ, પ્રીતમ, ધીરો, અખો, દયારામ, નરસિંહ આદિ ધર્મપ્રિય ભક્તોનાં પદ્યોનો સંગ્રહ કર્યો છે.

ગ્રન્થો ગમે તેવા તો સંખ્યાબંધ પ્રકટ થાય અને હોંસથી વંચાય, પરંતુ એ સ્વકર્તવ્યનું ભાન કરી સન્માર્ગે સ્થાપનાર સદ્ગ્રંથો જો તે ન હોય તો તે મોરના પિંછા સમાન જ શોભારૂપ છે. વાસ્તવ કંઇ કામના નહીંજ. આ ગ્રંથ બોધક અને નીતિધર્મદર્શક હોઇ પ્રત્યેક ધર્મપ્રિય કુટુંબે સંગ્રહવા યોગ્ય છે. અને આવો સારો ઉત્તમ ધર્મગ્રંથ પ્રસિદ્ધ કરવામાં જનસમુચ્ચય ઉપર પંડિત શ્રી હરેરામે એક સારો ઉપકાર કર્યો છે.

---

ॐ श्रीगणेशाय नमः ॐ॥
बवासीर कि दवा = नीमो नीकी
गुठलि = पाव भर = बकायनो चन
आधा पाव = २ = इन्नाय ची छोटी
आधा पाव = ३ = कत्न भी सौरो =
आधा पाव = ४ = हासि मरसोत =
पाव भर = ५ = इन पांचाजिनसांकु
कूटि कर = बेरिय प्रमांणकि गो
लीव नातनो = इक गोलि प्रतकाल =
इक मध्यानकालि = इक सांयकाल =
दुध क साथ = मिसरि = बार्यां डुक
साथ ले वो = लाल मिरचि = गुड़ = तेल
खटाई न खाना = इनका = प्रेजन
धातु बढ कि दवा =
बकरि क दुध को पींवो = पाव भर तो
जीन लेन इ = आठ वा दस रोज लेन
से = धातु गिणी बंद हे जावगी =
लाल मिरच पटाई = गुड़ = तेल नम
त खाना =
नारवा कि दवा =
मवकाकि बिठ = आधा पाव २१

गुड़• आधापाव= २= गोलमिरची
आधापाव=३=तिन् चीजमीतनाश कु
ट= कर= बोरीयमान= गोलीबंद्रो
इक गोलि: प्रतकाल एकसो थकाल=
दो न्यावेलांनेनी= नारवा जातारवगा
लुन= घटाइ=तेल=गुड़= नखाना
इम्रृतधाराबनावनी
एकतोलौ पीपलमिंट=१=एकतो
लो अजवायनकोसन=१=
एकतोलो=सुध कपुर=१=
तिनुं विजबराबरामिलानसु
अंमृतधाबनजावगा=
जोकिसीक चोटलागज्यावतो
लीरसाजीतोलाभर=१=हलदः
तोलाभर=१= गदाकडीतोलाभर=१
सुरंजकड•ला=२ तोलेतोला= ज्हारमोहो
राछताइ=मासा=६= गुगलन=तोला=४=
कालनौन= तोला=४=हलदी=१=तो
आठ चीजलगान से= पीसनाबा

